# OPINIONS

**The Head Pundit of Birbhum Zilla School ites—**

"......আপনার ব্যাখ্যাপুস্তক সর্ব্বাংশে সর্ব্ববিষয়ে উৎকৃষ্ট....... ণালীক্রমে নূতন ধরণে বিশুদ্ধভাবে লিখিত .....প্রতিপাদ্য বিষয়গুলি পে বুঝাইয়া দিয়াছেন, যে তাহা পাঠ করিয়া আপনাকে অন্তরের ত ধন্যবাদ না দিয়া থাকিতে পারিলাম না। "মিতভাষিণী" কেবল খ্যা পুস্তক হয় নাই, উহা একটি .....অভিজ্ঞ শিক্ষকরূপে অবতীর্ণ াছে বলিলে অত্যুক্তি হইবে না। পাঠ্যপুস্তকের যে অংশটী জটিল ছাত্রগণকে অবশ্যই বিশদভাবে বুঝাইতে হইবে ...আপনি তাহা াগ না করিয়া বুঝাইবার চেষ্টা করিয়াছেন ও তাহাতে কৃতকার্য্য াছেন......বুদ্ধিমান ছাত্রগণও শিক্ষকের সাহায্য ব্যতিরেকে কেবল তভাষিণী" পাঠ করিয়াই পরীক্ষোত্তীর্ণ হইতে পারিবে.....প্রচলিত খ্যা পুস্তক সকলের সহিত "মিতভাষিণী"র স্থানে স্থানে বিরোধ য়াছে দেখিলাম, কিন্তু সেই সেই স্থলেই আপনার পাণ্ডিত্য ও গ্যতার পরিচয় প্রকাশিত হইয়াছে।.... বাঙ্গালা ভাষায় সংক্ষেপে ার করিয়া আরও ভাল করিয়াছেন......"

**The Head Pundit of Sivasundari Academy rites—**

"......মিতভাষিণীতে যাহা আশা করি তাহাই পাইয়াছি। রঘুবংশ কুক্তির ব্যাখ্যা দেখিয়া মনে করিতাম আপনি Matriculation এর স্কৃত পুস্তকে হস্তক্ষেপ করিলে বিদ্যার্থিগণের প্রকৃত অভাব বিদূরিত বে। আজ সেই শুভ দিন উপস্থিত। .....ব্যাখ্যাকারগণ প্রায়ই হু স্থলে 'সুগমম্' করিয়া থাকেন অথবা কিছু লেখেন না। আপনার কো হয় নাই।..... বিশেষণ গুলির যে ভাবে প্রকৃতার্থ উদ্ঘাটন রিয়াছেন ঐরূপ না হইলে বিদ্যার্থিগণ কিছুই বুঝিতে পারে না....য বে মন্তব্য প্রকাশ করিয়াছেন; তাহা আরও প্রকৃতার্থ প্রকাশিত হইয়া দ্যার্থিগণকে বিমুগ্ধ করিয়াছে।"

# PREFACE

The publication of this book has been unusually delayed owing to my illness, and I am really sorry for this.

This part along with our part on Sandhi completes the first volume of Siddhanta-Kaumudi.

The Ganas of this part are given in their respective places under the Mitabhashani Tika. The Index on the Sutras will be given when the book is completed.

The manuscript of the portion on Taddhita is being prepared by me and this volume completing the ~~Uttara~~rddha of Siddhanta-Kaumudi will be out in July, 1934.

Sometimes in easy passages explanation of Dikshita is given along with his Vritti in brackets and mostly in small types.

Errors and inconsistencies, it is impossible to avoid in such a work. So the author will be

obliged if any of his esteemed readers will kindly point these out to him to be rectified in the next edition.

Calcutta
April, 1933.

Kumudranjan Ray.

---

( अथ शब्दप्रकरणम् )

# अथ अजन्तपुलिङ्गप्रकरणम्



**१७८ । अर्थवदधातुरप्रत्ययः प्रातिपदिकम् ॥ १।२।४५ ॥**

**दी—। धातुं प्रत्ययं प्रत्ययान्तञ्च वर्जयित्वा अर्थवत् शब्दस्वरूपं प्रातिपदिकसंज्ञं स्यात्।**

A प्रातिपदिक is a significant form of word which is not a verbal root, or an affix, or what ends with an affix.

मित—। अर्थशब्दः अभिधेयवचनः। 'अर्थवत्' अभिधेययुक्तं 'शब्दस्वरूपं ध्वनिविशेषः 'प्रातिपदिकसंज्ञं' स्यात्' प्रातिपदिकमित्युच्यते। इह बहवः किल शब्दा अर्थवन्तो दृश्यन्ते। तद्यथा—जलादीनि नामानि अर्थवन्ति। भूप्रभृतयो धातवः अर्थवन्तः। अर्थवन्तश्च घञादयः प्रत्ययाः। प्रत्ययान्ताश्च पातादयः अर्थवन्तः। तथा प्रत्ययान्तानां समुदायोपि—राज्ञः पुरुषः—जलंपिब—इतेत्रवमादि अर्थवान्। तत्र किमविशेषेण सर्वेषामेवैषामर्थवतामियं संज्ञा? न, इत्याह 'अधातुः अप्रत्ययः' धातुं प्रत्ययञ्च वर्जयित्वा। प्रत्यय इति तदन्तविधिना प्रत्ययान्तोऽपि गृह्यते। एतेन नामानि प्रत्ययान्तसमुदायश्च संज्ञित्वेन शिष्यन्ते। तेष्वपि विशेषमुत्तरसूत्रे वक्ष्यति।

**१७९ । कृत्तद्धितसमासाश्च ॥ १।२।४६ ॥**

**दी—। कृत्तद्धितान्तौ समासाश्च प्रातिपदिकसंज्ञाः स्युः। पूर्वसूत्रेण सिद्धे समासग्रहणं नियमार्थम्। यत्र संघाते पूर्वो भागः पदम्, तस्य चेद्भवति तर्हि समासस्यैव। तेन वाक्यस्य न। गामानय।**

Words ending in कृत् or तद्धित and समास as well are designated as प्रातिपदिक। A समास being अर्थवत् the preceding rule gives it the designation, hence its specific mention here implies a restriction, viz, if in a group of प्रत्ययान्त words the pen-ultimate is a पद and if the संज्ञा is desired of such a group, then Samasas alone will get the संज्ञा। Thus a वाक्य does not receive the संज्ञा। Witness ग्रामानय where the pen-ultimate is a पद, but the whole is not a समास consequently ग्रामानय is not a प्रातिपदिक, so ग्राम् does not elide its विभक्ति।

मित—। कृत् इति कृदन्तः, तद्धितस्तद्धितान्तः। पूर्वसूत्रे प्रत्ययान्तपर्युदासात् एतयोरप्राप्ता संज्ञा इह विधीयते। तिङ् तु न कृत् तेन तिङन्तानां न संज्ञा। सुपः प्रायेण स्त्रीप्रत्ययाश्च न तद्धिताः तेन सुबन्तानां स्त्रीप्रत्ययान्तानाञ्च न संज्ञा॥ समासस्तु प्रत्ययान्तानाम् अर्थवान् संघातविशेषः इति पूर्वेणैव सिद्धा संज्ञा। तर्हि 'नियमार्थम् इह समासग्रहणम्'। कीदृशो नियम इत्याह 'यत्र संघाते पूर्वो भागः' उपान्त्य अंशः 'पदम्' अन्त्यो भागः पदं भवतु वा न वा 'तस्य चेद्भवति' तादृशस्य संघातस्य यदि संज्ञा प्रार्थ्यते 'तर्हि समासस्यैव' तस्य समाससंज्ञायां सत्यामेव प्रातिपदिकसंज्ञा अपि भवति, नान्यथा। 'ग्रामानय' इत्यत्र समाससंज्ञा नास्ति तेनास्य संघातस्य प्रातिपदिकसंज्ञा अपि न भवति॥

**१८०। प्रत्ययः॥ ३।१।६॥**

**दी—। आ पञ्चमपरिसमाप्तेरधिकारोऽयम्।**

From here to the end of the fifth chapter ( in Panini's arrangement ) the general name "प्रत्यय" attaches to whatever is enjoined. This is pervasive ( अधिकार )।

मित—। 'प्रत्ययः' इति सामान्येन नाम। 'पञ्चम' इति अष्टाध्याय्याः

पञ्चमोऽध्यायः। तृतीयादारभ्य पञ्चमपरिसमाप्तिपर्य्यन्तं यत् यत् विहितं तत् तत् प्रत्ययसंज्ञं भवति इत्यर्थः। यस्य यस्य विहितं स स प्रकृतिसंज्ञकः इत्यपि द्रष्टव्यम्।

## १८१। परश्च ॥ ३।१।२ ॥

दी—। अयमपि तथा।

And it is attached behind that of which it is enjoined. This too is pervasive.

मित—। योऽयं प्रत्ययो विहितस्तस्य स्थानमनेन नियम्यते। यः प्रत्ययो यस्याः प्रकृतेर्विहितः स तस्याः परं प्रयोक्तव्यः इत्यर्थः।

## १८२। ङ्याप्प्रातिपदिकात् ॥ ४।१।१ ॥

**दी—। ङ्यन्तादाबन्तात् प्रातिपदिकाच्च इति आ पञ्चमपरिसमाप्तेरधिकारः। "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्" इत्येव सिद्धे ङ्याब्ग्रहणं ङ्याबन्तात् तद्धितोत्पत्तिर्यथा स्यात्, ङ्याब्भ्यां प्राक् मा भूदित्येवमर्थम्।**

This pervades all up to the end of the fifth chapter. Every प्रत्यय enjoined within this range is to be attached to a प्रातिपदिक or to what ends is ङी or आप् (i. e., ends in a स्त्रीप्रत्यय)। Well, there is the maxim "when operating upon a प्रातिपदिक we may take it in all genders"; hence प्रातिपदिकात् includes ङ्यन्त and आबन्त प्रातिपदिक also. Why not then shorten the rule into "प्रातिपदिकात्" only, why specifically mention ङ्याप् in it? The answer is—Panini wants to emphasise ङ्याप् in the case of a तद्धित। A तद्धित has to come after ङ्याप्, never before.

N. B.—ङ्याप् in the rule stands for a स्त्रीप्रत्यय in general.

मित—। ङी इति ङीप्‌ङीष्‌ङीनां सामान्येन ग्रहणम्। आप् इति टाब्डाप्चापाम्। ङी च आप् च प्रातिपदिकञ्च ङ्याप्प्रातिपदिकम्। समाहारद्वन्द्वः। तस्मात्। "ङ्याब्ग्रहणं स्त्रीप्रत्ययमात्रस्योपलक्षणम्" इति नागेशः। ङ्यापः ङ्याप्प्रत्ययान्ताः स्त्रीप्रत्ययान्ता इत्यर्थः। तदयमर्थः—अतः परं वक्ष्यमाणाः प्रत्ययाः प्रातिपदिकेभ्यः स्त्रीप्रत्ययान्तेभ्यश्च प्रकृतिभ्यो भवन्ति। एष चतुर्थपञ्चमस्थानां प्रत्ययानां प्रकृतिनिर्णयः॥ ननु "प्रातिपदिकग्रहणे—" इत्यनया परिभाषया यत् किञ्चित् अविशेषेण प्रातिपदिकस्य उक्तं तत् स्त्रियां वर्त्तमानस्यापि तस्य भवति, तत् व्यर्थमिह ङ्याब्ग्रहणं सूत्रे, "प्रातिपदिकात्" इत्येतावदेव सूत्रं भवतु, इत्याशङ्क्याह 'ङ्याब्ग्रहणं ङ्याबन्तात्' इत्यादि। 'ङ्याप्' इति विशिष्यवचनात् "ङ्याब्भ्यां तद्धिताः" इत्यर्थो लभ्यते, तस्य च 'ङ्याब्भ्यां प्राक्' तद्धितो 'मा भूत्' इत्यर्थः सम्पद्यते। यदा खलु कस्याश्चित् प्रकृतेस्तद्धितस्य स्त्रीप्रत्ययस्य युगपत् प्राप्तिः तदा प्रथमं तद्धितः क्रियतां स्त्रीप्रत्ययो वा इति सन्देहे इयं व्यवस्था—प्रथमं स्त्रीप्रत्ययो भवति ततस्तद्धितः इति। तथा च प्रकर्षेण कालवर्णयुक्ता स्त्री इति वक्तव्ये कालशब्दात् प्रातिपदिकात् स्त्रीत्वमाश्रित्य स्त्रीप्रत्ययः प्राप्तः प्रकर्षमाश्रित्य च आतिशायनिकस्तद्धितः। प्रथमं तद्धिते कृते पश्चात् स्त्रीप्रत्यये कालतरा इति रूपं भवति। प्राक् स्त्रीप्रत्यये तु कालितरा इति। कालितरा इत्येव प्रार्थ्यते, तच्च अन्तरेण प्रागुक्तां व्यवस्थां न सम्भवति। तत् युक्ता एव 'ङ्याप्' इति विशेषोक्तिः॥ इतश्च युक्ता यत् 'ङ्याप्' इत्यनुक्ते "प्रातिपदिकात्" इत्येतन्मात्रेण स्त्रीप्रत्ययान्तात् सुबुत्पत्तिर्न भवति, प्रत्ययान्तपर्युदासात् न हि स्त्रीप्रत्ययान्ताः प्रातिपदिकानि॥

## १८३। स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप्॥ ४।१।२॥

**दी—। ङ्यन्तादाबन्तात् प्रातिपदिकाच्च परे स्वादयः प्रत्ययाः स्युः। सुङस्योरुकारेकारौ जश्टङपाश्च इतः।**

The affixes headed by सु above come after a प्रातिपदिक and also after what ends in ङी or आप् (all feminine affixes). The affixes are सु, औ, जस्, अम्, औट्, शस् टा, भ्याम्, भिस्, ङे, भ्याम्, भ्यस्, ङसि, भ्याम्, भ्यस्, ङस्, ओस्, आम्, ङि, ओस्, सुप् in order. Of these the उ in सु, इ in ङसि, ज, श, ट, ङ and प are इत्।

मित—। ङ्यन्तादाबन्तादित्यस्य स्त्रीप्रत्ययान्तादित्यर्थः। "प्रत्ययः" इत्यधिकारः, तेन स्वादयः प्रत्ययाः ङ्याप्प्रातिपदिकाः प्रकृतयः। किञ्च "न हि केवला प्रकृतिः प्रयुज्यते न वा केवलः प्रत्ययः" इति हि मुनीनामुपदेशः। तेन लौकिकोक्तिषु ङ्याप्प्रातिपदिकानां प्रयोगे परतः स्वादयो योजयितव्या इति सूत्रार्थः।

**१८४। विभक्तिश्च ॥ १।४।१०४ ॥**

**दी—। सुप्तिङौ विभक्तिसंज्ञौ स्तः। तत्र "सु" "औ" "जस्" इत्यादीनां सप्तानां त्रिकाणां प्रथमादयः सप्तम्यन्ताः प्राचां संज्ञा। ताभिरिहापि व्यवहारः।**

The set of Pratyayas known as सुप् and तिङ् are also called विभक्ति। Here सुप् is a प्रत्याहार including all the Vibhaktis from सु to प् in rule 183. Similarly तिङ् stands for all from ति to ङ् in the rule "तिप्तस्—" (2154 ; 3. 4. 78). If the group सुप् is re-grouped taking three at a time from the beginning in order, we get seven triads सु औ जस् &c. The older grammarians have called them प्रथमा, द्वितीया, तृतीया, चतुर्थी पञ्चमी, षष्ठी, सप्तमी in order. These names are adopted in the system of Panini also.

मित—। 'सुप्' इति स्वादीनामेकविंशतेः प्रत्याहारः, 'तिङ्' इति तिबादीनाम् (२१६५, ३।४।७८) अष्टादशानाम्। विभक्तिविभागः। यदा स्वादयो विभज्यन्ते तदा विभागानां विभक्तिसंज्ञा। विभक्तिसंज्ञया प्रत्ययसंज्ञा न हीयते।

विभक्तिसंज्ञकाः प्रत्यया एते इति समावेशः। स्वादय एकविंशतिक एकः सङ्घः विभज्य तु सप्तसु त्रिकेषु सङ्घेषु स्थाप्यन्ते। तत्र सु औ जस् इति त्रिकः प्रथमो विभागः प्रथमा विभक्तिः अम् औट् शस् इति द्वितीया इत्यादि। प्राचामेताः संज्ञा पाणिनिनाप्यङ्गीकृताः।

१८५। सुपः ॥ १।४।१०३ ॥

**दी—। सुपस्त्रीणित्रीणि वचनानि एकश एकवचनद्विवचनबहुवचन-संज्ञानि स्युः।**

"Of 'sup' let the three expressions in each successive set of three be severally termed "the expression for one" (singular), "the expression for two" ( dual ), and "the expression for many ( plural )."—Ballantyne.

मित—। "तान्येकवचनद्विवचनबहुवचनान्येकशः" इति पूर्वसूत्रमनुवर्त्तते। अन्वयस्तु—सुपः तानि एकशः एकवचनद्विवचनबहुवचनानि—इति। सुप् इति स्वादीनां प्रत्याहारः। तस्य। शेषे षष्ठी; 'सुपः तानि' इति सम्बन्धः। तत्र 'तानि' इति सर्वनाम्ना "तिङस्त्रीणित्रीणि प्रथममध्यमोत्तमाः" इति सूत्रस्थ 'त्रीणि त्रीणि' इति परामृश्यते। तदाह—'सुपस्त्रीणित्रीणि' इत्यादि। 'वचनानि' विभक्तयः। प्रत्ययसंज्ञा विभक्तिसंज्ञा च उक्ता। परं 'त्रीणि इति क्लीवनिर्देशानुरोधात् उभे अपि ते हित्वा क्लीवे एव 'वचनानि' इति विशेष्यमाह। 'त्रीणि त्रीणि' इति वीप्सायां द्विरुक्तिः। प्रथमादयः सप्तम्यन्ता ये त्रिकाः प्रदर्शिताः तेषां प्रतित्रिकमित्यर्थः। किं त्रिकस्यैव संज्ञा? न इत्याह 'एकशः' इति। त्रिकस्यास्य अवयवत्रयस्य यथाक्रमम् एकवचनद्विवचनबहुवचनसंज्ञा। इह एकमेकमवयवा गण्यन्ते, तत् एकत्वस्य वीप्सा अस्ति इति वीप्सायां शस्॥ स्वादीनां सप्तसु त्रिकेषु प्रतित्रिकं यास्तिस्रो विभक्तयस्तासां यथाक्रमम् आद्यस्य एकवचनं मध्यस्य द्विवचनम् अन्त्यस्य बहुवचनमिति संज्ञा इति सरलार्थः॥ एतावता प्रथमायां सु इत्येकवचनम् औ

इति द्विवचनं जस् इति बहुवचनम्। द्वितीयायाम् अम् इत्येकवचनम् औट् इति द्विवचनम् शस् इति बहुवचनम्। एवमुत्तरत्रापि॥

## १८६। द्व्येकयोर्द्विवचनैकवचने॥ १।४।२२॥

दी—। द्वित्वैकत्वयोरेतौ स्तः।

If duality is intended we shall have द्विवचन and एकवचन in case of singularity.

मित—। द्विशब्द इह द्वित्वे एकशब्दश्च एकत्वे प्रयुक्तः। तदाह द्वित्वैकत्वयोरित्यादि। येषु अर्थेषु विभक्तयो विहितास्तेषामेकत्वे विवक्षिते एकवचनं द्वित्वे द्विवचनम् इति वचनव्यवस्था। एकः उच्यते अनेन इत्यादि करणे ल्युट्।

## १८७। बहुषु बहुवचनम्॥ १।४।२१॥

दी—। बहुत्वे एतत् स्यात्। रुत्वविसर्गौ। रामः।

In case of plurality there will be बहुवचन। Rama in the example means a portrait of Rama, the affix कन् having disappeared. In the प्रथमा, if one portrait is meant, we attach एकवचन, i. e., सु। The उ elides (इत्) leaving रामस्। Next we have रु (i. e., र् after the elision of उ) for स् by "ससजुषो रुः" (162,—8. 2. 66). This gives रामर् and by "खरवसानयोर्विसर्जनीयः" (76,—8. 3. 15) र् changes into विसर्ग yielding रामः—a single Rama.

मित—। बहुषु बहुत्वे इत्यर्थः। सौत्रं बहुवचनम्॥ राम इति अर्चार्थं भगवतः प्रतिकृतिः। राम इव रामः। "इवे प्रतिकृतौ लोपः" इति कनो लोपः एकैव प्रतिकृतिः इत्यर्थः; प्रथमाया एकवचने सु इति उकारस्य इत्त्वे रामस् इति स्थितम्। ततः सकारस्य रुत्वे रामर् इति। रकारस्य च विसर्गे रामः इति

रूपम् ॥ अथ द्वे प्रतिकृती, कथमभिधानं तयोः ? उच्यते—"प्रत्यर्थं शब्दनिवेशः" इति भाष्योक्तेः एकेन प्रातिपदिकेन रामशब्देन एकस्य अर्थस्य प्रतिकृतिरूपस्य अभिधानं ततो द्वितीयेन रामशब्देन द्वितीयस्य अर्थस्य। एतेन "रामराम" इति प्रातिपदिकद्वयं प्राप्तम्, अर्थश्च प्रतिकृतिद्वयम्। अर्थवत्तया "रामराम" इति सङ्घातोऽपि प्रातिपदिकमेव। तेन "ङ्याप्प्रातिपदिकात्" इति सुबुत्पत्तिः। अर्थस्य द्वित्वात् द्विवचने औ इति विभक्तिः। ततः रामराम औ इति प्राप्ते—

**१८८। सरूपाणामेकशेष एकविभक्तौ ॥ १।२।६४ ॥**

**दी—। एकविभक्तौ यानि सरूपाण्येव दृष्टानि तेषामेक एव शिष्यते। "प्रथमयोः पूर्वसवर्णः" (१६३,—६।१।१०२) "नादिचि" (१६५,—६।१।१०४)। "वृद्धिरेचि" (७२,—६।१।८८)। रामौ।**

Of those that have always the same form whenever the same Vibhaktis is attached, only one is retained if several come together. Thus रामराम औ becomes राम औ retaining only one राम। वृद्धि is now expected from "वृद्धिरेचि", but "प्रथमयोः पूर्वसवर्णः" interferes and directs आ for अ and औ jointly. The rule "प्रथमयोः—" however is narrowed downby "नादिचि" which bars it when इच्, follows अवर्ण। The bar to वृद्धि being thus removed we get रामौ by वृद्धि।

मित—। रूपमिति लिखितेषु चक्षुर्ग्राह्यम् उच्चारितेषु श्रोत्रग्राह्यम्। समानं रूपमेषां 'सरूपाः'। तेषाम्। तुल्यमूर्त्तीनामित्यर्थः। इह रूपे ग्रहः न अर्थे भिन्नेऽपि अर्थे भवति। तथा च पादा इति किरणेऽपि चरणेऽपि युगपदेव। 'एकशेषः' इत्यत्र एकशब्दः असहायवाची। अनेकष्वपिसम्प्राप्तेषु एकः शिष्यते इत्यर्थः; 'एकविभक्तौ' इत्यत्र तु तुल्यवाची; एतेन रामराम औ इत्यत्र राम औ इति शेषः। ततो वृद्धौ रामौ इति रूपम्। "प्रथमयोः—" इति बाधस्तु "नादिचि" इति अनेन बाध्यते।

सुक्तौ बाधे वृद्धिः प्रवर्त्तते ॥ बहुषु अर्थेषु राम राम राम जस् इत्यादिषु प्राप्तेषु राम जस् इति शेषः। ततः—

१८९। चुटू ॥ १।३।७।

दी—। प्रत्ययाद्यौ चुटू इतौ स्तः इति जस्य इत् संज्ञायाम्।

चवर्ग and टवर्ग leading in a प्रत्यय are इत्। Hence ज is an इत्। This gives राम अस्। Now स् being final is expected to be इत्, but—

मित—। "उपदेशेऽजनुनासिक इत्" इत्यतः 'इत्' इति, "आदिर्ञिटुडवः" इत्यतः 'आदिः' इति "षः प्रत्ययस्य" इत्यतः 'प्रत्ययस्य' इति च अनुवर्त्तते। 'चु' इति चवर्गः, 'टु' इति टवर्गः। 'चुटू' इति द्वन्द्वः। द्विवचनानुरोधात् अनुवृत्तानामपि द्विवचनम्। तदाह "प्रत्ययाद्यौ—" इत्यादि। "जस्य इत्संज्ञायाम्" इत्यतः परं "लोपः" इति ग्रन्थः स्खलितः प्रतिभाति। जकारे लुप्ते राम अस् इति जातम्। तत्र अन्त्यत्वात् सकारस्यापि इत्वे प्राप्ते—

१९०। न विभक्तौ तुस्माः ॥ १।३।४ ॥

दी—। विभक्तिस्थास्तवर्गसकारमकाराः इतो न स्युः इति सकारस्य न इत्त्वम्।

तवर्ग, स and म in a विभक्ति are not इत्। Hence स is not इत्। Now राम अस् seems to call for "अकः सवर्णे दीर्घः", but—

मित—। 'सकारस्य न इत्वं' तेन अस् इत्येव विभक्तिः। राम अस् इत्यत्र "अकः सवर्णे—" इति प्राप्ते—

१९१। अतो गुणे ॥ ६।१।९१ ॥

दी—। अपदान्तादकारात् गुणे परतः पररूपमेकादेशः स्यात् इति प्राप्ते, परत्वात् पूर्वसवर्णदीर्घः। "अतो गुणे" इति हि "पुरस्तादपवादा

अनन्तरान् विधीन् बाधन्ते नोत्तरान्" इति न्यायेन "अकः सवर्णे दीर्घः" (८६,—६।१।१०१) इत्यस्यैव अपवादः, न तु "प्रथमयोः—" (१६४,—६।१।१०२) इत्यस्यापि। रामाः।

The form of the latter is the single substitute for short अ, not final in a पद, and a गुण letter following it. This seems to give us राम् (अ अ) स्=राम् (अ) स्=रामः। But "प्रथमयोः—" comes later and overrules "अतो गुणे"। Thus with पूर्वसवर्णदीर्घ we have राम अस्=रामाः। How can this be? "अतो गुणे" is an अपवादसूत्र of "प्रथमयोः—", being of lesser scope than the latter; It is also an अपवाद of "अकः सवर्णे दीर्घः"। But one same sutra can not be a bar of two sutras simultaneously. So by the maxim "the अपवादसूत्र put prior bars the immediately following one, and not subsequent ones as well", 'अतो गुणे' bars "अकः सवर्णे" only and not "प्रथमयोः पूर्वसवर्णः" also. So "प्रथमयोः" operating here in राम अस् we get रामाः।

मित—। "उस्यपदान्तात्" (पा ६।१।९६) इत्यतः 'अपदान्तात्', "एङिपररूपम्" इत्यतः 'पररूपम्' इति च अनुवर्त्तते। ततः 'अपदान्तात् अतः' अकारात् इत्यर्थः 'गुणे' परतः पूर्वपरयोः स्थाने 'पररूपम्' एकादेशः स्यात् इति सूत्रार्थः स्यात्। वस्तुतश्च "प्रथमयोः पूर्वसवर्णः" इति हि सूत्रम् परम्, "अतो गुणे" इत्यतः परत्वात् अत्र परेणैव पूर्वसवर्णदीर्घः स्यात्। अतः वृत्तौ आह "परत्वात् पूर्वसवर्णदीर्घः"॥ "अतोगुणे" इति सूत्रं यद्यपि "अकः सवर्णे दीर्घः" तथा "प्रथमयोः पूर्वसवर्णः" इति द्वयस्यापि बाधकम् प्रतीयते ताभ्यां विषयाल्पत्वात्, तथापि "पुरस्तात् अपवादाः अनन्तरान् विधीन् बाधन्ते नोत्तरान्" इति न्यायेन "अतोगुणे" इति सूत्रं "अकः सवर्णे दीर्घः" (६।१।१०१) इत्यस्यैव बाधकं स्यात् न तु व्यवहितस्य "प्रथमयोः" (६।१।१०२) इत्यस्यापि, अतः आह—"अतोगुणे इति हि" इत्यादि। एवं राम

अस् इत्यत्र "प्रथमयोः पूर्वसवर्णः" इत्यस्यैव सावकाशत्वात् पूर्वसवर्णदीर्घेण 'रामाः' इति स्यात् ॥

## १६२ । एकवचनं सम्बुद्धिः ॥ २।३।४९ ॥

**दी—। सम्बोधने प्रथमाया एकवचनं सम्बुद्धिसंज्ञं स्यात् ।**

In the matter of address, the singular form of the 1st case is designated as संबुद्धि ।

मित—। अत्र "प्रातिपदिकार्थलिङ्ग परिमाणवचन" ( २।३।४६ ) इत्यतः 'प्रथमा' अनुवर्त्तते । सा च विपरिणामेन षष्ठीविभक्तिं लभते ; ततः आह—सम्बोधनविषये प्रथमायाः एकवचनं संबुद्धिसंज्ञं भवति । अत्र 'प्रथमायाः' इत्यनुवर्त्तनात् "सुः संबुद्धिः" इति तत्त्वबोधिन्यामुक्तं न समीचीनं प्रतिभाति । हे राम इत्यत्र प्रथमैकवचनविभक्तौ सत्यां हे राम स् इति स्थिते आह—

## १६३ । एङ्ह्रस्वात् सम्बुद्धेः ॥ ६।१।६९ ॥

**दी—। एङन्तात् ह्रस्वान्तात् च अङ्गात् हल् लुप्यते सम्बुद्धेश्चेत् । सम्बुद्ध्या आक्षिप्तस्य अङ्गस्य एङ्ह्रस्वाभ्यां विशेषणात् नेह—हे कतरत् कुलेति । हे राम । हे रामौ । हे रामाः । एङ्ग्रहणं किम् ? हे हरे । हे विष्णो । अत्र हि परत्वात् नित्यत्वाच्च सम्बुद्धिगुणे कृते ह्रस्वात् परत्वं नास्ति ।**

A हल् ( i. e, a consonant ) elides coming after an एङन्त ( i. e., ending in ए and ओ ) अङ्ग ( i. e., base ) or a ह्रस्वान्त base, if that हल् be a part of संबुद्धि only. The अङ्ग which is characterised by the word संबुद्धि ( i. e., should be in संबुद्धि ) is further qualified with the qualifications "ending in एङ् or in ह्रस्व vowels"; so कतरत् in हे कतरत् कुल which does not end in ह्रस्व ( अ ), but takes अदड् in सम्बुद्धि by the rule

मित। अत्र "अचि" इत्यनुवृत्तिरस्ति। "अकः सवर्णे दीर्घः" इत्यस्मात् अकः" इत्यनुवर्त्तते। ततः फलितमाह—अकः अम्यचि परे पूर्वरूपम् एकादेशः स्यात्॥ 'अम्' इत्यस्य योऽच् तस्यादेशः न तु समुदायस्य अमूरूपस्य इत्याह— "अम्यचि"। "तस्मादित्युत्तरस्य" (१।१।६७) "आदेः परस्य" (१।१।६४) इत्यादिना तदेव लभ्यते। एवं सति अमो मकारसहितस्य पूर्वरूपं मा भूत् इति अजनुवृत्तिर्ज्ञापयति॥ राम शस् इति स्थिते—

## १९५। लशक्वतद्धिते। १।३।८॥

दी—। तद्धितवर्जप्रत्ययाद्या लशकवर्गाः इतः स्युः इति शसः शस्य इत् संज्ञा।

ल, श and कवर्ग words elide if these be the first words of affixes other than Taddhita. And by this rule "श" of शस् elides. [ N. B.—thus we get राम अस् ]।

मित—। ल, श कु इति समाहारद्वन्द्वः। 'अतद्धिते' इति षष्ठ्यर्थे सप्तमी। "उपदेशे अजनुनासिक इत्" इत्यतः "इत्" अनुवर्त्तते। "आदिर्ञिटुडवः" (१।३।६) इत्यतः "आदिः" अनुवर्त्तते। "षः प्रत्ययस्य" (१।३।६) इत्यतः 'प्रत्ययस्य', इत्यनुवर्त्तते। एवं तद्धितभिन्नस्य प्रत्ययस्य आदि लशकवर्गम् इत्संज्ञं भवति इति पूर्णं सूत्राङ्गम्। अतः वृत्तौ—तद्धितवर्जप्रत्ययाद्या लशकवर्गाः इत्यादि। अनेन शसो शकारस्य इत् संज्ञायाम् राम अस् इति स्थिते "प्रथमयोः पूर्वसवर्णः" इति 'पूर्वसवर्णदीर्घेण रामास् इति जाते—

## १९६। तस्माच्छसो नः पुंसि। ६।१।१०३॥

दी—। कृतपूर्वसवर्णदीर्घात् परो यः शसः सकारः तस्य नः स्यात् पुंसि।

The सकार of शस् becomes न in the masculine, when पूर्वसवर्ण-

दीर्घ by the rule "प्रथमयोः पूर्वं सवर्णः" is already done to the base । Thus we get रामान् । Now if cerebral in रामान् is apprehended we look forward.

मित—। 'तस्मात्' इत्यनेन पूर्वसूत्रस्थः ("प्रथमयोः पूर्वसवर्णः" इति) पूर्वसवर्णदीर्घः परामृश्यते । अध्याहार्य्यपरशब्दयोगे पञ्चमी । "शसो" इति अवयव षष्ठी । एतेन सकार एव गृह्यते । अतः आह—कृतपूर्वसवर्णदीर्घात् परो यः शसः- सकारः तस्य इत्यादि । पुंसि किम् ? मतीः । वधूः ॥ एवं रामास् इत्यस्य सकारस्य नकारे सति रामान् स्यात् । अत्र पुनः णत्वमाशङ्क्य आह—

१६७ । अट् कुप्वाङ् नुम् व्यवायेपि । ८।४।२ ॥

दी—। अट् कवर्ग पवर्ग आङ् नुम् च एतैः व्यस्तैर्यथासम्भवं मिलितैश्च व्यवधानेपि रषाभ्यां परस्य नस्य णः स्यात् समानपदे । "पद- व्यवायेपि" (८।४।३८—१०५७ सूत्रम्) इति निषेधं बाधितुमाङ्ग्रहणम् । नुम् ग्रहणमनुस्वारोपलक्षणार्थम् । तच्चाकर्त्तुं शक्यम्—अयोगवाहानाम् अट्सु उपदेशस्य उक्तत्वात् । इति (रामान् इत्यत्र) णत्वे प्राप्ते ।

मित—। "रषाभ्यां नोणः समानपदे" इति सम्पूर्णं सूत्रमनुवर्त्तते । एतद- नुसारिणी च वृत्तिः । अट् इति प्रत्याहारः स्वरवर्ण हयवराणांच ग्राहकः, कु इति कवर्गः, पु इति पवर्गः । अट् च कुश्च पुश्च आङ् च नुम् च इति द्वन्द्वः ; तैः व्यवाये व्यवधाने व्यस्तमिलिते च सति अपि रषाभ्यां परस्य नस्य णत्वं स्यात् इति मलितार्थः ॥ "पदव्यवायेपि" इति पदव्यवधाने णत्वस्य निषेधात् आङ्व्यवाये णत्वं न प्राप्नोति । अतो 'अट्' इति उक्त्वापि आङ् इति पृथक् वचनम् । एवं पर्य्याणद्धम् इति सिध्यति ॥ अनुस्वारस्य अडादौ अनन्तर्भावात् अट् इति उक्त्वा 'नुम्' इति पृथग्वचनम् । तृंहणम्, वृंहणम् इत्यादौ नुम् व्यवधानेपि यथा स्यात् । वस्तुतस्तु नुम्ग्रहणम् व्यर्थमित्याह— "अयोगवाहानाम्' अनुस्वारविसर्गादीनाम् हयवरट् सूत्रभाष्ये 'अट्सु उपदेशस्य' पाठस्य भाष्यकारेणैव उक्तत्वात् ॥ अविद्यमानः योगः वर्णसमाम्नाये इत्यर्थः येषां ते

अयोगाः अनुपदिष्टाः इत्यर्थः। वाहयन्ति इति वाहाः प्रयोगनिर्वाहकाः। अयोगाश्च ते वाहाश्च इति अयोगवाहाः अनुस्वारादयः इत्यर्थः॥

**१९८। पदान्तस्य। ८।४।३१॥**

**दी—। पदान्तस्य नस्य णत्वं न स्यात्। रामान्।**

न final in a पद does not become cerebral.

मित—। सुगमा॥ तृतीयाया एकवचने राम टा-इति स्थिते—

**१९९। यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्। १।४।१३॥**

**दी—। यः प्रत्ययः यस्मात् क्रियते तदादि शब्दस्वरूपं तस्मिन् प्रत्यये परे अङ्गसंज्ञं स्यात्। 'भवामि' 'भविष्यामि' इत्यादौ विकरणविशिष्टस्य अङ्गसंज्ञार्थं तदादि ग्रहणम्। "विधि" इति किम्? स्त्री इयती। प्रत्यये किम्? प्रत्ययविशिष्टस्य ततोऽप्यधिकस्य वा मा भूत्।**

The word after which a प्रत्यय is affixed, (or-is to beaffixed) is called an अङ्ग (i. e., base) if taken along with the प्रत्यय aswell, provided the प्रत्यय follows after it. The use of the word 'तदादि' in the sutra is for making अङ्गसंज्ञा of भव (and not of भू only) taken along with the विकरण शप्। Why do we note, विधि in प्रत्ययविधि in the sutra? Witness स्त्री इयती। If we do not use विधि in the sutra then इयती which is nothing but the remnant of वतुप् प्रत्यय—(original इदम् being elided so to say) will yield इयङ् after the word स्त्री। Thus विधि being used we have no scope for इयङ् at all by the sutra "स्त्रियाः" which see below. Why again do we say 'प्रत्यय' in the sutra? For then अङ्गत्व is not to be of प्रत्ययविशिष्ट word having no प्रत्यय after it or of other words more than a

प्रत्ययविशिष्ट word. [ प्रत्यये also thus signifies as said in Kasika, that अङ्गत्व is not to be of a प्रत्यय only or when the प्रत्यय elides ].

मित—। यस्मात् प्रत्ययः क्रियते तत आरभ्य प्रत्ययं यावत् यः सङ्घातः तत् अङ्गम्। प्रकृते समग्राया संज्ञा स्यात् इति "तदादीति" ग्रहणम् ॥ प्रत्ययस्य प्रत्ययलोपे च माभूत् इति "प्रत्यये" इत्याह—इति काशिकायां स्पष्टम् ॥ "भवामि" इत्यत्र शपि भू इत्यङ्गम्। मिपि तु 'भव' इति एतदर्थमपि 'तदादि' ग्रहणं कृतम् ॥ इयती इति इदम्+वतुप्= इदम्+घतुप् ("किमिदंभ्यां वो घः") = इ+इयत् ( "इद—किमोरीश्की" ) = इयत् ( "यस्येति च" इति ईकारलोपः ), + ङीप् = इयती। एवम् अत्र प्रत्ययमात्रमेवाव-शिष्यते। ततः स्त्री इयती इति दशायाम् 'इयती' इत्यस्य प्रत्ययमात्रस्वरूपात् "स्त्रियाः" इति सूत्रेण प्रत्यये सति इयङ् इति अङ्गकार्य्यं स्यात्। तद्वारणाय सूत्रे सार्थकं विधिग्रहणं कृतम्। सर्वमेतत् वृत्तिकारेण स्पष्टीकृतम् ॥ 'प्रत्यये' इति किमर्थम् सूत्रे गृहीतम्? प्रत्ययलोपे मा भूत्, प्रत्ययविशिष्टस्य वा मा भूत् ॥ सर्वमन्यत् सुगमम् ॥

## २०० । अङ्गस्य ।६।४।१ ॥

दी—। इत्यधिकृत्य।

This is an अधिकार सूत्र। That is what will be said below will be of अङ्ग only i.e. of words having प्रत्यय ( to be added ) after it. [ N. B.—Note the diff. of प्रातिपदिक and अङ्ग as already said ].

## २०१ । टाङसिङसामिनात्स्याः ।७।१।१२॥

दी। अकारान्तात् अङ्गात् टादीनां क्रमात् इनादयः आदेशाः स्युः। णत्वम्। रामेण।

टा, ङसि and ङस् coming after an अकारान्त base are respectively replaced by इन, आत् and स्य। Thus राम+टा = राम+इन = रामेण। णत्व here comes by the rule "अट्कुप्वाङ्नुम्व्यवायेपि"।

मित। सुगमा॥ अधुना राम+भ्याम् इत्यत्र "न विभक्तौ तुस्माः" इति मकारस्य न इत्वम्। ततः अत्र विशेषमाह—

## २०२। सुपि च। ७।३।१०२॥

**दी। यञादौ सुपि परे अतोऽङ्गस्य दीर्घः स्यात्। रामाभ्याम्।**

An अदन्त अङ्ग becomes lengthened when a सुप् (i. e. विभक्तिप्रत्यय) beginning with यञ् प्रत्याहार follows, Thus we have रामाभ्याम् with दीर्घ in रामा, for भ्याम् is a यञादि सुप्।

मित। "अतोदीर्घो यञि" (७।३।१०१) इति पूर्वसूत्रस्यात्र अनुवृत्तिः। "यञि" इति च 'सुपि' इत्यस्य विशेषणम्। अतः आह वृत्तौ—'यञादौ सुपि परे' इत्यादि। अतः किम्। हरिभ्याम्। अकारान्तलाभावात् नात्र दीर्घः। यञि किम्? रामस्य। 'स्य' तु न यञ् सुप्, अतो न दीर्घः॥ राम+भिस् इत्यत्र विशेषमाह—

## २०३। अतो भिस ऐस्। ७।१।९।

**दी। अकारान्तात् अङ्गात् भिस ऐस् स्यात्। अनेकाल्त्वात् सर्वादेशः। रामैः।**

भिस coming after an अकारान्त प्रातिपदिक is replaced by ऐस्। As the substitute ऐस् consists of more than one letter so ऐस् completely replaces भिस् by the rule "अनेकाल्शित्सर्वस्य" (पा १। १।५५); so we need not fear operation of the rule "अलोन्त्यस्य" (१।१।५२) here—making ऐस् an आदेश for the final letter of भिस। Thus राम+ऐस =रामैः।

मित—। "अनेकाल्शित्सर्वस्य" (१।१।५५) इत्यत्र ऐस् इत्यस्य अनेकाल्त्वात् सर्वस्यैव भिस आदेशः। न तु "अलोन्त्यस्य" इति अन्त्यादेशः कल्प्यः।

तदाह वृत्तौ—'अनेकाल्त्वात् सर्वादेशः' ॥ अत्र "बहुवचने झल्येत्" (७।१।१०३) इति परेण एत्वेन विप्रतिषेधेऽपि ऐस्। अनवकाशत्वात् ऐस्भावस्य। एत्वस्य तु रामेभ्यः रामेषु इत्यादिष्ववकाशः। एतेन ऐस् नित्यः। अतः परमपि एत्वं बाधित्वा ऐस्भावः भवत्येव ॥ राम+ए इति स्थिते—

**२०४। ङेर्यः।७।१।१३॥**

**दी।—अतोऽङ्गात् परस्य 'ङे' इत्यस्य यादेशः स्यात्। रामाय। इह स्थानिवद्भावेन यादेशस्य सुप्त्वात् "सुपिच" (२०२) इति दीर्घः॥ "सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य" इति परिभाषा तु नेह प्रवर्त्तते। "कष्टाय क्रमणे" (२६७० सूत्रम्) इत्यादिनिर्देशेन तस्याः अनित्यत्वज्ञापनात्॥ रामाभ्याम्।**

य is the substitute for 'ङे' (4th case singular विभक्ति) coming after an अकारान्त अङ्ग (base). Thus राम+य=रामाय। Here यादेश is like that for which it is substituted i.e. it is like ङे—by the rule 'स्थानिवत् आदेशोऽनल्विधौ" (१।१।५६), then by the application of the rule "सुपिच" we get दीर्घ in रामाय।

[ N. B.—Here य is the substitute for ङे which is a सुप्; so य also is treated as सुप् and as it begins with य so we get दीर्घ here by the rule "सुपिच"। ]

Now there is the dictum that— an operation coming through connection with another does not destroy the connection-cause, i. e. an operation does not destroy the root-cause of the operation (i. e. a son does not kill his father, the root-cause )—which if applied here may do away with दीर्घ here in रामाय। For, य in place of ङे coming through connection with अदन्तत्व of राम here, should

not destroy the अदन्तत्व of राम here and yield रामाय with दीर्घ। But on this the answer is—that this dictum (परिभाषा) has no application here; for Panini himself by using 'कष्टाय' in the Sutra "कष्टाय क्रमणे" indicates so. Now we have रामाभ्याम् for the dual as in 3rd case dual which see under "सुपिच" before.

मित। "ङेः" इत्येकारान्तस्य षष्ठ्येकवचनम्। एवं च वृत्तौ व्याख्यानं वर्त्तते। "अतो भिस ऐस्" (७।१।९) इत्यतः 'अतः' इति पञ्चम्यन्तम् अनुवर्त्तते, ततः वृत्तौ आह—'अतोऽङ्गात् परस्य ङे इत्यस्य' इति॥ "स्थानिवदादेशः अनल्विधौ" (१।१।५६) इति 'ङे' इति अलम् आश्रित्य यादेशः अपि ङे-वत्। तत अस्य सुपि अन्तर्भावात् 'सुप्त्वात्' अत्र "सुपिच" इति सूत्रप्रवृत्तिरस्ति। एवं रामाय॥ ननु रामाय इत्यत्र ङेस्थाने य-आदेशः रामशब्दस्य अदन्तत्वमाश्रित्य प्रवर्त्तते। तत् कथं स (पुत्रस्थानीयः) य—आदेशः 'राम' इत्यस्य (पितृस्थानीयस्य) अदन्तत्वं व्याहत्य 'रामाय' इति "सुपिच" इत्यनेन दीर्घम् जनयेत्? तथा चात्र परिभाषा—"सन्निपातलक्षणः" संश्लेषनिमित्तः "विधिः अनिमित्तं तद्विघातस्य" तं सन्निपातं विहन्तीति तद्विघातः (कर्मण्यण् इति अण्), तस्य सन्निपातविघातस्य न निमित्तं भवति इति; अर्थात् उपजीवकम् उपजीव्यस्य विघातकं न भवति, अपिच पुत्रः पितुः घातको न भवति,—मानमेव स्यात् इति चेत्? समाधानमाह—एषा परिभाषा तु अत्र न प्रवर्त्तते, यतः आचार्यः पाणिनिरेव "कष्टाय क्रमणे" इति सूत्रे कष्टाय इति उदाजहार। इति आचार्य एव कष्टाय इति अत्र "सुपिच" इत्यस्य प्रवर्त्तनेन दीर्घत्वम् विधाय अत्र परिभाषाप्रवृत्तेरनित्यत्वं ज्ञापयतीव॥ राम+भ्यस् इति स्थिते—

## २०५। बहुवचने झल्येत् ।७।३।१०३॥

दी। झलादौ बहुवचने सुपि परे अतोऽङ्गस्य एकारः स्यात्। रामेभ्यः। बहुवचने किम्? रामः। रामस्य। झलि किम्? रामाणाम्। सुपि किम्? पचध्वम्॥ जरत्वम्॥

एकार comes after an अकारान्त अङ्ग if a सुप् विभक्ति beginning with झल् (प्रत्याहार) follows and it if be in the बहुवचन as well. Thus राम+भ्यस् becomes रामेभ्यः with एत्व in the बहुवचन। Why do we say 'बहुवचने' in the Sutra? Otherwise in रामः (1st case singular) where विसर्ग (an अयोगवाह) coming after अकार and in place of a शर् letter i. e. सकार here, becoming झल् by स्थानिवत्व, एत्व will come in. The significance of taking बहुवचन is further illustrated by the example रामस्य; here स्य by स्थानिवद्भाव being a सुप् will give एत्व, for स्य begins with a झल् letter, if we do not use बहुवचन in the sutra. Why say झलि in the sutra? Otherwise in रामाणाम् which ends in a बहुवचन सुप, we will get एत्व। Why use सुपि in the sutra? Thus we do not get एत्व in पचध्वम्, for the बहुवचन affix ध्वम् here is not a सुप्। Now in fifth case singular राम+ङसि becoming राम+आत् by the rule no. 201, has scope for जश्त्व at the end in रामाद्, by the rule—झलां जशोऽन्ते (८।२।३९)। And now we look forward—

मित। 'अतो दीर्घो यञि' इत्यतः 'अतः' इत्यनुवर्त्तते 'सुपि च' इत्यनुवर्त्तनमप्यस्ति ततः वृत्तौ आह—बहुवचने झलादौ सुपि परे अकारान्तस्य अङ्गस्य एकारादेशः स्यात्। ततः रामेभ्यः इति चतुर्थी-पञ्चमीबहुवचने सिद्धम्। सूत्रे 'बहुवचने' ग्रहणम् किमर्थम्? अन्यथा रामः इत्यत्र अकारोपरि विसर्गस्य शर्स्थानत्वात् स्थानिवत्वेन झल्त्वात् सुपत्वात् एत्वं स्यात्। बहुवचनग्रहणस्य प्रयोजनानन्तरमाह—'रामस्य' इत्यत्र 'स्य' इत्यस्य झल्त्वात् अस्मिन् परे एत्वे प्राप्ते बहुवचनग्रहणबलात् न भवेत्। सूत्रे झलि ग्रहणम् किमर्थम्? इत्याह—रामाणाम् इत्यत्रनुट्सहितस्य आमः अझल्त्वात् बहुवचनेपि न एत्वम्। झल्ग्रहणादेव सन्निपातपरिभाषापि न प्रवर्त्तते॥ पुनः सूत्रे सुपिग्रहणम् कथम् स्यात्? पचध्वम् इत्यत्र बहुवचने ध्वमि सत्यपि तस्य

असुप्लात् एवं यथा न स्यात्॥ राम+ङसि इत्यत्र "टाङसि—" इत्यनेन राम+आत् इत्यत्र रामाद् इति जश्त्वम् स्यात्। ततश्च विकल्पमाह :—

२०६। वावसाने।८।५।५६॥

दी। अवसाने झलां चरो वा स्युः। रामाद्—रामात्। द्वित्वेरूपचतुष्टयम्॥ रामाभ्याम्। रामेभ्यः। रामस्य। सस्य द्वित्वपक्षे "खरि च" (१२१ सूत्रम्) इति चर्त्वे अपि आन्तरतम्यात् स एव, न तु तकारः; अल्पप्राणतया प्रयत्नभेदात्। अतएव "सः सि—" (सूत्रम् ३३४२) इति तादेशः आरभ्यते॥

झल् letters at the end of a पद become optionally चर् letters. i. e. generally in place of 2nd, 3rd and 4th letter of a वर्ग the first letter optionally comes in. Thus we get both रामात् by चर्त्व and रामाद् by जश्त्व। Then both 'त्' and 'द्' becoming optionally द्वित्व (reduplicated) by the rule "अनचिच" (८।४।४७) we altogether get four forms (e. g. रामात्, रामात्त्, रामाद्, रामाद्द्). For रामाभ्याम् and रामेभ्यः in fifth case, see ante rules 204 and 205. In षष्ठ्येकवचन we get रामस्य—ङस् being replaced by स्य by rule no. 201. Now in रामस्य, सकार being doubled by the rule 'अनचिच', will not be replaced by the चर् letter तकार here by the rule 'खरि च' (sutra 121); for of सकार आन्तरतम्यता (similarity) is with सकार only. तकार being अल्पप्राण and सकार being महाप्राण, they differ in उच्चारणस्थानप्रयत्न—the former having वाह्यप्रयत्न and the letter आभ्यन्तरप्रयत्न (see स्थानप्रयत्नविवेक ante). So one i. e. सकार can not be replaced by another i. e. तकार। This is why तकार has specially to be ordained in place of सकार in the rule "सः सि आर्धधातुके" (sutra 2342 infra)

under the declension of the form वत्स्यति। If तकार in natural course is to come in place of सकार, then तकारविधान for सकार of the root वस would have been useless.

मित। "झलां जशोन्ते" इत्यतः "झलाम्" इत्यस्य "अभ्यासेचर्च" (८।४।५४) इत्यतः "चर्" इत्यस्यअनुवर्त्तनमस्ति, ततः वृत्तिः—"अवसाने झलाम्" इत्यादि॥ "रामात्—रामाद्" इत्यत्र"अनचिच" (८।४।४७) इति तकारस्य, दकारस्य च पाक्षिके द्वित्वेसति रूपचतुष्टयम् स्यात्॥ "रामाभ्याम्" इत्यादिरूपसिद्धिश्च पूर्व-मुक्तम्॥ राम+ङस् इत्यत्र "टाङसि—" इत्यनेन राम+स्य=रामस्य इति जातम्॥ रामस्य इत्यत्रापि "अनचिच" इत्यस्ति सकारस्य द्वित्वस्य अवकाशः। ततश्च सकारद्वित्वे सति पूर्वसकारस्य खरि परे "खरिच" इति चर्त्वे सत्यपि प्रयत्नान्तरतम्यात् स एव सकारः स्यात्, न तु दन्त्यसकारस्थाने चर्त्वेन दन्त्यस्थानी तकारो भवेत्। यतः तकारः अल्पप्राणः सकारः महाप्राणः। एवं तयोः प्रयत्नभेदः अस्ति; तकारः वाह्यप्रयत्नभाक् सकारश्च आभ्यन्तरः॥ अतः सकारस्थाने चर्त्वेन कुत्रापि तकारः न स्यात् इति स्पष्टम्। अतएव वस+स्यति=वत्स्यति इत्यत्र सकारस्थाने तकारं विधातुं "सः सि आर्ध-धातुके" (सूत्रम्—२३४२) इति तकारविधायकं सूत्रमेवारभ्यते। यदि स्वतः एव चर्त्वेन सकारस्थाने तकारः स्यात्, तदा तकारविधानम् व्यर्थं स्यात्। एवं अल्पप्राणतया प्रयत्नभेदात् स-स्थाने तकारः न स्यादेव॥ राम+ओस् इति स्थिते—

## २०७। ओसि च ।७।३।१०४॥

**दी। ओसि परे अतोऽङ्गस्यएकारः स्यात। रामयोः।**

An अकारान्त base (अङ्ग) takes एकार when ओस् follows. Thus राम+ओस्=रामे+ओस्=रामयोः (by sandhi).

मित। सुगमा॥ राम+आम इति अत्र सवर्णदीर्घे प्राप्ते विशेषमाह—

## २०८। ह्रस्वनद्यापो नुट् ।७।१।५४॥

**दी। ह्रस्वान्तात् नद्यन्तात् आबन्तात् चाङ्गात् परस्य आमो नुडागमः स्यात।**

नुट् is the augment of आम् ( षष्ठी विभक्ति—बहुवचन ) if it comes after bases ending in short vowel, after bases technically known as नदी ( see the rule "यूस्त्र्याख्यौ नदी"—१।४।३ ) and if after आबन्त bases as well. Thus we get राम+नाम् and we look forward—

मित। ह्रस्वश्च नदीच आप्‌च इति समाहारद्वन्द्वः। अध्याहार्य—परशब्द योगे पञ्चमी। 'अङ्गस्य' इत्यधिकारो सर्वत्र अस्त्येव। "आमि सर्वनाम्नः सुट्" ( ७।१।५२। ) इत्यतः 'आमि' इत्यनुवर्त्तते, तच्च षष्ठ्यन्तं भवति। अतश्च वृत्तिः—ह्रस्वान्तात् नद्यन्तात् आबन्तात् चाङ्गात् परस्य आमः नुडागमः स्यात् इति। "नदी" इत्यनेन "यूस्त्र्याख्यौ नदी" इति ( १।४।३ ) सूत्रोक्ता नदीसंज्ञकाः शब्दाः गृह्यन्ते। आमत्र षष्ठीबहुवचनमेव गृह्यते, भाष्ये तथा उक्तत्वात्। नुटो टित्वात् "आद्यन्तौ टकितौ" इति आद्यावयवत्वम् अस्त्येव इति राम+न्+आम्=राम+नाम् इति स्थिते आह—

## २०६। नामि। ६।४।३॥

**दी। नामि परे अजन्ताङ्गस्य दीर्घः स्यात्। रामाणाम्।**

An अजन्त base takes दीर्घ when नाम् ( षष्ठी बहुवचन विभक्ति ) i. e. prefixed with the augment नुट्, follows. Kasika also says—"नामि इत्येतत् षष्ठीबहुवचनम् आगतनुटकं गृह्यते" Thus राम+नाम्= रामाणाम्। Here the cerebral ण is by the rules "रषाभ्यां नोणः समानपदे" and "अट्‌कुप्वाङ्‌नुम् व्यवायेपि"।

मित्। "ढ्रलोपे पूर्वस्य दीर्घोणः" इत्यतः दीर्घानुवृत्तिरस्ति। 'अङ्गस्य' इत्यधिकारोपि अस्त्येव। नामि इति षष्ठीबहुवचनम् गृह्यते। सर्वमेतत् वृत्तौ स्पष्टम्॥ दीर्घे कृते रामाणाम्। "रषाभ्याम्" इति "अट्‌कुप्वाङ्" इत्यनेन णत्वम्।

**दी। "सुपिच" ( ७।३।१०२ ) इति दीर्घः यद्यपि परस्तथापीह न प्रवर्त्तते, सन्निपातपरिभाषाविरोधात्। 'नामि' इत्यनेन त्वारम्भसामर्थ्यात् परिभाषा-बाध्यते॥**

Now the question arises that the rule "सुपिच" (७।३।१०२) being later in order of Panini than the present rule i. e., "नामि" (६।४।३), the former should supercede the latter and be applied here. Then why do you make दीर्घ in रामाणाम् by "नामि" ? The answer to this is :—that नुट् here comes in connection with ह्रस्व in राम and by the maxim "सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य" (ante), this ह्रस्व must not be destroyed ; so "सुपिच" can not apply (doing away with ह्रस्व here), being in evident contradiction to this present सन्निपात maxim. If it again be argued that दीर्घ by the rule "नामि" will also then militate against this सन्निपात परिभाषा—ह्रस्वत्व the cause of नुट् being evidently destroyed by दीर्घविधि, then we are to say that the very beginning of the sutra "नामि" suggests that in the case of "नामि", सन्निपातपरिभाषा has no application at all—it being already barred by "नामि" ।

मित। ननु "सुपिच" (७।३।१०२) इति सूत्रं "नामि" (६।४।३) इत्यस्मात् परं सत् अपवादभूतम् एव। ततः "सुपिच" इत्यनेनैव "रामाणाम्" इत्यत्र कथं न दीर्घः स्यात् ? इत्याकाङ्क्षायाम् आह—"सुपिच" इति सूत्रं यद्यपि परं तथापीह न प्रवर्त्तते। किमर्थम् न प्रवर्त्तते ? तदा सन्निपातपरिभाषाविरोधः स्यात्। एवम्—'रामाणाम् इत्यत्र 'राम' इति ह्रस्वान्तं सन्निपातम् आश्रित्य प्रवृत्तस्य नुट् विधेः "सुपि च" इति ह्रस्वविघातकः दीर्घः न सम्भवेत्। अतः परोपि "सुपिच" इति नात्र प्रवर्त्तते ॥ ननु "नामि" इति दीर्घे सति अपि सन्निपातपरिभाषाविरोधः स्यात् इत्यपि अत्र प्रवृत्तिर्मास्तु इति चेत्। न। तदा "नामि" इति सूत्रारम्भः एव व्यर्थः निरवकाशश्च स्यात्। ततश्च "निरवकाशो विधिरपवादः" इति न्यायेन "नामि" इति सूत्रं हि सन्निपातपरिभाषां बाधेत। अतः आह "नामि इत्यारम्भसामर्थ्यात् परिभाषा बाध्यते" इति। नामि परे रामाणाम् इत्यादौ दीर्घप्रवृत्तये सन्निपातपरिभाषां बाधितुं

"नामि" इति दीर्घारम्भः—इति फलितार्थः ॥ राम + ङि = राम + इ (ङकारस्य इत्वात्) इतिस्थिते "आद्गुणः" इति रामे इति जातम् ततः आह—

**दी । रामे । रामयोः । सुपि** ( i. e. **सप्तमी बहुवचने** ) **एत्वेकृतेः [ "बहुवचने झलि एत्" इति सुपि एत्वम् ]**

[ रा + सु इति स्थिते षत्वं समर्थयितुमाह—]

**२१० । अपदान्तस्य मुर्द्धण्यः । ८।३।५५।**

**दी । आपादसमाप्तेः अधिकारोयम् ।**

This is an अधिकार सूत्र । It goes up to the end of the 3rd pada in the last अध्याय of Panini.

**२११ । इण्कोः ।८।३।५७॥**

**दी । इत्यधिकृत्य ।**

That is read the following rule in conjunction with the rule "इण्कोः"

मित । इन् च कुश्च इति समाहारद्वन्द्वः । एकवचनमार्षम् 'इण्' इति पर-णकारेण प्रत्याहारः । कुः इति कवर्गः गृह्यते ॥ "इण्कोः" इति सूत्रस्य परत्र अनुवृत्तिः आह—

**२१२ । आदेशप्रत्यययोः ।८।३।५६॥**

**दी । "सहेः साडः सः" ( सूत्रम् २३५ ) इति सूत्रात् 'सेः' इति षष्ठ्यन्तं पदमनुवर्त्तते । इण्कवर्गाभ्यां परस्य अपदान्तस्य आदेशः प्रत्ययावयवश्च यः सकारस्तस्य मूर्धन्यादेशः स्यात् । विवृताघोषस्य सस्य तादृश एव षः । रामेषु—। इण्कोः किम् ? रामस्य । आदेशप्रत्यययोः किम् ? सुपिः—सुपिसौ—सुपिसः । अपदान्तस्य किम् ? हरिस्तत्र ॥ एवं कृष्ण-मुकुन्दादयः ॥**

Here the षष्ठ्यन्त word 'सः' comes down from the sutra "सड्ढि: साड: स:" (for which see sutra 335). Now the सकार in an आदेश or a प्रत्यय but not final in a पद, becomes cerebral (i. e. ष) if coming after vowels except अ and आ or after कवर्ग or र। Of the several cerebrals (i. e. क, टवर्ग, ष) ष only comes for सकार, for both have similarity of उच्चारण प्रयत्न, i. e. both have विवृतत्व an आभ्यन्तरप्रयत्न and अघोषत्व a बाह्यप्रयत्न। Thus we get रामेषु with cerebral. Why do we say इणको: in the sutra? Witness रामस्य where स coming after अकार does not become cerebral. Why do we say आदेशप्रत्यययो: in the sutra? Witness सुपी: सुपिसौ (1st singular and dual of the base सुपिस् derived from सु+पिस् गतौ+क्विप्) where स being धातुसकार not being of आदेश (of augment?) or of प्रत्यय (of affixes). does not become cerebral. Why again do we say 'अपदान्तस्य' in the sutra? Witness the example हरिस्तत where स being at the end of the word (पद) हरि, does not become cerebral though after इकार here. The bases कृष्ण, मुकुन्द etc, are also similarly declined as the base राम।

मित—। एकापि षष्ठी विषयभेदात् भिद्यते इति प्रत्ययविषये सा अवयवार्थिका एव। तथा च वृत्तौ—'प्रत्ययावयवश्च यः सकारः' इति। सर्वमेतत् मनोरमायां स्पष्टम्॥ ऋटुरषाणां मूर्द्धन्यानां मध्ये विवृतस्य आभ्यन्तरयत्नवतः, अघोषस्य बाह्ययत्नवतश्च सकारस्य तादृश एव षकारः स्यात्। आन्तरतम्यात्॥ एवं रामेषु इति सिद्धम्॥ सूत्रे इण्को: ग्रहणात् 'रामस्य' इत्यत्र अकारात् परस्य सस्य न षकारः॥ सुष्टु पिसयति पेसतिवा इति सु+पिस्+क्विप्=सुपिस्। अत्र सकारः धातुगत एव न आदेशप्रत्ययस्थः। अतः सुपिसौ इत्यादौ सकारस्य आदेशप्रत्ययस्थत्वाभावात् न मूर्द्धन्यः। अतश्च सूत्रे "आदेशप्रत्यययो:" इति उक्तम्॥ एवम् 'अपदान्तस्य' ग्रहणात्

'हरिस्तव' इत्यत्र सकारस्य पदान्तत्वात् न षकारः एव ॥ कृष्ण-मुकुन्दादिशब्दानां पुंसि रामशब्दवत् रूपं स्यात् ॥

## २१३। सर्वादीनि सर्वनामानि। १।१।२७ ॥

**दी—। सर्वादीनि शब्दस्वरूपाणि सर्वनामसंज्ञानि स्युः। तदन्तस्यापि इयं संज्ञा; "द्वन्द्वे च" ( सूत्र २२४ ) इति ( निषेधात् ) ज्ञापकात्। तेन 'परम-सर्वत्र' इति त्रल्। 'परमभवकान्' इत्यत्राकच्च सिध्यति।**

Some particular words (to be enumerated below) beginning with the word सर्व are technically known as सर्वनाम। This सर्वनाम संज्ञा is also of words ending in words of the सर्वादि class. This is clearly suggested in the sutra "द्वन्द्वे च" ( sutra २२४ ) where by denying सर्वनामसंज्ञा in द्वन्द्वान्त सर्वनाम words, it is proved that सर्वनाम words at the end of द्वन्द्व componnds also take सर्वनाम संज्ञा—thus implying तदन्तविधि here. Hence in परमसर्वत्र we get अकच् by तदन्त-विधि। Similarly we get अकच् in परमभवकान् by तदन्तविधि ॥ For परमभवत् ends in सर्वनाम word भवत्—the rule for अकच् being "अव्ययसर्वनाम्नाम् अकच् प्राक्टेः" ।

[ N. B.—Declension of सर्वादि words is like राम, only differences will be enumerated here. ]

मित—। 'सर्वः' सर्व शब्दः 'आदिः' प्रथमः येषां तानि 'सर्वादीनि' सर्वादिशब्द—स्वरूपाणि इत्यर्थः—तथा चावृत्तिः 'सर्वादीनि शब्दस्वरूपाणि'। "स्वं रूपं शब्दस्य अशब्दसंज्ञा" ( १।१।६८ ) इत्यनेनापि शब्दस्य स्वं रूपमेव गृह्यते। तेन सर्वस्यैव सर्वनामता, न तु तदर्थकस्य सकलादीनाम् अपि इत्यलं विस्तरेण ॥ "न बहुव्रीहौ" ( सूत्र २२२ ) "द्वन्द्वे च" ( सूत्र २२४ ) इत्यादौ सर्वनामसंज्ञानिषेधात् ज्ञायते यत् द्वन्द्वान्तानाम् सर्वादिशब्दानामपि सर्वनामता अस्त्येव। एतच्चात तदन्तविधिः

ज्ञाप्यते ॥ तेन सप्तम्यन्तात् सर्वनाम्नो विधीयमानः त्रल् सर्वनामान्तस्यापि भवेत्, एवं 'परमसर्वत्र' इति त्रल् स्यादेव। तथा "अव्ययसर्वनाम्नामकच् प्राक्टेः" इति विधीयमानः अकच् सर्वादिशब्दान्तस्यापि भवेत्। अतश्चोक्तम् 'परमभवकान्' इति। एवं तसिलादिष्वपि तदन्तविधिना सर्वनामान्तानां विधिरस्ति ॥ सर्वशब्दरूपं रामवत्। किन्तु यत्र विशेषो वर्त्तते तदेव लक्ष्यीकृत्य सूत्रयति—

## २१४। जसः शी। ७।१।१७॥

**दी—। अदन्तात् सर्वनाम्नः परस्य जसः शी स्यात्। अनेकाल्त्वात् सर्वादेशः।**

जस् ( 1st case plural ) is replaced by शी after अकारान्त सर्वनाम words. As शी consists of more than one letter, so it is ordered in place of all the letters of जस्। Thus सर्व+जस् = सर्व + शी = सर्व+ई ( शकारस्य इत्त्वात् )।

मित—। "अतो भिस ऐस्" इत्यतः 'अतः' इत्यनुवृत्तौ, "सर्वनाम्नः स्मै" ( सूत्र २१५ ) इत्यतश्च 'सर्वनाम्नः' इत्यनुवर्त्तनात् वृत्तौ आह—"अदन्तात् सर्वनाम्नः परस्य" इत्यादि। 'शी' इत्यस्य अनेकालत्वात् 'जस्' इत्यस्य सर्वस्यैवादेशः स्यात् ॥

**दी—। न च "अवयास्तु अमावनम्नः" ( सूत्र ३३४ ) इत्यादाविव "नानुबन्धकृतमनेकाल्त्वम्" इति वाच्यम्। सर्वादेशत्वात् प्राक् इत्संज्ञाया एव अभावात्। सर्वे॥**

There is the maxim "नानुबन्धकृतमनेकाल्त्वम्" i. e., अनेकाल्त्व (: "many letteredness" ) is not to be counted along with the eliding letter (अनुबन्ध) ; then in शी there is no अनेकाल्त्व the इत् letter श being excluded from counting. Thus there being no अनेकाल्त्व in शी, how can there be सर्वादेश here by the rule "अनेकाल् शित्सर्वस्य" ( १।१।५५ )? just as, in the rule "अवयास्—" ( sutra 334 ),

ऋकार being इत् in ऌ, there is no अनेकाल्त्व and so no सर्वादेश, but अन्त्यादेश only by the rule "अलोऽन्त्यस्य" (१।१।५२). To this the answer is that—the question of इत् here by the rule "लशक्वतद्धिते" (१।३।८—sutra 195) does not arise at all in connection with सर्वादेश by the rule "अनेकाल् शित्—" (१।१।५४), the former rule here being later in the order of अष्टाध्यायी of Panini than the latter one. Thus we have first सर्वादेश and then इत्व। So the परिभाषा—"नानुबन्धकृतमनेकाल्त्वम्" has no application here and we have first सर्वादेश। Thus सर्व+ई=सर्वे by "आद्गुणः"।

मित—। ननु अत्र 'शी' इत्यस्य जसःस्थाने सर्वादेशविषये "नानुबन्धकृतम् अनेकाल्त्वम्" इति परिभाषा परिपन्थिनी एव। "अनुबन्धः इत्, तत्प्रयुक्तमनेकालत्वम् सर्वादेशनिमित्तं न भवति "इति हि तदर्थः। एवं 'शी' इत्यत्र "लशक्वतद्धिते" (१।३।८) इति शकारस्य इत्संज्ञकत्वात् तत्प्रयुक्तमनेकाल्त्वम् नास्त्येव। तत् सर्वादेशः अपि न स्यात्। अतएव च "अर्वणः ऌ—" (सूत्र २३४) इत्यत्र 'ऌ' इत्यस्य ऋकारमितमादाय अनेकाल्त्वं न, ततः एकाल्त्वात् "अलोऽन्त्यस्य" (१।१।५२) इति 'ऌ' इत्यस्य अन्त्यादेश एव। अत्रापि तादृशी एव व्यवस्था कथं न स्यात् इत्यत्रोत्तरमाह—अष्टाध्याय्यां सर्वादेशसूत्रम् (१।१।५५ द्रष्टव्यम्) पूर्वं "लशक्वतद्धिते" (१।३।८) इति इत्विधायकं सूत्रं च परमेव। ततः सर्वादेशः प्राक् भवति, ततश्च इत्। एवं सर्वादेशकाले इत्संज्ञायामसत्याम् "नानुबन्धकृतमनेकाल्-त्वम्" इति परिभाषायाः प्रवृत्तिर्न स्यात्॥ सर्व+जस्=सर्व+शी (सर्वादेशत्वात्) =सर्व+ई (शकारस्य इत्वात्)=सर्वे ("आद्गुणः" इत्यनेन)॥ सर्व शब्दस्य चतुर्थ्येकवचने "ङेर्यः" इति यकारे प्राप्ते आह—

## २१५। सर्वनाम्नः स्मै। ७।१।१४॥

**दी—। अतः सर्वनाम्नः 'ङे' इत्यस्य 'स्मै' स्यात्। सर्वस्मै।**

स्मै comes in place of 'ङे' after अकारान्त सर्वनाम words.

मित---। सुगमा---॥ सर्वनाम्न इति पञ्चमी। अनुवृत्तिरत्र पूर्वसूत्रवत्॥ सर्वशब्दात् पञ्चम्येकवचने "टाङसिङसाम्---" इति 'आत्' इति प्राप्ते---

## २१५। ङसिङ्योः स्मात्स्मिनौ। ७।१।१५॥

स्मात् and स्मिन् respectively come for ङसि and ङि after अकारान्त सर्वनाम bases. Thus सर्व+ङसि=सर्व+स्मात्=सर्वस्मात्।

मित---। पञ्चमीसप्तम्येकवचने यथाक्रमं 'स्मात्' 'स्मिन्' च भवतः॥ सर्व---आम् इत्यत्र "ह्रस्वनद्यापोनुट्" इति नुटिप्राप्ते आह---

## २१७। आमि सर्वनाम्नः सुट्। ७।१।५२॥

**दी। अवर्णान्तात् परस्य सर्वनाम्नः विहितस्य आमः सुडागमः स्यात्। एत्वषत्वे। सर्वेषाम्। सर्वस्मिन्। शेषं रामवत्। एवं विश्वादयोऽप्यदन्ताः॥**

सुट् is the augment of आम् ( i. e. 6th case plural ) that is enjoined after a सर्वनाम word ending in अवर्ण। Thus सर्व+आम= सर्वसुआम्=सर्वेषाम्। Here in सर्वेषाम्, एत्व comes by the rule "बहुवचने झल्येत्" ( ante ), and then we have षत्व here by the rule "आदेशप्रत्यययोः" ( ante ), स of सुट् being of an आदेश ( augment ) here. In seventh singular we get सर्व+ङि=सर्व+स्मिन् ( see rule 215 above )=सर्वस्मिन्। Other forms of सर्व are like those of राम। Similarly other अदन्त सर्वनाम words like विश्व etc, are declined like सर्व।

मित---। "आत्जसेरसुक्" (७।१।५०) इत्यतः 'आत्' इति अनुवर्त्तते। ततश्च 'अवर्णात् सर्वनाम्नः विहितस्य आमः सुडागमोभवति' इत्यर्थः सम्पद्यते॥ 'सर्वेषाम्' इत्यत्र "बहुवचने झल्येत्" इति सूत्रेण एत्वम्। "आदेशप्रत्यययोः" इति

सूत्रेण चाव षलम्॥ सर्व+ङि इति स्मिनादेशे सति सर्वस्मिन्॥ अधुना सर्वनामशब्दानां परिसंख्यानं क्रियते—

दी—। सर्वादयश्च पञ्चत्रिंशत्। सर्व विश्व उभ उभय डतर डतम अन्य अन्यतर इतर त्वत् त्व नेम सम सिम। "पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायाम् असंज्ञायाम्" (सूत्र २१८), "स्वमज्ञातिधनाख्यायाम्" (सूत्र २१९), "अन्तरं वहिर्योगोपसंव्यानयोः" (सूत्र २२०)। त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवतु किम् इति॥ तत्र उभशब्दो द्वित्वविशिष्टस्य वाचकः; अतएव नित्यं द्विवचनान्तः; तस्येह पाठस्तु "उभकौ" इत्यकजर्थः; न च कप्रत्ययेन इष्टसिद्धिः; द्विवचनपरत्वाभावेन 'उभयतः' 'उभयत्र' इत्यादाविव अयच् प्रासङ्गात्; तदुक्तम् (वार्त्तिककृता) "उभयोऽन्यत्र' (वार्त्तिक २३२)—'अन्यत्र' इति द्विवचनपरत्वाभावे। उभयशब्दस्य द्विवचनं नास्ति इति कैयटः, अस्ति इति हरदत्तः। तस्मात् (? उभयशब्दात्) जसि अयजादेशस्य स्थानिवद्भावेन तयप्-प्रत्ययान्ततया "प्रथमचरम—" (सूत्र २२६) इति विकल्पेप्राप्ते विभक्ति निरपेक्षत्वेन अन्तरङ्गत्वात् नित्यैव संज्ञा भवति, उभये डतर उतमौ प्रत्ययौ, 'प्रत्ययग्रहणे तदन्ताग्रह्याः" (? इति)। यद्यपि "संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति", 'सुप्तिङन्तम्" इति ज्ञापकात्; तथापीहतदन्तग्रहणम्; केवलयोः संज्ञायाः प्रयोजनाभावात्। अन्यतरान्यतमशब्दौ अव्युत्पन्नौ स्वभावात् द्विवहुविषये निर्धारणे वर्त्तते; तत्र अन्यतमशब्दस्य गणे पाठाभावात् न संज्ञा। 'त्व त्व' इति द्वावप्यदन्तौ अन्यपर्य्यायौ; 'एकः उदात्तः अपरोऽनुदात्तः' इत्येके; 'एकस्तान्तः' इत्यपरे। 'नेम' इत्यर्धे। समः सर्वपर्य्यायः; तुल्य पर्य्यायन्तु नेह गृह्यते, "यथासंख्यमनुदेशः समानाम्" (सूत्र १२८), इति ज्ञापकात्। "अन्तरं वहिर्योग—" इति गणसूत्रे 'अपुरि' इति वक्तव्यम्; अन्तरायाम् पुरि।

मित—। अन्यतरान्यतमशब्दौ अव्युत्पन्नौ स्वभावात् द्विबहुविषये वर्त्तेते इति दीक्षितः कैयटोपष्टम्भः। "व्युत्पन्नौ" इति शाकटायनः। आद्ये, अग्रहणात् इतरस्मिन् नियमात् अन्यतमशब्दव्यावृत्तिः॥ "पूर्वापरावर" इत्यादि अष्टाध्यायीपठितमपि गणपरिसंख्यानार्थं पठ्यते। व्याख्यानं तु २१८—२० सूत्रादौ द्रष्टव्यम्॥ 'भवतु' इत्यनेन युष्मदर्थकः भवच्छब्दस्य गृह्यते ; शवन्तनिवारणार्थं भवतु इति सानुबन्धः पाठः। भवदीयः भवादृशः इति सिद्धार्थम् पाठफलम्॥ "तस्येह पाठस्तु" इत्यादि। उभशब्दस्य सर्वादिगणे पाठः—"अव्ययसर्वनाम्नामकच् प्राक् टेः" इति—अकजर्थः; 'उभकौ' यथा स्यात्। ननु उभशब्दात् स्वार्थिके कप्रत्ययेपि 'उभकौ' इति इष्टसिद्धिः स्यात्, इत्याशङ्क्य आह—द्विवचनपरत्वाभावे तु उभशब्दात् नित्यम् अयच् उक्तः, तथा च सूत्रम् "उभादुदात्तो नित्यम्" (५।२।४४) इति। एवं च कप्रत्यये सति अयचि "उभयकौ" स्यात्, "उभयतः उभयत्र" इत्यादौ अयचि यथा। ततश्च कप्रत्ययेन न इष्टसिद्धिः स्यात्। अतः अकजर्थः सर्वादिगणे उभशब्दस्य पाठः कार्यः; तथा च बालमनोरमा "अकचि सति 'तन्मध्यपतितः तद्ग्रहणेन गृह्यते' इति न्यायेन उभशब्देन उभकशब्दोपि गृह्यते। तस्य च उभक औ इत्यस्यां दशायां द्विवचनपरत्वात् अयच् प्रत्ययो न भवति"। इष्टसिद्धिश्च 'उभकौ' इति स्यात्। वार्त्तिककृतापि उक्तम् "उभयोन्यत्र"। तस्यायमर्थः—द्विवचने सति अयच्प्रत्ययो न स्यात्। एतदभिप्रेत्य आह—"अन्यत्र इति द्विवचनपरत्वाभावे"॥ तस्मादिति। 'तस्मात्' उभयशब्दात् जसि सति "प्रथमचरम—" (सूत्र २२६) इत्यनेन सर्वनामसंज्ञायाः विकल्पे प्राप्ते, "सर्वादीनि सर्वनामानि" इत्यनेन च सर्वनामसंज्ञायाः नित्यत्वे सति समाधानमाह—'विभक्तिनिरपेक्षत्वात् अन्तरङ्गत्वाच्च नित्या संज्ञा'। "प्रथमचरम—" इति तु जसपेक्षः विधिः, "सर्वादीनि सर्वनामानि" इत्यत्र च तन्निरपेक्षः विधिः। अतश्च सर्वनामसंज्ञा अनिरपेक्षा सती अन्तरङ्गमेव। अल्पापेक्षत्वादपि अन्तरङ्गम्। ततः "बहिरङ्गात् अन्तरङ्गो बलीयान्" इति न्यायेन "सर्वादीनि सर्वनामानि" इत्यनेनैव अन्तरङ्गत्वात् सर्वनामसंज्ञा नित्या स्यात्। ततश्च उभये इत्येव रूपसिद्धिः। 'अयजादेशस्य स्थानिवद्भावेन ,तयप् प्रत्ययान्ततया"

इति वृत्तौ कथमुक्तम् ? इत्याह—"प्रथमचरम—" इति सूत्रे 'तय' शब्देन 'तयप्'-प्रत्ययान्तो गृह्यते। उभयशब्दस्य तु "उभादुदात्तो नित्यम्" इति अयच् विहितः। तत् कथमस्य "प्रथमचरम" इति सूत्रेण जसि विकल्पा सर्वनामसंज्ञा प्राप्ता ? इत्याह—"संख्याया अवयवे तयप्" इति उक्त्वा "उभादुदात्तो नित्यम्" इति अयच् उक्तः। स च अयच् स्थानिवत्त्वेन तयप् एव ( इति अयचो स्थानिवत्त्वमाविश्रत्य तयप् तुल्यतया अयजन्तउभयशब्दः अपि तयप्प्रत्ययान्ततया 'तय' इत्यनेन गृह्यते )। अतः अस्य "प्रथमचरम—" इति सूत्रेण विकल्पः प्राप्तः। एवं सर्वनामसंज्ञायाः विकल्पे सति नित्यत्वम् समाहितम् "विभक्ति निरपेक्षत्वात् 'इत्याद्येन॥ सर्वमन्यत् सुगमम्॥ 'अपुरि' इत्यनेन 'पुरि' विषये अन्तरशब्दस्य सर्वनामता निषिद्धा। तेन अन्तरायां पुरि न तु अन्तरस्याम् पुरि इति॥ अधुना सर्वादिगणानां परिसंख्यानं कृत्वा तेषां केषाञ्चित् विशेषं समर्थयितुम् उपन्यस्यति सूत्रम्—

## २१८। पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्। १।१।३४॥

**दी—। एतेषां व्यवस्थायाम् असंज्ञायां सर्वनामसंज्ञा गणपाठात् सर्वत्र या प्राप्ता सा जसि वा स्यात्। पूर्वे—पूर्वाः। स्वाभिधेयापेक्षावधिनियमो व्यवस्था। व्यवस्थायाम् किम् ? दक्षिणाः गाथकाः—कुशला इत्यर्थः। असंज्ञायाम् किम् ? उत्तराः कुरवः।**

The seven words beginning with पूर्व etc, become सर्वनाम owing to their inclusion in the सर्वादिगण in the sense of some 'limitation' and not signifying designation; but this सर्वनामसंज्ञा of these seven words is optional in the case of जस् i. e., first plural. Thus we get पूर्वे when treated as सर्वनाम in जस्, and पूर्वाः when not treated as सर्वनाम in जस् ( see ante under सर्वे and रामाः )। 'व्यवस्था' means "certainty of limitation denoted by the meaning

of the word "पूर्व etc." Why do we say 'व्यवस्थायाम्'? Witness the example दक्षिणा: गाथका: ( expert weavers of garland ) when दक्षिण meaning कुशल does not denote limitation, so can not take सर्वनामता in जस्। Why again do we say "असंज्ञायाम्"? Witness उत्तरा: कुरव: ( meaning उत्तरकुरु race— ) where उत्तर signifying a संज्ञा is not a सर्वनाम in जस्।

मित—। "विभाषाजसि" (१।१।३२) इति सर्वमनुवर्त्तते। "सर्वादीनि सर्वनामानि" (१।१।२३) इत्यस्मात् 'सर्वनामानि' इति च वर्त्तते ; तथा च वृत्तिः— "एतेषां पूर्वादिसप्तशब्दानाम् 'व्यवस्थायाम्' दिग्वचनार्थे इति फलितम् 'असंज्ञायाम् सर्वनामसंज्ञा—जसि वा स्यात्'॥ स्वाभिधेयापेक्षेति। 'स्वस्य' पूर्वादिशब्दस्य 'अभिधेय' वाच्य' तेन 'अपेक्ष:' अपेक्ष्यमाण: 'अवधेर्नियम:' व्यवस्थाशब्देन विवक्षित:"। ततश्च नियमेन अवधिसापेक्षे वर्त्तमानता द्योत्यते। एवं व्यवस्थायाम् दिशि वर्त्तमानायाम् इति च फलितम्॥ स्वाभिधेयापेक्षोवधिनियमो व्यवस्था इति पाठेसति—स्वस्य पूर्वादिशब्दस्य अभिधेयमपेक्षते इति स्वाभिधेयापेक्ष: इति ण:। पूर्वादिशब्दस्य अभिधेयेन अपेक्ष्यमाणस्य अवधेर्नियम: इत्यर्थ:'॥ 'दक्षिणा गाथका:' इत्यत्र दक्षिणशब्दस्य कुशलार्थत्वे अव्यवस्थार्थत्वात् न सर्वनामता। एवं 'उत्तरा: कुरव:' इत्यत्र च उत्तरशब्दस्य संज्ञापरत्वात् न सर्वनामता। कथं "दिश: सपत्नीभव दक्षिणस्या:"? सूत्रे 'असंज्ञायाम्' इत्युक्तत्वात्। आधुनिकसङ्केत: अत्र संज्ञात्वेन गृह्यते। दिक्षु तु चिरन्तन: सङ्केत:। अतो न प्रतिषेध:। उत्तरा: कुरव: इत्याधुनिक: सङ्केत:, तेन संज्ञात्वात् प्रतिषेध:॥

## २१६। स्वमज्ञातिधनाख्यायाम्। १।१।३५॥

**दी—। ज्ञातिधनान्यवाचिन: स्वशब्दस्य या प्राप्ता संज्ञा सा जसि वा स्यात्। स्वे—स्वा:। आत्मीया इत्यर्थ:। आत्मान: इति वा। ज्ञातिधनवाचिनस्तु स्वा: ; ज्ञातयोऽर्था वा।**

The word स्व denoting something other than ज्ञाति (kindred) and धन (wealth) becomes सर्वनाम, being so mentioned in the सर्वादिगण; and it is optionally so (i. e., सर्वनाम) in जस् (i. e., first case plural). Thus स्वे and स्वाः meaning "own" or "self". But while meaning ज्ञाति वा धन, its form in जस् is स्वाः only.

मित—। "विभाषा जसि" इति "सर्वनामानि" इति च अनुवृत्तम् इति पूर्वसूत्रं द्रष्टव्यम्। स्वशब्दस्य अर्थाश्च अमरे यथा—"स्वो ज्ञातौ आत्मनि, स्वं त्रिष्वात्मीये स्वोऽस्त्रियाम् धने"। तत्र ज्ञाति इति अर्थे धनार्थे च विद्यमानस्य स्वशब्दस्य सर्वनामता नास्त्येव इति फलितार्थः। अन्यत्र अस्य सर्वनामता स्यादेव। तच्च जसि विकल्पिता इति॥ सूत्रे आख्याग्रहणम् किम्? "स्वमज्ञातिधने" इत्युक्ते ज्ञातिधनयोरपि आत्मीयत्वं पुरस्कृत्य प्रवृत्ता सर्वनामता प्रसज्यते, तत्तु नेष्यते। आख्याग्रहणेन आत्मीयस्यापि ज्ञातित्वेन धनत्वेन वा विवक्षायां सर्वनामता न भवति।

## २२०। अन्तरं वहिर्योगोपसंव्यानयोः। १।१।३६॥

**दी—। वाह्ये परिधानीये चार्थे अन्तरशब्दस्य या प्राप्ता संज्ञा सा जसि वा स्यात्। अन्तरे—अन्तराः वा गृहाः; वाह्या इत्यर्थः। अन्तरे अन्तरा वा शाटकाः; परिधानीया इत्यर्थः।**

The सर्वनामता of the word अन्तर while denoting 'वाह्य' (outward) or परिधानीय (wearing,) becomes optional in जस् &c. Thus अन्तरा or अन्तरे गृहाः=वाह्याः गृहाः।

मित—। वहिः अनावृतस्थानम्। तेन योगः सम्बन्धः यस्य स वहिर्योगः, वाह्य इत्यर्थः। उपसंव्ययते परिधीयते इति उपसंव्यानम् वस्त्रमित्यर्थः। वहिर्योगश्च उपसंव्यानञ्च। द्वन्द्वः। तयोः। एतदर्थयोः विद्यमानयोः अन्तरशब्दस्य सर्वनामता जसि वा स्यात् इति फलितम्।

२२१ । पूर्वादिभ्यो नवभ्यो वा । ७।१।१६ ॥

दी— । एभ्यो नवभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः । पूर्वस्मात्—पूर्वात् । पूर्वस्मिन्—पूर्वे । एवं परादीनामपि । शेषं सर्ववत् ॥ एकशब्दः संख्यायां नित्यैकवचनान्तः ।

स्मात् and स्मिन are optionally ordered in place of ङसि and ङि respectively of the seven words पूर्व etc. (see sutra 218), of स्व and of अन्तर (see sutras 219—20), altogether of these nine words. Thus the words पर अपर are similarly declined. The rest विभक्तिs are as in the case of सर्व । The word एक is always singular while it is a numeral meaning 'one' ।

मित— । "ङसिङ्योः स्मात्स्मिनौ" (७।१।१५) इति अत्रानुवर्त्तते । तथा च वृत्तिः—"एभ्यो नवभ्यो ङसिङ्योः स्मात् स्मिनौ वा स्तः" ॥ अन्यत् सुगमम् । एकशब्दस्य संख्यापरत्वे एकवचनत्वं नित्यम् । अन्यार्थे द्विवहुवचने भवतः एव । तथा—एकीवदन्ति, केचिद्वदन्ति इत्यर्थः ॥

२२२ । न बहुव्रीहौ । १।१।२९ ॥

दी— । बहुव्रीहौ चिकीर्षिते सर्वनामसंज्ञा न स्यात् । त्वकं पिता यस्य सः त्वत्कपितृकः । अहकं पिता यस्य सः मत्कपितृकः । इह समासात् प्रागेव प्रक्रियावाक्ये सर्वनामसंज्ञा निषिध्यते । अन्यथा लौकिकविग्रहवाक्ये इव तत्राप्यकच् प्रवर्त्तते ; स च समासेपि श्रूयेत । 'अतिक्रान्तो भवन्तम्, अतिभवकान्' इतिवत् ॥ भाष्यकारस्तु 'त्वकत्पितृकः' 'मकत्पितृकः' इति रूपे इष्टापत्तिं कृत्वा एतत् सूत्रं प्रत्याचख्यौ । यथोत्तरं मुनीनाम् प्रामाण्यम् ॥

Words like सर्व etc, of the सर्वादि list, do not become सर्वनाम when we have a mind to make a बहुव्रीहि of सर्वादि words. Thus

सर्वनामता of सर्वादि words is prohibited in the अलौकिकविग्रहवाक्य only of a बहुव्रीहि समास as—युष्मद् स् पितृस् ; अस्मद् स् पितृस् ।

This अलौकिकविग्रहवाक्य is not generally eligible for use. But still सर्वनामसंज्ञा of सर्वनाम words in बहुव्रीहि s barred only in this अलौकिकविग्रहवाक्य, and not in लौकिकविग्रहवाक्य as त्वकं पिता यस्य सः त्वत्कपितृकः । In त्वकं पिता यस्य we have अकच् in त्वम् by the rule "अव्यय सर्वनाम्नामकच् प्राक् टेः", but in the final बहुव्रीहि we have त्वत्कपितृकः with क after युष्मद् ( त्वत् and मत् being ordered inplace of युष्मद् and अस्मद् by the rule "प्रत्ययोत्तरपदयोश्च" ), for this sutra prohibits सर्वनामता in the बहुव्रीहिसमास and so अकच् can not come in. Similarly interpret the instance मत्कपितृकः here. That the prohibition here in this ;sutra is in अलौकिकविग्रहवाक्य, i. e., when the process of बहुव्रीहि is being made, i. e., when even there is no समास—making, is known thus. For otherwise अकच् would have come in, in the final बहुव्रीहि, as it is heardin the लौकिकविग्रहवाक्य in the words त्वकम् and अहकम् in the above instances. In अहकं पिता यस्य etc, अकच् in heardin लौकिकविग्रहवाक्य, but not in the final बहुव्रीहि समास, where we see "क" only. This suggests that prohibition is in the case of प्रक्रियावाक्य i. e., in अलौकिकविग्रहवाक्य । Neither can it be said that prohibition in अलौकिकवाक्य is superfluous for it is प्रयोगानर्ह ; for the maxim is—that अकच् in the अलौकिकवाक्य should be heardin समास also, as in the case of "अतिक्रान्तो भवकान्तम्, अभिभवकान्—" where अकच् heard in प्रक्रियावाक्य is also seen in तत्पुरुष समास । भाष्यकार however supports the usages त्वकत्पितृकः मकत्पितृकः with अकच् both in प्रक्रियावाक्य

& in final समास। Thus he discards the sutra "न बहुव्रीहौ"। If the question arises—whose authority are we to respect here ? Then the solution is that of the three sages connected with पाणिनि-व्याकरण e. g. सूत्रकार, वार्त्तिककार and भाष्यकार—superiority will go according to posteriority in time e. g., वार्त्तिककार is more respected than सूत्रकार and भाष्यकार is more respected than both his prior sages. So follow भाष्यकार here and reject the sutra "न बहुव्रीहौ"। For reasons of भाष्यकार herewe look forward—

मित—। सर्वनामसंज्ञायां तदन्तविधेरभ्युपगमात् बहुव्रीहेरपि सर्वाद्यन्तस्य संज्ञा स्यात् इति तत्प्रतिषेधः आरभ्यते—बहुव्रीहौ समासे सर्वादीनि सर्वनामसंज्ञानि न भवन्ति। ततः 'त्वत्कपितृक मत्कपितृक' इत्यत्र बहुव्रीहौ सर्वनामसंज्ञानिषेधात् तदाश्रितः अकजपि न स्यात्। "विभाषा दिक् समासे बहुव्रीहौ" (१।१।२८) इत्यतः 'बहुव्रीहौ' इति वर्त्तमानेपि पुनर्बहुव्रीहिग्रहणात्, प्रक्रियावाक्ये एव निषेधो यथा स्यात् इति ज्ञायते। इति सर्वमत्र एवं व्याख्यायते॥ "त्वत्कपितृकः, मत्कपितृकः" इत्यादि बहुव्रीहिरस्ति। तत्रद्विविधं तावत् विग्रहवाक्यम्—लौकिकम्, अलौकिकञ्च। लौकिकं च प्रयोगार्हम् यथा—"त्वकं पिता यस्य" "अहकं पिता यस्य" इति। अलौकिकं पुनः प्रयोगानर्हम्, यथा—युष्मद् स् पितृस्, अस्मद् स् पितृस्। युष्मद्-अस्मदोः सर्वनामत्वप्रसङ्गेन विग्रहवाक्ये श्रुतः अकच् समासेपि श्रूयेत। ततश्च विग्रहे अकच् ("त्वकं पिता यस्य" इत्यत्र यथा) समासेपि स्यात्। इति तदेव अकचं समासे वारयितुम् सूत्रम् आह—"न बहुव्रीहौ"; सर्वनामसंज्ञानिषेधात् अकच् न भवेत्। अत्र सूत्रे "सर्वादीनि सर्वनामानि" इत्यनुवर्त्तते। ततश्च अर्थः सम्भवति—बहुव्रीहौ सर्वादीनि सर्वनामानि न स्युः। अलौकिकविग्रहवाक्ये एव सर्वनामत्वं निषेधयितुमाह—"बहुव्रीहौ चिकीर्षिते" इति। अत्र विषयसप्तम्याश्रयणादेव अयमर्थो लभ्यते। बहुव्रीहिप्रक्रियादशायाम् अलौकिकविग्रहवाक्ये सर्वनामतानिषेधात् लौकिकविग्रहवाक्ये त्वकम् अहकम्

इत्यत्र अकच् अस्ति, किन्तु निषेधादेव समासे अकच् न स्यात्, किन्तु "क" प्रत्यय एव भवति। ततश्च "प्रत्ययोत्तरपदयोश्च" इति सूत्रेण युष्मद्—अस्मदोः स्थाने त्वत् मत् इति स्यात् एवञ्च कप्रत्ययेन त्वत्कपितृकः मत्कपितृकः इति स्यात्॥ इह सूत्रे प्रक्रियाकाले एव सर्वनामतानिषेधः, तदेव वर्णयति "इह समासात् प्रागेव प्रक्रियावाक्ये सर्वनामसंज्ञा निषिध्यते" लौकिकवाक्येपि सर्वनामता निषेत्स्यति 'त्वकम्' 'अहकम्' इत्यादिप्रयोगोन सङ्गच्छते। अलौकिकवाक्ये निषेधफलात् समासे "त्वत्कपितृकः" इत्यादौ अकच् न श्रूयते। यदि निषेधः न स्यात् तदा अलौकिकस्य प्रयोगानर्हत्वेपि लौकिकवाक्ये इव समासेपि अकच् श्रूयेत। "अतिक्रान्तो भवकन्तम् अभिभवकान्" इत्यत्र यथा। अत्र लौकिकवाक्ये श्रुतः अकच्, तत्पुरुषे सर्वनामतानिषेधाभावात्, समासेपि श्रूयते॥ भाष्यकारस्तु त्वकत्पितृकः मकत्पितृकः इत्यादि अकचा इष्टापत्तिं कृत्वा "न बहुव्रीहौ" इति सूत्रं प्रत्याख्यातवान्। स च भाष्यकारः अधिकप्रयोगदर्शी, अपि तस्य वचनम् प्रमाणतरम् किम्? इत्यत्र आह—"यथोत्तरम् मुनीनाम् प्रामाण्यम्"। ततश्च भाष्यकारस्य सूत्रकारवार्त्तिककाराभ्यां उत्तरत्वात् समधिकम् प्रामाण्यम्, इति। तत्र कारणमपि उपन्यस्यति—

**दी—। "संज्ञोपसर्जनीभूतास्तु न सर्वादयः"। महासंज्ञाकरणेन, तदनुगुणानामेव गणे संनिवेशात्। अतः संज्ञाकार्य्यम् अन्तर्गणकार्य्यं च तेषां न भवति। सर्वोनाम कश्चित् तस्मै सर्वाय देहि। अतिक्रान्तः सर्वम् अतिसर्वः तस्मै अतिसर्वाय देहि। अतिकतरम् कुलम्। अतितत्॥**

सर्वादि words do not become सर्वनाम when they denote some designation, or when they being subordinate refer to something else, as adjectives. This is owing to the significant great name "सर्वनाम" used here, and not a name in one word as टि (i.e., for final vowel ) etc, and also because the list includes such words as are applicable to all. So सर्वादि words siginfying names of some one or qualifying some one else, do not admit of सर्वादि

गणकार्य्य as स्त्रीभाव etc, or अन्तर्गणकार्य्य as अदड् of डतरादि words &c. Thus we get सर्वाय in सर्वाय देहि when it is a name of some one; and also we have अतिसर्वाय when सर्व qualifies somthing else and is उपसर्जनीभूत ( subordinate ). Similarly for this very reason we get अतिकततरम् कुलम् without अदड् in अतिकतर, and अतितत् without तदाद्यत्व &c here, for here कतर and तद् are उपसर्जनीभूत ।

[ N. B.—For this reason, सर्वनाम words being उपसर्जनीभूत in "बहुव्रीहि समास", further सर्वनामनिषेध by the rule "न बहुव्रीहौ" becomes superfluous according to भाष्यकार । ]

मित—। "सर्वेषां नामानि इति, सर्वनामानि" इति टि-घु-भादिवत् एकाकारसंज्ञां परित्यज्य अन्वर्थमहासंज्ञाकारणात् "सर्वेषां नामयोग्यानि शब्दानि", सर्वनामसंज्ञानि स्युः इति लभ्यते । सर्वादिगणप्रविष्ठाः शब्दा अपि तादृशाः एव । ते हि सर्वत्र एव प्रयोक्तुमशक्यन्ते । अतः आह—"संज्ञोपसर्जनीभूताः सर्वादयः सर्वनामानि न स्युः" इति । अतश्च बहुव्रीहौ सर्वादयः सर्वनामसंज्ञां लब्धुं नार्हन्ति । ततः "न बहुव्रीहौ" इति सूत्रेण तन्निषेधः व्यर्थः स्यात् । एवं सुष्ठु भाष्यकारः एतत् सूत्रं प्रत्याख्यातवान् आकरे । अत एव च 'सर्वाय देहि' इत्यत्र सर्वशब्दस्य संज्ञापरत्वात् न सर्वनामतास्ति । ततः न गणकार्य्यम् भवति । एवं अतिसर्वाय इत्यत्र सर्वशब्दस्य उपसर्जनीभूतत्वेच न सर्वनामता ॥ 'अतिकतरं कुलम्' इत्यत्रकतरशब्दस्य उपसर्जनत्वात् "अदड् डतरादिभ्यः" इति अन्तर्गणकार्य्यं न स्यात् । एवं अतितत् इत्यत्र तद्शब्दस्य उपसर्जनत्वात् सर्वनामताभावे "त्यदादीनामः" "तदोः सः सौ अनन्तयो": इत्यादयः अन्तर्गणसूत्रादयः नात्र प्रवर्त्तन्ते इत्यास्तां तावत् ॥ सर्वनामशब्दानां उपसर्जनत्वेन सर्वेषाम् नामविषये अप्रवृत्त्या अकृतव्यूहपरिभाषया एव सर्वनामशब्दानां बहुव्रीहौ सर्वनामता न स्यात् । अतोपि "न बहुव्रीहौ" इति सूत्रं व्यर्थं स्यात् । केचित्तु "न बहुव्रीहौ" इति विषये एव अकृतव्यूह—परिभाषायाः अप्रवृत्तिं लिङ्गवत्कृत्वा इतरसमासे च अस्याः परिभाषायाः प्रवृत्तेः सार्थकमिदं सूत्रमित्याहुः ।

२२३। तृतीयासमासे। १।१।३० ॥

दी—। अत्र सर्वनामता न स्यात्। मासपूर्वाय। तृतीया समासार्थ-वाक्येऽपि न—मासेन पूर्वाय।

सर्वनामता of सर्वादि words is barred in the case of तृतीया तत्पुरुष Samasa. Thus we get मासपूर्वाय and not मासपूर्वस्मै, as in the case of सर्वनाम words, for मासपूर्वाय is a case of तृतीयासमास। In this rule there in अनुवर्त्तन of समास from the rule "विभाषा दिक् समासे बहुव्रीहौ" (१।१।२८), still further repetition of the word समास in the rule suggests that this prohibition will go even in case of words forming विग्रहवाक्य of तृतीया समास as in the case of मासेन पूर्वाय—where मासेनपूर्वाय being तृतीयासमासविधायकवाक्य will not take स्मै in the 4th case singular as is usual with सर्वनाम words.

मित—। "न बहुव्रीहौ" इति पूर्वसूत्रात् "न" इत्यनुवर्त्तते। "सर्वादीनि सर्वनामानि" इत्यतः सर्वनामग्रहणमप्यस्ति। ततः फलितमाह— "अत्र सर्वनामता न भवेत्"। इह सूत्रे "विभाषा दिक् समासे बहुव्रीहौ" (१।१।२८) इत्यतः 'समासे' इति वर्त्तमानेपि पुनः समासग्रहणं तृतीयासमासार्थवाक्येपि प्रतिषेधो यथा स्यात् इत्येतदर्थम् "अतः मासेनपूर्वाय, न तु मासेन पूर्वस्मै" ॥ "पूर्वसदृशसमोनार्थ—" इति तृतीयासमासविधायकं सूत्रं समासे वक्ष्यते, तस्यैवात्र ग्रहणं न तु यस्य कस्यापि तृतीयासमासस्य ॥

२२४। द्वन्द्वे च। १।१।३१ ॥

दी—। द्वन्द्वे उक्ता संज्ञा न। वर्णाश्रमेतराणाम्। समुदायस्यायं निषेधः, न तु अवयवानाम्। नचैवं तदन्तविधिना सुट्प्रसङ्गः। सर्वनाम्नो विहितस्यामः सुडिति व्याख्यातत्वात् ॥

सर्वनामता is also barred in the case of द्वन्द्वसमास। Thus we get वर्णाश्रमेतराणाम् and not वर्णाश्रमेतरेषाम् as in the case of सर्वादि words. Here वर्णाश्रमेतर is a case of द्वन्द्वसमास ( e. g. वर्णाश्च आश्रमाश्च इतरे च ) and this sutra applies. The prohibition here is of the whole द्वन्द्व compound and not of their independent components ; though the निषेध is of the whole compound still we do not by तदन्तविधि get सुट् here in the component इतर by the rule "आमि सर्वनाम्नः सुट्"; for there the explanation is—सुट् will come of आम if it is attached to सर्वनाम words. Here thus the whole द्वन्द्व compound being prohibited as a सर्वनाम, सुट् can not come to आम ( after इतर ), for this आम is not of सर्वनाम word here. Thus तदन्तविधि also can not give सुट् in वर्णाश्रमेतराणाम्।

मित—। वर्णाश्च आश्रमाश्च इतरे च इति वर्णाश्रमेतरे। तेषाम् इति वर्णाश्रमेतरेषाम्। अत्र सर्वनामत्वाभावात् "आमि सर्वनाम्नः सुट्" इति सुट् न स्यात् ॥ "द्वन्द्वे च" इति निषेधः समुदायस्य, न तु अवयवानाम्, ततश्च अवयवे 'इतरे' इति अत्र सर्वनामता अस्त्येव किम्? ननु अत्र अवयवे निषेधाभावात् द्वन्द्वसमासे 'इतर' शब्दस्य सर्वनामत्वमादाय तदन्तविधिना षष्ठीबहुवचने आमः सुट् कथं न स्यात्? इत्यत्राह— "आमि सर्वनाम्नः" इति सूत्रे 'अवर्णान्तात् परस्य सर्वनाम्नो विहितस्य आमः' इति व्याख्यानात्, अत्र च समुदाये निषेधात्, 'आमः' सर्वनामपरत्वाभावात् सुट् न स्यादेव ॥ अनेन नित्ये प्रतिषेधे प्राप्ते जसि विभाषा आरभ्यते—

## २२५। विभाषा जसि। १।१।३२ ॥

**दी—। जसाधारं यत् कार्य्यं शीभावाख्यं तत्र कर्त्तव्ये द्वन्द्वे उक्ता संज्ञा वा स्यात्। वर्णाश्रमेतरे—वर्णाश्रमेतराः। 'शीभावं प्रत्येव विभाषा' इत्युक्तम् अतो नाकच्; किन्तु क-प्रत्यय एव—वर्णाश्रमेतरकाः।**

The above prohibition in case of द्वन्द्वसमास will be optional when शी—which शी is ordered in connection with जस्—is being attached. Thus we get both वर्णाश्रमेतराः and वर्णाश्रमेतरे। "This optonality here is in connection with शी which is the कार्य्य of जस्"—this being the explanation here, we can not have अकच् of the word वर्णाश्रमेतरे (in जस्), for अकच् intervening between जस् कार्य्य and the base वर्णाश्रमेतर, this optional सर्वनामता can not come in, and then अकच् also can not come, for then it is not after a सर्वनाम word. Thus there is only कप्रत्यय of the द्वन्द्व base वर्णाश्रमेतर and we thus get वर्णाश्रमेतरकाः।

मित—। सर्वनामानुवर्त्तनमस्ति, पूर्वसूत्रात् द्वन्द्वे इत्यपि। 'जसि' इति सप्तम्याश्रयणात् जस्कार्य्यविषये इत्यर्थो लभ्यते। केचित्तु अत्रेदं व्याख्यानं वदन्ति—"जसि इत्यविभक्तिको निर्देशः। जसः इः=जसि। आर्षः सप्तम्या लुक्। इशब्दो इवर्णपरः सन् 'शी' इतीकारमाचष्टे। ततश्च जसादेशे शीभावे कर्त्तव्य इति फलितम्" इति सर्वं मनोरमायां स्पष्टम्॥ 'जस् आधारो' आश्रयो यस्य इति बहुव्रीहिः। जसाधारमिति जस्-स्थानिकं कार्य्यमित्यर्थः॥ 'शीभावम् प्रति विभाषा' इति अत्रोक्तम्, न तु 'जसिपरे द्वन्द्वसमासे सर्वनामसंज्ञा वा स्यात्' इति व्याख्यातम्। ततश्च अकच् न स्यात्। एवं जसः कार्य्यं प्रति विभाषा कथनात्, अकचि सति अकचा व्यवधानात् एष विकल्पो न स्यात्। ततश्च "द्वन्द्वे च" इति सर्वनामनिषेधात् सर्वनामाश्रितः अकजेव न प्रवर्त्तेत। अतः आह—'अतो नाकच्। किन्तु कप्रत्यय एव"॥

## १२६। प्रथमचरमतयाल्पार्धकतिपयनेमाश्च। १।१।३३॥

दी—। एते जसः कार्य्यं प्रति उक्तसंज्ञा वा स्युः। प्रथमे—प्रथमाः। शेषं रामवत्। तय प्रत्ययः—ततस्तेन तदन्ता ग्राह्याः। द्वितये-द्वितयाः। शेषं रामवत्। नेमे-नेमाः। शेषं सर्ववत्॥

The base प्रथम, चरम, तयप्रत्यान्त bases, अल्प, अर्ध, कतिपय and नेम optionally become सर्वनाम in connectron with जस्कार्य ( orders in place of जस् i. e., in शी ) । By तय, words ending in the affix तयप् are included here.

मित— । "विभाषा जसि" इति वर्त्तते । ततश्च व्याख्यानम्—'जसः कार्यं प्रति उक्तसंज्ञा वा स्युः" । 'तय' इति तयप्प्रत्ययान्ताः शब्दा गृह्यन्ते । शिष्टानि "प्रथम चरम अल्प अर्ध कतिपय नेम" इत्येतानि प्रातिपदिकानि । तत्र 'नेम' इति सर्वादिषु पठ्यते तस्य नित्यं प्राप्ते विभाषा, अन्येषामप्राप्ते विभाषा कथ्यते । तयप्प्रत्ययान्तस्य उभयशब्दस्य गणे पाठात् नित्या सर्वनामसंज्ञा इह जस्कार्यं प्रति विकल्प्यते इति सर्वमेतत् वृत्तिकारेण सुष्ठु उक्तम् ।

**दी— । "विभाषाप्रकरणे तीयस्य ङित्सु उपसंख्यानम्" ( वार्त्तिक ) । द्वितीयस्मै—द्वितीयाय । एवं तृतीयः । अर्थवद् ग्रहणात् नेह—पटुजातीयाय ॥ निर्जरः ।**

In the matter of optionality of सर्वनामसंज्ञा, तीयान्त words become optionally so when case-affixes having 'ङ' as इत्, follows i. e., in ङे, ङसि, ङस् and ङि । By तीय, the significant affix तीय is taken as in the case of द्वितीय+तृतीय, and not any तीय ; so we get पटुजातीयाय without optionality of सर्वनामसंज्ञा ॥ Then there is the base निर्जर ( e. g. विगता जरा अस्य इति निर्जरः ) which is declined as निर्जरः in 1st case singular. But for its peculiarity of declension we look forward—

मित— । 'विभाषा प्रकरणे' विभाषा जसि इति विषये तीयान्तस्य द्वितीय—तृतीयाशब्दस्य 'ङित्सु' ङकारेत् प्रत्ययेषु "ङे—ङसि—ङस—ङि" इत्येतेषु सत्सु सर्वनामवचनम् विकल्पितव्यम् ॥ अर्थवदिति—"अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम्" इति परिभाषया अत्र अर्थवान् तीयः गृह्यते, यथा द्वितीय-तृतीय इत्यत्र ।

'जातीयरि' तु समुदायो एव अर्थवान्। न तु एकदेशः तीयः। अतः 'जातीयरो' तीय नैवात्र गृह्यते। तेन जातीयर्प्रत्ययान्तस्य 'पटुजातीय' शब्दस्य ङित्सु सर्वनामता नास्त्येव॥ निर्गता जरा अस्य इति निर्जरः। निष्क्रान्तः जरायाः इति "निरादयः क्रान्ताद्यर्थे पञ्चम्याः" इति समासे "गोस्त्रियोरुपसर्जनस्य" इति ह्रस्वे सति अपि निर्जरः स्यात्। तस्य विशेषं दर्शयितुमाह—

## २२७। जराया जरसन्यतरस्याम्। ७।१।१०२॥

दी—। जराशब्दस्य 'जरस्' वा स्यात् अजादौ विभक्तौ। "पदाङ्गाधिकारे तस्य तदन्तस्य च"। "अनेकाल्त्वात् सर्वादेशे प्राप्ते निर्दिश्यमानस्यादेशा भवन्ति"। एकदेशविकृतस्य अनन्यत्वात् जरशब्दस्य (? अपि) 'जरस्'। निर्जरसौ। निर्जरसः। इनादीन् बाधित्वा परत्वात् जरस्। निर्जरसा। निर्जरसे। निर्जरसः। पक्षे हलादौ च रामवत्। वृत्तिकृतात्तु—"पूर्वविप्रतिषेधेन इनातोः कृतयोः सन्निपातपरिभाषाया अनित्यत्वमाश्रित्य जरसि कृते 'निर्जरसिन' 'निर्जरसात्' इति रूपे, न तु 'निर्जरसा' 'निर्जरसः' इति केचित्—"इत्युक्तम्। तथा भिसि निर्जरसैः इति रूपान्तरमुक्तम्। तदनुसारिभिश्च षष्ठ्येकवचने 'निर्जरस्य' इत्येव रूपम् स्वीकृतम्। एतच्च भाष्यविरुद्धम्।

जरस् is optionally ordered in place of the base जरा when a विभक्तिप्रत्यय beginning with a vowel follows. The maxim is "whatever is enjoined in the matter of पद and अङ्ग, is also to be understood of *that*, as also of whatever ends with *that*". Thus जरस् is also ordered in place of निर्जरस्। Now if the question arises that जरस् is to come in place of the whole of निर्जरस् being of many letters, then the maxim 'the order is to be of what is specifically mentioned, in the matter of सर्वादेश due to

to अनेकाल्त्व"। Thus जरस् comes in place of जर only of निर्जर; and जर here is again to be taken as the same as जरा, for an original one having some of its part deranged is also taken as the same original. So जर is also same as जरा। Hence no bar for जरस् also coming in place of जर in निर्जर। Thus we get निर्जरसौ निर्जरसः &c., with जरस् coming in place of जर in निर्जर। We are however to remember that जरस्—आदेश being पर in the order of अष्टाध्यायी, comes in supercession of इन-य-आत्-स्य and नुट् आदेश in विभक्ति affixes', so इन &c., can not come after जरस्-आदेश। Thus निर्जरसा (in 3rd. singular) and similarly निर्जरसे and निर्जरसः in 4th and 5th singular. In हलादि विभक्ति, the base निर्जर is declined like राम। Vrittikara (in his Kasika Vritti) says that "some sanction the forms निर्जरसिन (in 3rd singular) निर्जरसात् (in 5th singular) and not निर्जरसा and निर्जरसः by पूर्वविप्रतिषेध i. e. the prior one (इनादेश &c here) coming in place of latter one (i. e. जरस् आदेश here); neither सन्निपात-परिभाषा will here stand in the way (i. e. इन &c coming in place of अ of जर can not destroy it by allowing जरस् to come here), for it is (they say) अनित्य (not obligatory) in this case." According to this view, निजरसैः in also correct in 3rd plural, Similarly these accept the forms निर्जरस्य in 6th singular. But all this is to be set aside being against भाष्यकार's view who says under this very rule that "अतिजरैरित्येव भवितव्यम् सन्निपातपरिभाषया"।

मित—। "अष्टन आ विभक्तौ" (७।२।८४) इत्यतः "विभक्तौ" इत्यनुवर्त्तते। ऋतः" (७।२।१००) इति पूर्वसूत्रात् "अचि" इति वर्त्तते। स च

विभक्तौ अन्वितः सन् "अचिविभक्तौ" इति कलयति। अतः आह—जराशब्दस्य जरस् इति आदेशोवा भवति अजादौ विभक्तौ परतः। ननु जराशब्दस्य विधीयमानो जरसादेशो कथं निर्जरशब्दस्य स्यात्, इत्यत्रोत्तरमाह—"पदाधिकारे अङ्गाधिकारे च यस्य यद्विहितं तत् तस्य तदन्तस्य च बोध्यम्" इति अनया परिभाषया जरशब्दस्य तदन्तस्य च अयमादेशः, जरसादेशस्य अङ्गाधिकारत्वात्। तेन निर्जर इत्यत्रापि जर इत्यस्य जरसादेशः॥ 'जरस्' इत्यादेशः अनेकाल् च, तत्कथं सर्वस्य 'निर्जर' इत्यस्य आदेशः अयं न स्यात्; इत्यत्र समाधत्ते—"अनेकाल्त्वात् सर्वादेशे प्राप्ते निर्दिश्यमानस्यादेशा भवन्ति" इति जराशब्दस्यैव जरस् आदेश न तु सर्वस्य निर्जरशब्दस्य॥ 'निर्जर' इत्यत्र 'जर' इत्यस्य जराशब्दस्वरूपाभावात् कथं पुनः इह जरसादेशः स्यात्? ततः आह—"एकदेशविकृतस्य अनन्यत्वात्" इत्यादि। "छिन्नेऽपि पुच्छे श्वा श्वा एव भवति न गर्दभः" इति न्यायेन 'जर' इत्यस्य आकार—हीनत्वेपि जरास्वरूपत्वात् जरसादेशः स्यादेव। तेन अजादौ विभक्तौ—निर्जरसौ, निर्जरसः इत्यादि वा भवेत्॥ निर्जर आ निर्जर ङसि इत्यत्र जरसादेशे सति "टाङसिङसाम्" इतिसूत्रेण इनादयः स्युः वा, न वा इति सन्देहे सति समाधत्ते—"इनादीन बाधित्वा परत्वात् जरस् एव स्यात्"; इदं सूत्रं परम् अतः "विप्रतिषेधेपरं कार्य्यम्" इति अनेनैव जरस् आदेश एव स्यात्। तेन निर्जरसा, निर्जरसः इत्यादिकं स्यात्। पक्षे जरसादेशाभावे, तथा हलादौ विभक्तौ च रामवत्॥ वृत्तिकारस्तु "निर्जरसिन, निजरसात्" इत्यादि इष्टापत्तिं कथयति केषाञ्चित्मते॥ निर्जर आ निर्जर ङसि इति स्थिते निर्जरस् आ, निर्जरसः ङसि इति जरसादेशे एवं जाते "टाङसिङसाम्—" इत्यस्य अत्र प्रवृत्तिमप्यनुजानीते। ननु अत्र जरस् आदेशः परः, अतः अयमेव विप्रतिषेधे स्याच्चेत्, इत्यत्र एते वदन्ति "विप्रतिषेधे पूर्वं अपि क्वचित् कार्य्यम्" इति पूर्वविप्रतिषेधेन प्रथमं तावत् इनादयः स्युः। ततः एते अत्र सन्निपातपरिभाषायाः अनित्यत्वमाश्रित्य जरसादेशमपि प्रवर्त्तयन्ति। निर्जरशब्दे 'जर' इत्यदन्तत्वमाश्रित्य प्रवर्त्तिताः इनादयः अनिमित्तं 'जर' इत्यस्य विघातास्य इति एषोव न प्रवर्त्तते। ततः निर्जर इन=निर्ज इन=निर्जरसिन। एवं

निर्जरसात् इत्यपि स्यात्। एषां मते—निर्जरसा निर्जरसः इति तु न स्यात्। एवम् एषां मते निर्जरसैः निर्जरस्य इत्यादि अपि स्यात्। किन्तु सर्वमेतत् भाष्यविरोधात् उपेक्ष्यम्। किञ्च गोनर्दीयस्त्वाह—"अतिजरैरित्येव भवितव्यम् सन्निपातपरिभाषया"। इति विस्तरेणालम्।

## २२८। पद्-दन्नोमास् हृन्निशसन् यूषन् दोषन् यकन् शकन् उदन्नासञ्छस्प्रभृतिषु। ६।१।६३॥

**दी—। पाद दन्त नासिका मास हृदय निशा असृज् यूष दोष यकृत् शकृत् उदक आस्य एषां पदादयः** [ यथाक्रमं पद् दत् नस् मास् हृत् निश् असन् यूषन् दोषन् यकन् शकन् उदन् आसन् इत्यादयः ] **आदेशाः स्युः शसादौ वा। यत्तु "आसनशब्दस्य आसन्-आदेशः" इति काशिकायाम् उक्तम् तत् प्रामादिकम्॥ पादः—पादौ—पादाः। पादम्—पादौ—पादान्, पदः। पदा—पादेन इत्यादि।**

मित—। सुगमा॥ दन्त+शसि इत्यत्र अनेन 'दत्' आदेशे सति दत्+अस् इति स्थिते अत्र "झलां जशोऽन्ते" इति सूत्रेण पदान्ते विधीयमानं जश्त्वमाशङ्क्य पदसंज्ञा-विधायकं सूत्रं कथयितुमाह—

## २२९। सुडनपुंसकस्य। १।१।४३॥

**दी—। सुट् इति प्रत्याहारः। स्वादिपञ्चवचनानि सर्वनामस्थान-संज्ञानि स्युः अक्लीबस्य।**

Here in this sutra सुट् is a प्रत्याहार with सु ( of 1st case singular ) & ending with ट् of औट् ( i. e., 2nd case dual ). Thus altogether first five विभक्तिप्रत्यय are got. These five are called **सर्वनामस्थान**, if these are not of neuter gender.

मित—। स्वादिपञ्चवचनानि—सु औ जस् अम् औट् इति पञ्च अत्र गृह्यन्ते। 'सु' इत्यारभ्य 'औटः' टकारेण प्रत्याहारकरणात्, इमौ 'सुट्' इति

प्रत्याहारः, इति व्याख्यातत्वात् ॥ "सुटस्त्रीपुंसयोः" इतिवक्तव्ये गुरुनिर्देशो ज्ञापयति प्रसज्यप्रतिषेधेपि नञ्समासोक्ति इति कैयटः। पर्युदासमिति जयादित्यो दीक्षितश्च। नपुंसके न विधिर्नापि प्रतिषेधः इति ॥

## २३० । स्वादिष्वसर्वनामस्थाने । १।४।१७ ॥

दी— । कप्-प्रत्ययावधिषु स्वादिषु असर्वनामस्थानेषु परतः पूर्वं पद-संज्ञं स्यात्।

When affixes सु etc ( those that are entitled as सर्वनामस्थान being excepted ) ending with the affix कप् ( said towards the end of the fifth chapter of अष्टाध्यायी ) follow, then what precedes these is called पद। Thus in दत्+अस् ( 2nd plural ), अस् being outside सर्वनामस्थान, दत् is a पद and जश्त्व is to follow, now we look foward—

मित। सूत्रे 'असर्वनामस्थाने' इति एकवचनमार्षम्। पञ्चमाध्यायान्ते कपः आ प्रत्ययाः गृह्यन्ते। सर्वनामस्थानवर्जितेषु स्वादिषु प्रत्ययेषु परतः पूर्वं पदसंज्ञं भवति इति सूत्रार्थः। सुपीति वक्तव्ये स्वादिष्विति वचनमधिकपरिग्रहार्थम्; अत आह कप्रत्ययावधिषु॥ ततश्च दत्+अस् इत्यत्र असो सर्वनामस्थानत्वाभावात् 'दत्' इत्यस्य अनेन सूत्रेण पदत्वे सति प्रतिप्रसवमुपन्यस्यति—

## २३१ । यचि भम् । १।४।१८ ॥

दी । यकारादिषु अजादिषु च कप्—प्रत्ययावधिषु स्वादिष्वसर्वनाम-स्थानेषु परतः पूर्वं भसंज्ञं स्यात्।

When affixes ( within the jurisdiction ending with कप्, at the end of 5th chapter of Astadhyayi ) beginning with यकार or a vowel ( सर्वनामस्थान affixes being excepted ) follow, then

what precedes these is called a "भ" and not पद ( as said in the prior sutra ). Thus in दत्+अस्, दत् is a "भ" & not पद, so जश्त्व can not come in here—that being a पदान्तविधि ।

मित—। "स्वादिष्वसर्वनामस्थाने" अत्र वर्त्तते। य् च अच् च इति समाहार-द्वन्द्वः॥ पूर्वेण पदसंज्ञायां प्राप्तायां तदपवादभूता भसंज्ञा अनेन विधीयते। सर्व-नामस्थानवर्जिते यकारादौ अजादौ च स्वादौ परतः पूर्वं भसंज्ञं भवति इति सूत्रार्थः। तेन दत्+अस् इत्यत्र अजादौ स्वादौ परतः 'दत्' इत्यस्य भसंज्ञा, तेन पदत्वाभावात् पदान्तविधिः जश्भावः अत्र न स्यात्। ननु अत्र पदभसंज्ञयोरुभयोः युगपत् समावेशः स्यात् वा न वा इत्याशङ्कायामाह—

**२३२ । आ कड़ारादेका संज्ञा । १।४।१ ॥**

**दी—। इत ऊर्ध्वं "कड़ाराः कर्मधारये" ( २।२।३८। सूत्र ७६१ ) इत्यतः प्राग् एकस्य एकैव संज्ञा ज्ञेया। या परा अनवकाशा च। तेन शसादौ अचि भसंज्ञैव; न पदत्वम्। अतो जश्त्वं न। दतः। दता। जश्त्वम् दद्भ्याम् इत्यादि॥ मासः। मासा। भ्यामि रुत्वे यत्वे च यलोपः—माभ्याम्। माभिरित्यादि॥**

Henceforth up to the jurisdiction of the rule "कड़ाराः कर्म-धारये" ( २।२।३८ ), one designation is to be attached to a particular thing & not two designations at a time. That which is later is powerful and also that which has no scope is powerful. Thus here भसंज्ञा being later and of smaller scope than पदसंज्ञा, comes here in शस् etc, that begin with a vowel- Hence no जश्भाव in दत्+अस्। Thus we get दतः। In दद्भ्याम् however दत् being a पद we have जश्त्व here. Again rule 228 directs मास् in place of मास in शस् &c. In मास्+भ्याम्, first we have रु by the rule

"ससजुषो रुः" ( ante ). Then this रु is replaced by य by the rule "भोभगोअघोअपूर्वस्य योऽशि" ( ante ) and this य again elides by the rule "हलि सर्वेषाम्" ( ante ), and we finally get माभ्याम्—माभिः &c.

मित—। आङ् इह मर्य्यादायाम् नाभिविधौ [ तेन विना मर्य्यादा तत्सहितोभिविधिः इति व्याख्यानात् )। कड़ारशब्दस्य इह प्रवेशे विनियोगाभावात्, "आ कड़ारात् एकासंज्ञा" इत्यत्र का च संज्ञा स्यात् ? इत्याह,—या परा निरवकाशा च सैव संज्ञा भवेत् ; उभयोः सावकाशत्वे या परा सा प्रवर्त्तते ; धनुषा विध्यति इत्यत्र परा करणसंज्ञा अपादानसंज्ञां बाधते। एकस्याः पुनः अनवकाशत्वे पूर्वापि अनवकाशा परामपि सावकाशां बाधते। "भवतष्टक्छसौ" ( ४।२।११५ ) इति भवदीयः। अत्र "सिति च" ( १।४।२५ ) इति पूर्वा पदसंज्ञा परां भसंज्ञां बाधते। तेन 'भवदीय' इत्यत्र जश्त्वं भवति॥ एवं शस् इत्यत्र परत्वात् निरवकाशत्वात् च भसंज्ञा सिध्यति ततः आह—"न पदत्वम्। अतो जश्त्वं न"। तेन दत्+अस्=दतः॥ दत्+भ्याम् इत्यत्र भ्यामो पदत्वात् जश्त्वेसति दद्भ्याम्॥ मास+जश्=मास+अस्=मास्+अस्=मासः ( सूत्र २२८ )। अस्य मासशब्दस्य मासादेशे भ्यामि परे मास्+भ्याम् इति स्थिते "ससजुषो रुः" इति रुत्वं बाधित्वा "भोभगो अघो अपूर्वस्य" इति यादेशे "हलि सर्वेषाम्" इति यलोपे सति माभ्याम्। एवं माभिरित्यादि॥

## २३३। भस्य। ६।४।१२९॥

दी—। इत्यधिकृत्य—

## २३४। अल्लोपोऽनः। ६।४।१३४॥

दी—। **अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरः योऽन् तस्य अकारस्य लोपः स्यात्।**

अन् which is final part of an अङ्ग ( base ) having an affix beginning with य or अच् ( सर्वनामस्थान being excepted ) following it, elides its अकार। In other words, a base having अन् at the

end & becoming "भ" at the same time, elides its अकार। Thus the base यूष (meaning मण्ड) becoming यूषन् (by rule 228) in शस् stands as यूषन्+अस्=यूष्न्+अस् (the अ of final अन् eliding by this rule)=यूष्णः with cerebral, for which we look forward—

मित—। "अत् लोपः अनः" इति सूत्राङ्गानि। तत्र 'अत्' इति लुप्तषष्ठीकं भिन्नं पदम्। 'अनः' इत्यवयवषष्ठी, "अतः" इत्यस्य विशेषणम्। 'अङ्गस्य' "भस्य" इति अधिकारोस्ति। ततः आह—अङ्गावयवः यः अन् तदवयवस्य अकारस्य लोपः स्यात्, अन्नन्तं भसंज्ञं चेत्। ततः (भसंज्ञाधिकारे) आह—'असर्वनामस्थानयजादिस्वादिपरो यः अन्' इत्यादि। "अन्नन्तस्य भस्य अङ्गस्य अकारस्य लोपः" इति व्याख्याने तक्ष्णा इत्यादौ तकाराकारस्यापि लोपः प्राप्नोति। "भस्य अङ्गस्य अनोऽकारस्य" इति व्याख्याने तु मनसा इत्यादौ लोपः स्यात्। "अन्नन्तस्य भस्याङ्गस्य अनोकारस्य" इत्यपि अनन्तक्ष्णा इत्यत्रलोपः स्यात्। अतः सुष्ठु आह—"अङ्गावयवो—" इत्यादि॥ ततश्च मण्डार्थकस्य यूषशब्दस्य शसि यूष+शस्=यूषन्+अस् (सूत्र २२८)=यूष्न्+अस् (सूत्र २३४)=यूष्णः। अत्र णत्वविधायकं सूत्रमाह—

## २३५। रषाभ्यां नो णः समानपदे। ८।४।१॥

दी—। एकपदस्थाभ्यां रेफषकाराभ्यां परस्य नस्य णः स्यात्। यूष्णः। यूष्णा। "पूर्वस्मादपि विधौ स्थानिवद्भावः" इति पक्षे तु 'अड्व्यवाये' इत्येवात्र णत्वम्। "पूर्वत्रासिद्धे न स्थानिवत्" (वार्त्तिक) इति त्विह नास्ति; "तस्य दोषः संयोगादिलोप—लत्व-णत्वेषु" इति निषेधात्॥

न coming after रेफ or षकार in the same पद, becomes cerebral. Thus यूष्णः & यूष्णा। If the sutra "अचः परस्मिन् पूर्वविधौ" (ante) is explained as "अजादेश is स्थानिवत् if there is later विधि after स्थानीभूत अच् which is prior," then here in यूष्णः &c. we have cerebral by the rule "अट्कुप्वाङ्नुम्व्यवायेपि" (notwithstanding the

intervention of अ here). Though this present rule (i.e., णत्व) is within the पूर्वत्रासिद्धीय (८।२।१) jurisdiction, still the Varttika "पूर्वत्रासिद्धे न स्थानिवत्" has no application here, this varttika being already vitiated by the later varttika "तस्य दोषः संयोगादिलोपलत्वणत्वेषु", and here we have णत्वविधि।

मित—। यूष्णः इत्यत्र एवं णत्वंसुस्थितम्। ननु "अचः परस्मिन् पूर्वविधौ"—इति सूत्रे स्थानीभूतादचः पूर्वस्मात् परस्य विधौ सति अजादेशः स्थानिवत् इति पक्षोपि भाष्ये अस्ति। एतत्पक्षमाश्रित्य अल्लोपः स्थानि—अकार इव। तत् यूष्णः इत्यत्र अकारव्यवधाने सति कथमनेन सूत्रेण णत्वम्। तत्रोत्तरमाह— "अट्कुप्वाङ्नुम्व्यवायेपि" इति अट्व्यवाये णत्वमेव स्यात्। एतत् सर्वमभिप्रेत्य आह—"पूर्वस्मादपि विधौ" इत्यत्र णत्वम्॥ ननु एषः प्रश्नः कथं उदेति—पूर्वत्रासिद्धीयाधिकारे (८।२।१) स्थानिवत्त्वाभावात् इति चेत्? तत्राह—पूर्वत्रासिद्धीये णत्वविधौ—"पूर्वत्रासिद्धे न स्थानिवत्" इति वार्त्तिकं न प्रवर्त्तते एव, तस्य "तस्य दोषः संयोगादिलोप लत्व णत्वेषु" इति परवार्त्तिकेन बाधात्॥ यूषन्+भ्याम् इति स्थिते आह—

## २३६। नलोपः प्रातिपदिकान्तस्य। ८।२।७॥

**दी—। नेति प्रातिपदिकेति च लुप्तषष्ठीके पदे। प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य नकारस्य लोपः स्यात्। नलोपस्य असिद्धत्वात् दीर्घत्वम् एत्वम् ऐस्त्वम् च न। यूषभ्याम्। यूषभिः। यूषभ्य इत्यादि।**

The words "न" & "प्रातिपदिक" in this Sutra are षष्ठ्यन्त words, षष्ठी विभक्ति being elided here owing to आर्षप्रयोग। Thus the explanation is—The word which is entitled as a प्रातिपदिक has its नकार at the end elided. Hence यूषन्+भ्याम्=यूष+भ्याम्=यूषभ्याम्; similarly यूषभः। Here after नलोप, दीर्घत्व by "सुपि च", एत्व by "बहु-

वचने झल्येत्" and ऐस्त्व by "अतोभिस ऐस्" cannot operate, for नलोप being in पूर्वत्रासिद्धीयाधिकार, is here regarded as not elided.

मित—। "न लोपः प्रातिपदिक अन्तस्य" इति चतुष्पदं सूत्रम्। तत्र 'न' इति 'प्रातिपदिक' इति लुप्तषष्ठीकेपदे। ततः—प्रातिपदिकावयवस्य अन्तस्य नस्य लोपः स्यात् इत्यर्थः जायते। अतएव वृत्तौ—'प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य' इत्यादिव्याख्यातम्॥ एवम् यूषन्+भ्याम्=यूषभ्याम्। यूषन्+भ्यः=यूषभ्यः। अत्र नकारलोपे सति "सुपि च" इति दीर्घत्वम्, "बहुवचने झल्येत्" इति एत्वम्, "अतो भिस ऐस्" इति ऐस्त्वमपि न प्रवर्त्तते, नलोपस्य पूर्वत्रासिद्धीयाधिकारत्वात्, नलोपस्य असिद्धत्वात्॥ यूषन्+ङि इत्यत्र "अल्लोपोनः" इति नित्ये अल्लोपे प्राप्ते आह—

## २३७। विभाषा ङिश्योः। ६।४।१३६॥

**वृ—। अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्य अकारस्य लोपो वा स्यात् ङिश्योः परयोः। यूष्णि-यूषनि। पक्षे रामवत्। "पद्दन्नो—" (सूत्र २२८) इति सूत्रे प्रभृतिग्रहणं प्रकारार्थम्। तथा च— औङः श्यामपि दोषन्-आदेशः। अतएव भाष्ये "ककुद्दोषनी इत्युदाहृतः। तेन "पद्‌ङ्घ्रिश्चरणोऽस्त्रियाम्" "स्वान्तं हृन्मानसं मनः" इत्यादि च सङ्गच्छते। आसन्यं प्राणमूचु:—इति च। आस्ये भवः आसन्यः। 'दोष्' शब्दस्य नपुंसकत्वमत एव भाष्यात्। तेन "दक्षिणं दोर्निशाचर" इति सङ्गच्छते। "भुजबाहू प्रवेष्टो दोः" इति साहचर्यात् पुंस्त्वमपि। "दोषं तस्य तथाविधस्य भजतः" इति॥ द्वयोरह्नोर्भव द्व्यह्नः।**

अन् which is the final part of an अङ्ग (base) having an affix beginning with य or अच् (सर्वनामस्थान being excepted) following it, elides its अकार optionally when ङि (seventh case singular) or

शी (1st and 2nd dual in neuter) follows. (See also under अल्लोपोन: Sutra 234). Thus we get both यूष्णि and यूषणि in the seventh singular. The base when यूष is declined like राम। The word प्रभृति in the Sutra "पद्दन्नो—" (२२४) means प्रकार i.e., सदृश। So also in शी which comes in place of औङ् in the neuter, दोषण् is ordered in place of दोष्। Thus भाष्यकार uses ककुद्दोषणी (with दोषन्—आदेश for दोष् in शी)। Hence also we see "पदङ्घ्रिश्चरणोऽस्त्रियाम्" with पद् for पाद in 1st singular, and "स्वान्तं हृन्मानसं" &c. with हृत् for हृदय in 1st singular &c. Similarly in "आसन्य' प्राणमूचुः" we see आसन् coming in place of आस्य in the sense of आस्ये भवः। So also remember that आसन् comes in place of आस्य and not आसन as said in Kasika. From the use of the epithet ककुद्दोषणी in the भाष्य we see that the base दोष् is neuter. Thus it is rightly said in Raghu—as "दाक्षिणं दोः" &c. And from the lexicon "भुजबाहुप्रवेष्टो दोः", दोष् is also masculine as well. Hence also Sriharsa uses दोषम् in the masculine in—दोषं तस्य तथाविधस्य भजतः &c. In द्वयोरह्नोर्भवः we get द्व्यह्नः with तद्धितार्थसमास, अह्न being ordered for अहन् by the rule "अह्नोऽह्न एतेभ्यः" (and टच् समासान्त coming by the rule—"राजाहःसखिभ्यष्टच्")। It is declined like राम; only its speciality in ङि is being shown by the following rule—

मित—। "अल्लोपोन:" इति अत्र वर्त्तते; तच्च प्राग् व्याख्यातम्। वृत्तिरपि पूर्ववदेव इति पूर्वत्र द्रष्टव्यम्। ङिश्च शी च इति विग्रहः; तयोः। 'ङि' इति सप्तम्येकवचनग्रहणम्। 'शी' इति "नपुंसकाच्च" इति सूत्रेण विहितः 'शी' (नपुंसकस्य प्रथमाद्वितीयाद्विवचनं) गृह्यते, न तु जस्शसोः शिः; तस्य सर्वनामस्थानत्वात् भसंज्ञात्वाभावात्। इति ङौ यूषन् आदेशे यूष्णि यूषणि। पक्षे यूषन् आदेश

भावे रामवत् रूपम् ॥ "पद्दन्नो—" इति सूत्रे शसूप्रभृतिषु इत्यत्र प्रभृतिग्रहणम् प्रकारार्थम् सदृशार्थम् इत्यर्थः। तेन औङः श्याम् ( नपुंसकस्य प्रथमाद्वितीयाद्विवचने इत्यर्थः ) दोष् शब्दस्य दोषन् आदेशः स्यात्। ततश्च भाष्ये "ककुद्दोषणी याचते महादेवः" इत्यत्र "ककुद्दोषणी" इति उदाहृतम्। एवं "पदङ्घ्रिः—" इत्यत्र पादस्थाने प्रथमायां पदादेशः, "स्वान्तं हृन्मानसं" इत्यत्र च हृदयस्थाने प्रथमैकवचने एव हृदादेशः अपि सङ्गच्छते। [ वस्तुतस्तु "तेन 'पदङ्घ्रिः—',स्वान्तं हृन्मानसम्' इत्यादि च सङ्गच्छते" इत्येतत्दीक्षितपठितंप्रक्षिप्तमिव भाति। 'पद्' इति 'हृद्' इति च पृथक् शब्दद्वयम्, न तु पादस्य हृदयस्य च आदेशभूतम्। अन्यथा "पद्गा भरद्वाजमुनिं सशिष्यम्" इति भट्टिप्रयोगो न सङ्गच्छते। तत्र 'पद्' इति पृथक् पदं न तु पादस्य आदेशभूतम्,—तथा च 'वाचस्पत्यम्" पद्भ्यां गन्तरि पदातौ...पादशब्देन समासे तु अदन्तपदादेशे 'पदग' इत्येव"। एवम् "हृद्गसिन्धन्ते पूर्वपदस्य च" इति सूत्रे 'हृत्' इति हृदयादेशात् पृथक् पदं गृह्यते; यतः सूत्रे "लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य ग्रहणमुचितम्"। तथा अर्थवदनर्थवतोः अर्थवद्ग्रहणमपि युक्तम्। अर्थवान् च 'हृत्' अनादेशभूतः। अतः मनेत्र 'हृत्' इति हृदयादेशभूतात् पृथक् शब्दोस्ति। तथा च दुर्घटवृत्तौ—सुहृद्+अण् इत्यनेन सौहार्द्, सौहृद् इति पदद्वयम् उदाहृतम्। द्वितीयं तावत् 'हृत्' शब्दस्य हृदयादेशभूतस्य लाक्षणिकत्वात् "हृद्भग—" सूत्रस्य अविषयत्वात्। वामनस्य "अनणि हृद्भावात्" इत्यस्मात् अपि ज्ञायते 'हृत्' इति स्वतन्त्रः शब्दोस्ति। इत्यासाम् विस्तरेण ]॥ एवम् "आसन्यं प्राणमूचुः।" इत्यादि आस्ये भवः इत्यर्थे आस्य—स्थाने आसन् आदेश अपि सङ्गच्छते। एवं आस्ये भवः=आसन्यः इति अवोक्तत्वात् आसनशब्दस्य आसन्—आदेशः इति निरस्त एव। उक्तभाष्योदाहरणाच्च दोष् शब्दस्य नपुंसकत्वम् ज्ञायते। रघौ अपि "दक्षिणं दोः" इति नपुंसकदोरेवोदाहृतम्॥ "भुजबाहू—" इत्यादि कोषाच्च दोष् शब्दस्य पुंस्त्वमपि साधुः। श्रीहर्षे "दोषं तस्य—" इत्यादौ तथा उदाहृत्वात्॥ द्वयोरह्नोः भव इति तद्धितार्थसमासे, "कालात् ठञ्" इति ठञि, "द्विगोर्लुगनपत्ये" इति ठञो लुकि, "राजाहःसखिभ्यष्टच्" इति टचि 'अह्नोऽह्न एतेभ्यः" इति

अह्नादेशे सति द्व्यह्नः इति रूपसिद्धिः। तस्य रामवत् रूपाणि। ङौ तु विशेषं दर्शयति—

## २३८। संख्याविसायपूर्वस्य अह्नस्य अहन्अन्यतरस्याम् ङौ। ६।३।११०॥

दी—। संख्यादिपूर्वस्य अह्नस्य अहन्—आदेशः वा स्यात् ङौ। द्व्यह्नि—द्व्यहनि—द्व्यह्ने। विगतमह्नः व्यह्नः। व्यह्नि—व्यहनि—व्यह्ने। अह्नः सायः सायाह्नः। सायाह्नि—सायाहनि—सायाह्ने। इत्यदन्ताः॥

मित—। संख्याच विश्च सायश्च संख्याविसायाः। ते पूर्वे यस्मात्। तादृशस्य अह्नस्य अहन् वा स्यात् ङौ॥ अहन्नादेशे अल्लोपे द्व्यह्नि; तदभावे—द्व्यहनि। अन्यथा रामवत्, द्व्यह्ने इति॥ विगतम् अहः इति व्यह्नः। "प्रादयोगताद्यर्थे प्रथमया" इति प्रादिसमासः। पूर्ववत् अह्नादेशः। रूपाण्यपि द्व्यह्नवत्॥ अह्नः सायः इति सायाह्नः एकदेशितत्। "सर्वोऽप्येकदेशो अह्ना समस्यते" इत्यस्य अत्र सायग्रहणमेव ज्ञापकम्। द्व्यह्नवत् अहनादेशे अल्लोपे तदभावे च रूपाणि॥

विश्वं पातीति क्विपि विश्वपाशब्दः सिध्यति। अतोनासौ आबन्तः ततश्च न सुलोपः। एवमस्य रूपाण्याह—

दी—। विश्वपाः (इति प्रथमायाः एकवचनम्)।

विश्वपा+औ इति स्थिते आह—

## २३९। दीर्घाज्जसि च। ६।१।१०५॥

दी—। दीर्घात् जसि इचि च परे पूर्वसवर्णदीर्घः न स्यात्। वृद्धिः। विश्वपौ। सवर्णदीर्घः—विश्वपाः।

पूर्वसवर्णदीर्घ by the rule "प्रथमयोः पूर्वसवर्णः" (ante) does not come in when जस् or affixes beginning with an इच् vowel (i.e., all vowels except अ & आ) follow a दीर्घ base. Thus in विश्वपा+ we do not get पूर्वसवर्णदीर्घ, but वृद्धि only by ordinary सन्धि rules.

and the form is विश्वपौ। And by सवर्णदीर्घः by सन्धि, we get विश्वपाः in जस्।

मित—। विश्वपा + औ इत्यत्र "प्रथमयोः पूर्वसवर्णः" इति दीर्घो न स्यात् ततः एचि परे वृद्धिः—विश्वपौ इति। एवम् सर्वमत्र सुगमम्॥ ननु "नादिचि" (६।१।१०४) इत्यनेनैव अवर्णात् इचि पूर्वसवर्णदीर्घे असति, वृद्धौ च सत्यां विश्वपौ इति सिध्यति, जसि च पूर्वसवर्णदीर्घे णापि इष्टापत्तिं स्यात् तत् कथमत्र "दीर्घाज्जसि" इति पृथक् सूत्रेण ? तत्रोत्तरमाह—

**दी—। यद्यपीह औङि "नादिचि" इत्येव सिद्धम्। जसि तु सत्यपि पूर्वसवर्णदीर्घे क्षतिर्नास्ति, तथापि "गौर्य्यौ गौर्य्यः" इत्याद्यर्थं ("दीर्घात् जसिच" इति) सूत्रम्। इहापि न्याय्यत्वात् (परत्वात् प्राप्ते इत्यर्थः) सूत्रम् उपन्यस्तम्।**

It is true that in औङ् (1st & 2nd dual) the form विश्वपौ is got by the application of the rule "नादिचि" (which bars पूर्वसवर्णदीर्घ after अवर्ण bases followed by विभक्ति प्रत्यय beginning with इच vowel); and in जस् the very form विश्वपाः is got by पूर्वसवर्णदीर्घ also by the application of the rule "प्रथमयोः पूर्वसवर्णः", still the necessity of the rule "दीर्घाज्जसि च" is for the completion of the forms गौर्य्यौ गौर्य्यः &c. And this rule is enumerated here for it applies here being पर to the rules "नादिचि" and "प्रथमयोः पूर्वसवर्णः"।

मित—। सुगमा॥ विश्वपा + शस् इति स्थिते आह—

**२४०। आतो धातोः। ६।४।१४०॥**

**दी—। आकारान्तो यो धातुः तदन्तस्य भस्य अङ्गस्य लोपः स्यात्। "अलोऽन्त्यस्य" (इति अन्त्यस्यैव लोपः)। विश्वपः। विश्वपा। विश्वपाभ्यामित्यादि। (विश्वपे। विश्वपः। विश्वपि। इत्यादि)**

**एवं शङ्खध्मादयः ॥ धातोः किम्। हाहान्** ( हाहा इति नासौ धातुशब्दः किन्तु गन्धर्वविशेषवाचकमव्युत्पन्नं प्रातिपदिकम्। ततः अस्य सूत्रस्य अप्राप्तौ "तस्मात् शसो नः पुंसि:" इति हाहान् इति सिध्यति )। **टा—सवर्णदीर्घः=हाहा** ( तृतीयैकवचनम् )। **ङे—वृद्धिः=हाहै। ङसिङसोर्दीर्घः=हाहाः। ओसि वृद्धिः=हाहौः। ङौ "आद्गुणः"=हाहे। शेषं विश्वपावत् ॥**

A base ending with an आकारान्त धातुयुक्त word elides its आ if it be a "भ"। The elision is of the last letter आ by the rule "अलोऽन्त्यस्य"। Thus विश्वपा शस् being a "भ" becomes विश्वप्+अस् =विश्वपः। Similarly विश्वपा-विश्वपे, विश्वपः, विश्वपोः &c. So also decline शङ्खध्मा ( शङ्खं धमति इति क्विप् ) &c. Why do we say "धातोः" in the Sutra ? Witness हाहान् in the 2nd plural ( a "भ" of the base हाहा which is not a धात्वन्त word but a primitive word being a name of a गन्धर्व )। Similarly we get हाहै &c. ( without अलोप but वृद्धि ) for it is not धात्वन्त, though a भसंज्ञक word when ङे follows.

मित—। सुगमा ॥ सूत्रे धातोश्चेत्, कथं "हलः श्नः शानज्झौ" ( ३।१।८३ ) "समासे अनञ्पूर्वे क्त्वो ल्यप्" इत्यादौ श्नः इति क्त्वः इति च अधातोः 'श्ना' इत्यस्य 'क्त्वा' इत्यस्य च स्थाने प्रयोगः ? इत्यत्राह—

**दी—। आतः इति योगविभागात् अधातोरपि आकारलोपः क्वचित्—क्त्वः। श्नः।**

मित—। 'क्त्वः श्नः'—सौत्रा एते प्रयोगाः इति अपि केचित् वदन्ति ॥

इत्यादन्ताः ॥

हरि+सु=**हरिः** ( रुत्वविसर्गौ ) ॥ हरि+औ इति स्थिते—

**दी—। "प्रथमयोः पूर्वसवर्णः" ( सूत्र १६४ ) इति हरी ॥**

हरि+जस् इति स्थिते—

२४१ । जसि च । ७।३।१०९ ॥

दी— । ह्रस्वान्तस्य अङ्गस्य गुणः स्यात् जसि परे । हरयः ।

A base ending in ह्रस्व vowel (as हरि here) takes गुण in place of its last vowel ( by "अलोऽन्त्यस्य" ) when जस् follows. Thus हरि+जस्=हरे+अस् (by गुण) = हरयः ( by सन्धि ) ।

मित— । सुगमा ॥ हे हरि+स् इति स्थिते आह—

२४२ । ह्रस्वस्य गुणः । ७।३।१०८ ॥

दी—ह्रस्वस्य गुणः स्यात् सम्बुद्धौ । "एङ्ह्रस्वात्—" ( सूत्र १९३ ) इति सम्बुद्धिलोपः । हे हरे । हरिम् ( अमि परे पूर्वरूपे सतिरूपम् ) । हरी । हरीन् ।

A base ending in ह्रस्व vowel takes गुण in its final vowel ( by the rule "अलोऽन्त्यस्य" ) when सं'बुद्धि follows. Then the form हे हरि +स्=हे हरे+स् । And then the सं'बुद्धि elides by the rule "एङ्ह्रस्वात्" (ante), and we get हे हरे । Similarly हरिम् ( by पूर्वरूप ), हरी and हरीन् ( by पूर्वसवर्णदीर्घ, and न for शस by the rule "तस्मात् शसो नः पुंसि" ) ।

मित— । सुगमा ॥ हरि+आ इति स्थिते विशेषं वक्ष्यन् प्रथममस्य घिकार्य-मुपन्यस्यति—

२४३ । शेषो घ्यसखि । १।४।७ ॥

दी— । अनदीसंज्ञकौ ह्रस्वौ यौ इवर्णोवर्णौ तदन्तं सखिवर्जं घिसंज्ञं स्यात् । शेषः किम् ? मत्यै । एकसंज्ञाधिकारात् सिद्धे शेषग्रहणं स्पष्टार्थम् । ह्रस्वौ किम् । वातप्रम्ये । इदुतौ ( यू ) किम् ? मात्रे ।

Bases ending in short इ and short उ that are not technically called here as नदीसंज्ञक words (by the rule "यू स्त्र्याख्यौ नदी" etc) are called

घिसंज्ञक words, with the exception of the base सखि। Why do we say 'शेष' in this rule? शेष here means those इ and उ वर्णान्त bases that are not known as नदी (Cf. "अनदीसंज्ञकौ" in the vritti). Here by the rule "आ कडारात् एका संज्ञा" we get one संज्ञा at a time, here "यू स्त्र्याख्यौ नदी" having given नदीसंज्ञा to ई and ऊ वर्णान्त feminine bases and "शेषः घ्यसखि" having given that bases ending in ह्रस्व इ+उ वर्ण are घिसंज्ञक and "ङिति ह्रस्वश्च" (१।४।६) providing नदीसंज्ञा to ह्रस्व fem. bases, the word शेष in the Sutra seems superfluous, for one संज्ञा will come at a time and no doubt arises here. This rule coming after the rule "ङिति ह्रस्वश्च" clearly implies that its jurisdiction is in cases of ह्रस्व इ and उ वर्णान्त bases that are not स्त्र्याख्य। Thus मत्यै &c. with optional नदीत्व of मति is got. Still शेष is used in the Sutra to clear all doubts about non—घिसंज्ञकत्व of मति &c in मत्यै। The word ह्रस्वौ in the vritti is taken to bar घिसंज्ञा of दीर्घ इकारान्त masculine bases as वातप्रमी &c. If ह्रस्व is not used in the vritti then वातप्रमी being घिसंज्ञक will in the 4th singular become वातप्रमये by the rule "घेर्ङिति" and not वातप्रम्ये the usual form. Why do yousay 'यू' i.e. इवर्णोवर्णौ (इदुतौ) in the vritti? This is to exclude घिसंज्ञा of ऋकारान्त bases. If ऋकारान्त bases are घिसंज्ञक then मातृ+ए will give मतरे with गुण by the rule "घेर्ङिति"। [Thus हरि is a घिसंज्ञक word]. And we look forward—

मित—। "ङिति ह्रस्वश्च" (१।४।६) इत्यतः ह्रस्वः इत्यनुवर्त्तते। "यू स्त्र्याख्यौ नदी" (१।४।३) इत्यतः 'यू' इत्यनुवर्त्तनमस्ति। 'इ' इवर्णः 'उ' उवर्णः। इश्च उश्च "यू"। तदाह—ह्रस्वौ यौ इवर्णोवर्णौ तदन्तं घिसंज्ञम् स्यात्। शेषशब्दात् अत्र 'अनदीसंज्ञकत्वमाह'। 'असखि' इति पर्य्युदासात् सखिशब्दस्य घिसंज्ञां वारयति;

किन्तु सख्यन्तस्य सखिभिन्नत्वात् प्राप्ता संज्ञा—सुसखेः स्वमिति ॥ अत्र कश्च शेषः ? इत्याह वृत्तिकारः—"ह्रस्वमिवर्णोवर्णान्तं यन्नस्त्र्याख्यं स्त्र्याख्यं च यन्न नदीसंज्ञकं स शेषः" ॥ शेषग्रहणे असति "ङिति ह्रस्वश्च" इति नदीत्वपक्षेपि घिसंज्ञा स्यात् । ततश्च गुणे अयादेशे मतये इति भवति । शेषग्रहणे तु मतये इत्यत्र यद्यपि घिसंज्ञा तथापि मत्यै इत्यत्र न स्यात् ; "आ कडारात् एका संज्ञा" इत्यनेन एकदा एकसंज्ञाया एव समावेशात् । तथापि शेषग्रहणं स्पष्टार्थम्, अतः आह—"एकसंज्ञाधिकारत्वात् सिद्धं शेषग्रहणं स्पष्टार्थम्" ॥ वृत्तौ "ह्रस्वौ इवर्णोवर्णौ इति ग्रहणात् 'वातप्रमी' इति पुलिङ्गशब्दस्य ह्रस्वत्वाभावात् घिसंज्ञा न स्यात् । ततश्च "घेर्ङिति" ( सूत्र २४५ ) इत्यस्य प्रवृत्तिः न स्यात् । ततः वातप्रमी+ङे=वातप्रम्ये, नतु घिसंज्ञकशब्दवत् वातप्रमये स्यात् ॥ वृत्तौ यू ( इश्च उश्च=यू ) इति कथं ग्रहणम् स्यात् ? मातृ इति ऋकारान्तस्य घिसंज्ञा यथा न स्यात् तदर्थम् । अतः मात्रे इति रूपम् न तु "घेर्ङिति" इति गुणे अकारे रपरत्वे मातरे इति स्यात् ॥ एवम् हरिशब्दस्य घिसंज्ञायाम् हरि+आ इति स्थिते आह—

## २४४ । आङो नाऽस्त्रियाम् । ७।३।१२० ॥

**दी—। घेः परस्य आङो ना स्यात् अस्त्रियाम् । आङिति टासंज्ञा प्राचाम् । हरिणा । अस्त्रियाम् किम् ?—मत्या: ।**

ना comes in place of आङ् that comes after घिसंज्ञक word. And आङ् is the old designation of टा by ancient professors. Thus हरि+आ = हरि+ना=हरिणा (by cerebral by the rule "अट्कुप्वाङ्नुम्व्यवायेपि") । As the rule says अस्त्रियाम्, so we cannot get ना in 3rd singular in cases of feminine bases. Thus we get मति+आ= मत्या and not मतिना । For मति is a fem. base.

मित—। "अच्च घेः ( ७।३।११९ ) इत्यतः 'घेः' इत्यनुवर्त्तते ॥ सर्वमन्यत् सुगमम् ॥ हरि+ङे इति स्थिते आह—

२४५ । घेर्ङिति । ७।३।१११ ॥

दी—। घिसंज्ञकस्य ङिति सुपि गुणः स्यात्। हरये। 'घेः' किम्? सख्ये। 'ङिति' किम्?—हरिभ्याम्। 'सुपि' किम्। पट्वी॥ "घेर्ङिति" इति (ङसि) गुणेप्राप्ते—

There is गुण of the final vowel of a घिसंज्ञक word when a सुप् विभक्ति beginning with 'ङ' इत् follows. 'ङे' fourth singular is ङइत्, so by गुण we get हरये। Why do you say घेः in the Sutra? Witness सख्ये, where सखि not being घि we do not get गुण। Why do you say 'ङिति' here? Witness हरिभ्याम् where भ्याम् not being ङ इत् does not give गुण in हरि। Why again do you say सुपि in the vritti? Witness पट्वी, where ङीप् though ङ इत् is not सुप् विभक्ति and so do not yield गुण in पटु+ई=पट्वी। In हरि+ङसि, गुण coming by this very rule, we look forward—

मित—। "सुपिच" (७।३।१०२) इत्यतः सुपि इत्यनुवर्त्तते। "ह्रस्वस्यगुणः" (७।३।१०८) इत्यतः 'गुणः' इत्यनुवर्त्तनमपि अस्ति। ततः आह—घिसंज्ञकस्य अङ्गस्य ङिति सुपि गुणः स्यात्॥ सूत्रे 'घेः' ग्रहणात्, सखिशब्दस्य अघित्वात् 'सख्ये' इत्यत्र गुणो न स्यात्। एवम् 'ङिति' इति उक्तत्वात् भ्यामो अङित्वात् हरिभ्याम् इत्यत्र गुणो न। पुनश्च 'सुपि' इति व्याख्यानात् असुपि ङीपि (यथा पटु+ङीप्=पट्वी) 'पट्वी' इत्यत्रापि गुणः न भवेत॥ ङसि हरिशब्दस्य अनेनैव सूत्रेण गुणे प्राप्ते आह—.

२४६ । ङसिङसोश्च । ६।१।११० ॥

दी—। एङो ङसिङसोः अति परे पूर्वरूपमेकादेशः स्यात्। हरेः। हर्योः। हरीणाम्॥

Of एङन्त bases, when अ of ङसि and ङस् follows, let there be single substitute of पूर्वरूप। Thus हरि+अस्=हरेः। But हरि+ओस्=हर्य्योः (by यणादेश); and हरीणाम् with नुट् and दीर्घ by the rule "नामि"।

मित—। "एङः पदान्तात् अति" (६।१।१०९) इत्यतः "एङः" इति "अति" इति च अनुवर्त्तते। "अमि पूर्वः" (६।१।१०७) इत्यतः 'पूर्वः एकादेशः' इति अनुवर्त्तते; अस्य "एकः पूर्वपरयोः" इत्यधिकारत्वात्। अतः आह—एङः ङसिङसोः अतिपरे पूर्वरूपम् एकादेशः स्यात्॥ हरि+अस=हरे+अस्=हरेः॥ हरि+ओस्=हर्य्योः (यणादेशः)। हरि+आम्=हरि+णाम् (नुट्)=हरीणाम् (नामि दीर्घः णत्वम् च)॥ हरि+ङि इत्यत्र "घेर्ङिति" इति गुणेप्राप्ते आह—

**२४७। अच्च घेः। ७।३।११९॥**

**दी—। इदुद्भ्याम् उत्तरस्य ङेः औत् स्यात् घेः अन्तादेशश्च अकारः। वृद्धिः—हरौ। हर्योः। हरिषु। एवं श्रीपति—अग्नि-रवि-कव्यादयः॥**

औत् is ordered in place of ङि when this ङि comes after इदन्त and उदन्त bases; and then अकार is the final substitute of the घिसंज्ञक word. Thus हरि+ङि=हर+औत्=हरौ by वृद्धिः। Similarly श्रीपति अग्नि &c. are declined.

मित—। "ङेराम् नद्याम्नीभ्यः" (७।३।११६) इत्यतः 'ङेः' अनुवर्त्तते। "इदुद्भ्याम्" "औत्" (७।३।११७—१८) इति सूत्रद्वयानुवर्त्तनमप्यस्ति। तथा च वृत्तिः—इदुद्भ्याम् उत्तरस्य ङेः औत् स्यात् इत्यादि। ततः हरि+ङि इत्यत्र औत् आदेशे, घिसंज्ञकस्य हरिशब्दस्य अकारान्त्यादेशे च हर+औ इति जातम्। ततः वृद्धौ सत्यां हरौ इति रूपसिद्धिः॥ 'हरिषु' इत्यत्र "आदेशप्रत्यययोः" इति षत्वम् बोध्यम्॥ अधुना सखिशब्दस्य रूपं वक्ष्यन् आह—

२४८ । अनङ्सौ ।७।१।९३ ॥

दी—। सख्युरङ्गस्य अनङादेशः स्यात् असम्बुद्धौ सौपरे । "ङिच्च" ( सूत्र ४३ ) इत्यन्त्यादेशः ।

मित—। अनङ् इति नकारस्य अकार उच्चारणार्थः ॥ ततः सखि+सु ( प्रथमैकवचनम् ) इत्यत्र "ङिच्च" इत्यन्त्यादेशे सति सखन् स् इति जाते—

२४९ । अलोऽन्त्यात् पूर्व उपधा । १।१।६५ ॥

दी । अन्त्यात् अलः पूर्वः वर्णः उपधासंज्ञः स्यात् ।

उपधा is designated of the letter which is just preceding to the final letter. Thus here in सखन्, अ which is पूर्व to the last letter 'न' is called उपधा ( pen ultimate letter ).

२५० । सर्वनामस्थाने चासम्बुद्धौ । ६।४।८ ॥

दी—। नान्तस्य उपधायाः दीर्घः स्यात् असम्बुद्धौ सर्वनामस्थाने परे ।

The उपधा ( pen ultimate letter ) of a नान्त base becomes long when a case affix technically known as सर्वनामस्थान follows excepting the संबुद्धि । Thus—सखन्+स् इत्यत्र दीर्घे सति सखान् स् इति जाते—

२५१ । अपृक्त एकाल्प्रत्ययः । १।२।४१ ॥

दी—। एकाल् प्रत्ययो यः स अपृक्तसंज्ञः स्यात् ।

An affix having one letter only is styled as अपृक्त । Thus here स् (1st singular) is called अपृक्त ।

मित—। एकः अल् इति एकाल् । तादृशः प्रत्ययः इति कर्मधारयः ॥ अन्यत् सुगमम् । इति सखान्+स् इत्यत्र 'स्' इत्यस्य अपृक्तसंज्ञास्यात् । ततः आह—

२५२ । हल् ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् । ६।१।६८ ॥

दी—। हलन्तात्परं, दीर्घौ यौ ङ्यापौ तदन्ताच्च परं सुतिसि इत्येतदपृक्तं हल् लुप्यते। 'हल्ङ्याब्भ्यः' किम्?—ग्रामणीः। दीर्घात् किम्?—निष्कौशाम्बिः, अतिखट्वः। 'सुतिसि' किम्?—अभैत्सीत्; तिपा सहचरितस्य सिपो ग्रहणात् सिचो ग्रहणं नास्ति। 'अपृक्तम्' इति किम्?—बिभर्त्ति। 'हल्' किम्?—बिभेद। 'प्रथमहल्' किम्?—राजा; नलोपादिर्न स्यात्; संयोगान्तलोपस्य असिद्धत्वात्॥ सखा। हे सखे।

Words ending in ( हल् ) consonant or words having long ङी and आ at the end, elide सु (of प्रथमा एकवचन ) also ति and सि ( verbal terminations) immediately following them, and when these ( स etc. ) are termed अपृक्त i.e. when these are reduced to a single consonant. Why do we say हल् ङ्याब्भ्यः in the Sutra ?—witness ग्रामणीः, where सु does not elide, for it does not come after a word ending in हल् or ङी or आप् (—ग्रामणी being अङ्यन्त ; here णी is got with क्विप् from the verb नी ; thus ग्रामं नयतीति क्विपि णत्वेच ग्रामणी )। Why do you say दीर्घात् in the Sutra ?—witness निष्कौशाम्बिः and अतिखट्वः where सु does not elide, for this comes after ह्रस्वभूत ङी and ह्रस्वभूत आप् ( निष्क्रान्तः कौशाम्ब्याः and अतिक्रान्तः खट्वाम् becoming ह्रस्व in समास by the rule "गोस्त्रियोरुपसर्जनस्य" )। Why do you say 'सुतिसि' in the rule ?—witness अभैत्सीत् ; where 'स्' being of सिच् (of लुङ् ) is other than सि which in connection with ति is the verbal termination here and not सिच् &c., and does not thus elide. Why do you say अपृक्तम् in the Sutra ?—witness बिभर्त्ति where ति not being अपृक्त does not elide. Why do you use हल् in the Sutra ?—witness बिभेद

where 'अ' of लिट्, though अपृक्त, not being हल्, does not elide. Why we use हल् at the very beginning of the Sutra?—witness राजान् स्= राजा with elision of स् (firstly by this rule) and न–लोप् by the rule—नलोपः प्रातिपदिकान्तस्य ( ८।२।२७ )। राजान्+स् may be established by संयोगान्तलोप+नलोप as well; so प्रथमहल् in the Sutra seems superfluous. But not so; for by the rule "संयोगान्तस्य लोपः" ( ८।२।२३ ), स ( स् ) being elided नलोप by the rule "नलोपः प्रातिपदिकान्तस्य" ( ८।२।२७ ) does not take place. For this सुलोप is असिद्ध with reference to नलोप which is later. Hence for the formation of the word राजा etc first हल् is to be taken in the Sutra. Thus सखान् स्=सखान् by elision of स् by this very rule=सखा by नलोप् by the rule "नलोपः प्रातिपदिकान्तस्य"। हे सखे as in हे हरे (which see ante.)

मित— । हल् च ङी च आप् च इति द्वन्द्वः। ताभ्यः। अध्याहारपरशब्दयोगे प्रथमा। 'दीर्घात्' इति समासैकदेशस्य ङ्यापोरेव विशेषणम्। ततः आह—"हलन्तात् परं दीर्घौ यौ ङ्यापौ तदन्ताच्च परम् इत्यादि"॥ सुतिसि इति समाहारद्वन्द्वः। अपृक्तम् इत्यनेन सामानाधिकरण्येन अन्वितः। "लोपोव्योर्वलि" इत्यतः लोपः इत्यनुवर्त्तते; तदाह—'सुतिसि इत्येतत् अपृक्तं हल् लुप्यते॥ ग्रामं नयतीति क्विपि ग्रामणीः। "अग्रग्रामाभ्यां नयतेर्णो वाच्यः" इति णत्वम्। अत्र ग्रामणीः इत्यत्र "णी" इति हल् ङ्यावन्तो न; अतः सुलोपोपि नात्र स्यात्। अतः सूत्रे "हल् ङ्याव्भ्यो" इत्याह॥ सूत्रे 'दीर्घात्' इति ग्रहणात् निष्कौशाम्बिः अतिखट्वः इत्यादौ निष्क्रान्तः कौशाम्ब्याः खट्वामतिक्रान्तः इति समासे "गोस्त्रियोरुपसर्जनस्य" इति ह्रस्वे सति, अत्र ङ्यापोः अदीर्घान्तत्वात् न सुलोपः॥ 'सुतिसि' इत्यत्र तिपासाहचर्य्यात् सिप एव ग्रहणम् न तु लुङः सिचः, अतः अभैत्सीत् इत्यत्र अपृक्तस्य सिचो 'स्' इत्यस्य लोपो न स्यात्॥ सूत्रे अपृक्त ग्रहणात् विभर्त्ति इत्यत्र 'ति' इति समुदायस्य अपृक्तत्वाभावात् न तस्य लोपः—पूर्वत्रापि द्रष्टव्यम्। एवं 'हल्' ग्रहणात् बिभेद इत्यत्र अपृक्त

'अ' न लुप्यते ॥ सूत्रे 'प्रथमहल्' किमर्थम् गृहीतम् ? अगृहीते तस्मिन् राजन् स् इत्यत्र अस्य सूत्रस्य अप्रवर्त्तनात् "संयोगान्तस्य लोपः" (८।२।२३) इति सुलोपे सत्यपि "नलोपः प्रातिपदिकान्तस्य" ( ८।२।२७ ) इति नलोपो न स्यात् । "नलोपः—" इत्येतत् प्रति सुलोपस्य असिद्धत्वात् । तथा चोक्तम्—"संयोगान्तस्य लोपे हि नलोपादिर्न सिध्यति । रात्तु तेनैव लोपः स्यात् हलस्तस्मात् विधीयते" । अतः सार्थकं सूत्रे प्रथमहल् ग्रहणम् ॥ सर्वमेतत् दीक्षितेन प्रौढ़मनोरमायाम् व्याख्यातम् । अत्र तस्य व्याख्यानं न युक्तं प्रतिभाति, ग्रन्थकर्त्तुरेव स्वस्वग्रन्थविरोधात्—इति एतत् शब्देन्दुशेखरे स्पष्टम् ॥ एवम् सखान्+स् इत्यत्र अनेन सूत्रेण स्—लोपे सखान् इति जाते नलोपे सखा इति । एवं राजा ॥ 'हे सखे' इति 'हे हरे' इतिवत् ॥ सखि+औ इति स्थिते आह—

## २५३ । सख्युरसम्बुद्धौ । ७।१।९२ ॥

**दी— । सख्युरङ्गात् परं सम्बुद्धिवर्जं सर्वनामस्थानं णिद्वत् स्यात् ।**

A सर्वनामस्थान affix excepting that of सम्बुद्धि, coming after the base सखि, is treated as like a ण् इत् affix.

मित— । "णित्शब्दः तत्कार्यातिदेशार्थ एव", तद्वार्थः एव इति फलितम् ।

## २५४ । अचोञ्णिति । ७।२।११५ ॥

**दी— । ञिति णिति च परे अजन्ताङ्गस्य वृद्धिः स्यात् । सखायौ- सखायः । सखायम्—सखायौ—**[ सखीन् । अत्र असर्वनामस्थानत्वान्न णित्वा-भावान्न वृद्धिः ] । **सखिशब्दस्य घिसंज्ञाभावात न तत्कार्य्यम् । तेन— सख्या । सख्ये ।**

The final vowel of an अजन्त base takes वृद्धि if a ञ् इत् or ण् इत् affix follows. Thus औ here being a सर्वनामस्थान affix is णिद्वत् । So सखि+औ=सखै+औ ( by वृद्धि =सखायौ by सन्धि ) । Similarly सखायः, सखायम् &c. In सखि+टा, सखि not being a घिसंज्ञक word the

rule "आङो नास्त्रियाम्" does not apply and we get सख्या by ( सन्धि ) ; so also सख्ये ।

मित—। सुगमा ॥ सखि+( ङसि ) अस् इत्यत्र सखिशब्दस्य घित्वाभावात् "घेर्ङिति" इति गुणाभावे सति यणि कृते सख्यस् इति जाते आह—

२५५ । ख्यत्यात् परस्य । ६।१।११२ ॥

**दी—। खितिशब्दाभ्यां खीतीशब्दाभ्यां कृतयणादेशाभ्याम् परस्य ङसिङसोरत उत् स्यात्। सख्युः ।**

उत् comes after अ of ङसि and ङस् when this ङसि and ङस् comes after the words खि, ति or खी ती after which यणादेश has already been made. Thus सख्य स् = सख्युः with उ for अ of ङसि ।

मित—। 'खि-खी' इत्यनयोः 'ति-ती' इत्यनयोश्च कृतयणादेशयोः 'ख्यत्य' इति निर्देशः। "यकारात् अकार उच्चारणार्थः"। "एङः पदान्तात् अति" इत्यतः 'अति' अनुवर्त्तते। "ङसिङसोश्च" इत्यस्त्येव। "ऋत उत्" इत्यतः 'उत्' अनुवर्त्तते। अत्र "परस्य" इति उक्तत्वात् "एकः पूर्वपरयोः" इति तु निवृत्तम्। ततः फलितमाह—'खिति-खीती शब्दाभ्यां कृतयणादेशाभ्यां परस्य ङसिङसोः अत उत् स्यात्' ॥ 'खिति' इति विकृतिनिर्देशः किमर्थम्। अतिसखेः सेनापतेः एवमत्र ङसिङसोरत उः न। अविकृते अतिसख्युः सेनापत्युः इत्यनिष्टापत्तिः स्यात्। केवलस्य सखिशब्दस्य घिसंज्ञा प्रतिषिध्यते न तु तदन्तस्य, इति इदमप्यत्र कर्त्तव्यम् ॥ सखि+ङि इत्यत्र सखिशब्दस्य घित्वाभावात् "अच्चघेः" इत्यस्य अप्रवृत्तौ सवर्णदीर्घे प्राप्ते आह—

२५६ । औत् । ७।३।११८ ॥

**दी—। इदुद्भ्याम् परस्य ङेः औत् स्यात्। उकारानुवृत्तिः उत्तरार्था ("अच्चघेः" इति उत्तरसूत्रार्थम् इत्यर्थः)। सख्यौ। शेषं हरिवत् ॥ शोभनः सखा इति सुसखा। सुसखायौ। सुसखायः। अनङ्—णिद्वद्भाव-योराङ्गत्वात् तदन्तेपि प्रवृत्तिः। समुदायस्य सखिरूपत्वाभावात् 'असखि'**

इति निषेधाप्रवृत्तेः घिसंज्ञा ( सुसखिशब्दस्य )। ( तेन ) सुसखिना । सुसखये । ङसिङसोः गुणे कृते कृतयणादेशत्वाभावात् "ख्यत्यात्" इत्युत्वे न—सुसखेः । ( ङौ ) सुसखौ इत्यादि । एवमतिशयितः सखा अतिसखा ; परमः सखा यस्य इति विग्रहे परमसखा—परमसखायौ इत्यादि । गौणत्वेपि अनङ् णित्वे प्रवर्त्तेते ॥ सखीमतिक्रान्तः अतिसखिः लिङ्गविशिष्ट परिभाषायाः अनित्यत्वात् न टच् । इह अनङ्णित्वे न भवतः । ( कथं न भवतः इत्याह— ) "गोस्त्रियोः" ( सूत्र ६५३ ) इति ह्रस्वत्वेन सखिशब्दस्य अत्र लाक्षणिकत्वात् । "लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणात्" ।

औत् comes in place of ङि coming after इकारान्त and उकारान्त bases. Thus सखि+ङि=सखि+औ=सखौ by सन्धि ॥ This Sutra applies in case of सखि only, for "अच्च घेः" provides for घिसंज्ञक words and the rule "इदुद्भ्याम्" provides for नदीसंज्ञक words. Still here उत् is said in इदुद्भ्याम् i.e. उत् is repeated only for its अनुवर्त्तन to the next Sutra "अच्च घेः" (ante). In rest विभक्ति सखि is like हरि । शोभनः सखा gives सुसखा by कर्मधारय—this is declined as, सुसखा—सुसखायौ—सुसखायः &c. Here also अनङ and णिद्भाव come in, for these being after अङ्ग i.e. bases, come in after सख्यन्त bases also by तदन्तविधि ॥ But the whole सुसखि being other than सखि is a घिसंज्ञक word, for the rule "शेषोघ्यसखि" bars घिसंज्ञा of सखि only and not of सख्यन्त bases as well (see ante under "शेषोघ्यसखि" ) । Thus we get सुसखिना—सुसखये &c. as in case of हरि । Again in ङसि and ङस्, सुसखि being घिसंज्ञक takes गुण by the rule "घेर्ङिति" ; thus there being no यणादेश here when ङसि + ङस् follow ( गुण already coming in ), the rule "ख्यत्यात्"—cannot provide उत्व here. Thus सुसखेः as in हरि । Similarly सुसखौ ॥ अतिशयितः सखा gives अतिसखा

("न पूजनात्" इत्यत्र टच् न स्यात्) and परमः सखायस्य gives परमसखा। Here also declension is परमसखायौ—परमसखायः &c., अनङ्+णिद्वद्भाव coming in when सखि is subordinate as well. Lastly in सखीमतिक्रान्तः we get अतिसखिः। The sutra "राजाहः सखिभ्यष्टच्" provides टच् after सखि & not after सखी (feminine) also; so no टच् here. Further the maxim "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्" is not obligatory (its अनित्यत्व being implied from taking घटी even after saying घट in the Varttika "शक्तिलाङ्गलाङ्कुश—" &c), so also no समासान्त—टच् here. This base does not take अनङ्+णित्व। For here सखि is लाक्षणिक, being got from सखी, with—ह्रस्वत्व by "गोस्त्रियोरुपसर्जनस्य"। And the maxim "लक्षणप्रतिपदोक्तयोः" says that of two kinds of words one लाक्षणिक (got by application of some लक्षण) & another independent, the independent one is to be taken; so the rule "अनङ्सौ" &c, takes independent सखि & not लाक्षणिक सखि, as here got from सखी। So no अनङ् or णिद्वद्भाव in अतिसखि—it is to be declined like हरि।

मित —। "इदुद्भ्याम्" इति सूत्रानुवर्तनात् वृत्तिरपि तादृशी ॥ ङौ "अच्च घेः" इति सूत्रम् घिसंज्ञकविषयमेव। "इदुद्भ्याम्" इति च ङौ नदीसंज्ञकविषयम्। अतः पारिशेष्यात् 'औत्' इति सूत्रम् सखिशब्दमात्रविषयम्। तथापि वृत्तौ 'इदुद्भ्याम् परस्य' इति व्याख्यातम्, न तु 'सखिशब्दात् परस्य' इति। न चैवम् 'इदुत्' इत्यत्र उकारानुवृत्तिः व्यर्था? अत्र 'उत्' इति 'उकारानुवृत्तिः उत्तरार्था' "अच्च घेः" इति उत्तरसूत्रार्था इत्यर्थः॥ शोभनः सखा सुसखा इति कर्मधारयादौ अपि अनङ्-णिद्वद्भावौ वर्त्तेते। यत एतौ अङ्गस्यैव विहितत्वात् तदन्तविधिना सख्यन्तेपि वर्त्तेते। ततः आह—सुसखायौ—सुसखायः इत्यादि। किन्तु सुसखिशब्दस्य समुदायस्य सखि-भिन्नत्वात् "शेषो घ्यसखि" इति सूत्रे सखिशब्दस्य एव घित्वाभावात्, सुसखिशब्दस्य तु

घित्वसत्वात् सुसखिना सुसखये इति स्यात्। अस्य ङसिङसोः "घेर्ङिति" इति गुणे सति यणादेशत्वाभावात् "ख्यत्यात्" इति न प्रवर्त्तते एव, तत्र तस्य कृतयणादेशविषय-व्याख्यानात्। ततः सुसखेः इति स्यात्। ङौ सुसखौ इत्यादि॥ अतिशयितः सखा अतिसखा ( "न पूजनात्" इति समासान्तः टच् न स्यात् ), परमः सखा यस्य इति विग्रहे परमसखा इत्यादौ सखिशब्दस्य गौणत्वेपि अनङ्णित्वे वर्त्तते। तयोः अङ्गकार्य्य-त्वात्। तेन अतिसखायौ—परमसखायौ इति॥ किन्तु सखीमतिक्रान्तः अतिसखि "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इति समासे "गोस्त्रियोरुपसर्जनस्य" इति ह्रस्वे सति अतिसखिः। अत्र "राजाहः सखिभ्यः टच्" इति समासान्तः न स्यात्, सूत्रे 'सखि' न तु 'सखी' ग्रहणात्। ननु "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्" इति परि-भाषया सखिग्रहणेन सखीग्रहणमपि भवतु, समासान्तोपि प्रवर्त्ततामू इत्याह—अनित्येयं लिङ्गविशिष्टपरिभाषा; "शक्तिलाङ्गलाङ्कुश—" इत्यादि वार्त्तिके घटघटी इति पृथक् पृथक् ग्रहणात् ज्ञापकात्। अतो न टच् समासान्तः। तेन अतिसखिः इति। इह तु अनङ्णिद्वद्भावौ न स्याताम्। कथम्? इत्याह—अत्र "सखि" इति सखी-शब्दात् लक्षणेन "गोस्त्रियोरुपसर्जनस्य" इत्यनेन निष्पन्नम्। इत्यत्र ह्रस्वविधानेन तेन अत्र 'सखि' लाक्षणिकः शब्दः। "अनङ्सौ" इत्यादि सूत्रे तु 'सखि' स्वतन्त्रः ( प्रतिपदोक्तः ) शब्दः गृह्यते, न तु लाक्षणिकः सखिशब्दः। "लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्" इति परिभाषयापि सर्वत्र सूत्रे स्वतन्त्रः शब्दः गृह्यते न तु लाक्षणिकः। तेन लाक्षणिकस्य सखिशब्दस्य "अनङ् च णिद्वद्भावश्च" न स्याताम्। एवमाह—"इह अनङ्णित्त्वे न भवतः। "गोस्त्रियोः" इति ह्रस्वत्वेन सखिशब्दस्य लाक्षणिकत्वात्" इत्यादि"॥ अधुना पतिशब्दरूपे विशेषं दर्शयति—

## २५७। पतिः समास एव। १।४।८॥

दी—। पतिशब्दः समासे एव घिसंज्ञः स्यात्। पत्या। पत्ये। पत्युः। पत्युः। पतीनाम्। पत्यौ। शेषं हरिवत्। समासे तु भूपतिना, भूपतये॥ कतिशब्दो नित्यं बहुवचनान्तः—

मित—। "शेषो घ्यसखि" इत्यतः 'घि' इत्यनुवर्त्तने सति आह—पतिशब्दः समासे एव घिसंज्ञः ; नान्यत्र। इति केवलस्य पतिशब्दस्य घित्वाभावात् आत्वगुणाभावे सति यणि पत्या-पत्ये इत्यादि ॥ पत्युरित्यत्र "ख्यत्यात् परस्य" इत्युत्वम्। पत्यौ इत्यत्र "औत्" इति ङेरौत्वे यणि च रूपसिद्धिः॥ समासे सति भूपतिशब्दः हरिवत्॥ का सङ्ख्या तेषाम् इति किम्+डति=कति ("किमः सङ्ख्यापरिमाणे डतिच" इति डतिः)। अस्य नित्य बहुवचनान्तत्वात् कति+जस् इति स्थिते आह—

## २५८। बहुगणवतुडति संख्या। १।१।२८॥

दी—। एते संख्यासंज्ञाः।

These are technically known as सङ्ख्या ( numerals ).

मित—। बहुश्च गणश्च वतुश्च डतिश्च इति समाहारद्वन्द्वः। बहुगणशब्दौ इह त्रित्वादिपरार्धान्त सङ्ख्याविशेषवाचिनौ गृह्येते ; सङ्ख्यायते अनेन इति 'सङ्ख्या' इति अन्वर्थसंज्ञाविधानात्। तथा च काशिका—"बहुगणशब्दयोः वैपुल्ये सङ्घे च वर्त्तमानयोरिह ग्रहणं नास्ति। वतुडतौ प्रत्ययौ। "यत्तदेतेभ्यः परिमाणेवतुप्" (५।२।३९) इति "किमः सङ्ख्यापरिमाणे डतिच" इति च प्रत्ययौ गृह्येते। संज्ञाविधावपि अत्र तदन्तग्रहणेन वत्वन्ताः डत्यन्ताः च शब्दाः गृह्यन्ते।

## २५९। डति च। १।१।२५॥

दी—। डत्यन्ता संख्या षट्संज्ञा स्यात्।

मित—। 'डति' इत्यविभक्तिकः निर्देशः। "ष्णान्ताषट्" इत्यतः षट् अनुवर्त्तते। 'सङ्ख्या' इत्यस्त्येव। फलितमाह—डत्यन्ता सङ्ख्या षट्संज्ञा स्यात्। एवं कतिशब्दस्य डत्यन्तत्वात् षट्संज्ञायाम् आह—

## २६०। प्रत्ययस्य लुक्श्लुलुपः। १।१।६१॥

दी—। लुक्—श्लु—लुप्शब्दैः कृतं प्रत्ययादर्शनम् क्रमात् तत्तत्संज्ञः स्यात्।

Elision of a प्रत्यय done with the utterance of either of the words लुक्, श्लु and लुप् will be known by either of these terms as the case may be.

मित—। "अदर्शनं लोपः" इत्यतः 'अदर्शनम्' इत्यनुवर्त्तते। एतत् च वृत्तौ स्पष्टम्। अत्र अदर्शनस्य संज्ञा। न तु लोपसंज्ञापवादः। अत्र एकसंज्ञाधिकारत्वात् "आ कड़ारात् एकासंज्ञा" इति, लुक्-श्लु-लुप इति एषामिकैव संज्ञा एकत्र स्यात्।

२६१। षड्भ्यो लुक्। ७।१।२२॥

दी। षड्भ्यः परयोः जस्शसोर्लुक् स्यात्।

जस् and शस् elide after षट्संज्ञक words.

मित—। तेन कतिजस् इति जसो लुगादेशे पूर्वसूत्रेण च अदर्शने कृते, कति इति जाते—

२६२। प्रत्ययलोपे प्रत्ययलक्षणम्। १।१।६२॥

दी—। प्रत्यये लुप्तेपि तदाश्रितं कार्य्यं स्यात्। इति "जसि च" (सूत्र २४१) इति गुणे प्राप्ते।

Procedure connected with an affix apply even when the affix elides. Thus in कति+जस् though जस् elides, still गुण by the rule "जसि च" is to operate by this rule.

मित—। "स्थानिवत्—" इति सिद्धे नियमार्थमिदम्। कृतस्तप्रत्यय—लोपस्यैव स्थानिवत्वम्।

२६३। न लुमताङ्गस्य। १।१।६३॥

दी—। लुक् श्लु लुप् एते लुमन्तः। लुमता शब्देन लुप्ते तन्निमि-

त्तमङ्गकार्य्यं न स्यात्। कति। कति। कतिभिः। कतिभ्यः। कतिभ्यः। कतीनाम्। कतिषु। (प्रसङ्गादाद—) अस्मद् युष्मद् षट्संज्ञकाः त्रिषु (लिङ्गेषु) सरूपाः॥ त्रिशब्दो नित्यं बहुवचनान्तः। त्रयः। त्रीन्। त्रिभिः। त्रिभ्यः। त्रिभ्यः।

The terms लुक् श्लु+लुप् are called लुमान्। When an affix elides with the utterance of either of these लुमत् terms, then procedure in connection with that affix is not to come in. So गुण in कति does not come in and we get कति etc. कतिभिः &c, are as in हरिशब्द। षट्संज्ञक words & bases युस्मद्+अस्मद् are equal in all the genders. The base त्रि also is always plural. Thus त्रयः, त्रीन् &c as in हरिशब्द। Then in त्रि+आम् we look forward—

मित—। लु इति लुक् श्लु लुपः ग्रहणम् इति मूले एव स्पष्टम्। 'लु' इति अस्ति अस्य इति लुमान्। तेन लुमता i.e., लुमता शब्देन इत्यादि। अन्यत् सुगमम्॥ त्रि+आम् इत्यत नुटिदीर्घे च प्राप्ते आह—

२६४। त्रेस्त्रयः। ७।१।५३॥

दी—। त्रिशब्दस्य 'त्रय' आदेशः स्यात् आमि। त्रयाणाम्। परमत्रयाणाम्। गौणत्वे तु ('त्रय' आदेशः) न इति केचित्। प्रियत्रीणाम्। वस्तुतस्तु प्रियत्रयाणाम् (इति)। त्रिषु॥ द्विशब्दो नित्यं द्विवचनान्तः॥

मित—। सुगमा॥ द्विशब्दस्य द्विवचनान्तत्वात् द्वि+औ इति स्थिते आह—

२६५ । त्यादादीनामः । ७।२।१०२ ॥

दी—एषामकारो अन्त्यादेशः स्यात् विभक्तौ । "द्विपर्य्यन्तानामेवेष्टिः" ; ( भाष्यकारस्य 'इष्टिः' इच्छा इत्यर्थः ) । द्वौ । द्वौ । द्वाभ्याम् । द्वाभ्याम् । द्वाभ्याम् । द्वयोः । द्वयोः । 'द्विपर्य्यन्तानाम्' । इति किम् ?— भवान्, भवन्तौ, भवन्तः ( इति अत्र विभक्तौपरे 'अ' न स्यात्, भवत्शब्दस्य द्विशब्दात् परम् परिसंख्यानात् ) ॥ संज्ञायाम् उपसर्जनत्वे च न अत्वम् । अस्यसर्वाद्यन्तर्गणकार्य्यत्वात् )—( तथा च परिभाषा "संज्ञोपसर्जनीभूतानाम् सर्वादिगणकार्य्यम् अन्तर्गणकार्य्यं च न भवति ) । ( संज्ञात्वे उदाहरणमाह— ) द्विर्नाम कश्चित् । द्विः—द्वौ—द्वयः । ( उपसर्जनत्वे उदाहरणं यथा— ) द्वावतिक्रान्तः अतिद्विः । हरिवत् ॥ प्राधान्ये ( अनुपसर्जनीभूतत्वात् ) तु परमद्वौ इत्यादि ॥ ( औडुलोमिशब्दस्य विशेषमाह— ) औडुलोमिः—औडुलोमी—उडुलोमाः ; "लोम्नो अपत्येषु बहुष्वकारो वक्तव्यः" ( वार्त्तिक ) ( इति बहुवचने अत्र अकारः ) । ( अयम् ) बाह्वादीञोऽपवादः औडुलोमिम्—औडुलोमी—उडुलोमान् ॥

Words beginning with त्यत् etc in the सर्वादि list take अकार at the end when a विभक्ति follows. The counting here is upto the word द्वि in the सर्वादि list and not of words after it. Thus द्वि+औ=द्व+औ=द्वौ as in राम । Why do we say 'द्विपर्य्यन्तानाम्' in the वार्त्तिक । Witness भवान् भवन्तौ &c, when भवत् being outside द्वि of the सर्वादि list does not take अकार when विभक्ति follows. This अकार does not come in after त्यदादि words when these denote संज्ञा ( designation ) or are subordinated in some compound. This is rightly so owing to the Paribhasha "संज्ञोपसर्जनीभूतानाम् सर्वादिगणकार्य्यम् अन्तर्गणकार्य्यं च न भवति" ( and "त्यादादीनामः" is an अन्तर्गणकार्य्य ) ॥ Thus द्वि being

name of some one is declined as द्विः—द्वौ—द्वयः as in हरिशब्द। Similarly अतिक्रान्तः द्वौ इति अतिद्वि is also declined like हरि। But if द्वि is emphasised in a compound then this सर्वनामान्तर्गणकार्य्य ( i. e, अकार as by this rule ) comes in as in परमद्वौ ( a कर्मधारय compound ). Now specialities in the declension of the word औडुलोमि is being enumeraled. It is declined like हरि in all विभक्ति except its plural. Thus औडुलोमिः—औडुलोमी &c. In the plural we have औडुलोमाः—उडुलोमान् &c as in the case of राम। For the Varttika "लोम्नो अपत्येषु वहुष्वकारो वक्तव्यः" directs अकार in वहुवचन in supercession of इञ् here by the rule "वाह्वादिभ्यश्च"। When अकार replaces इञ् in the वहुवचन only then उडुलोमन्+अ इति स्थिते "नस्तद्धिते" इति टिलोपः=‘उडुलोम’ इत्यकारान्त as राम।

: मित— । सुगमा ॥ उडूनि नक्षत्राणि लोमानि यस्य इति विग्रहे उडुलोमानाम कश्चित्ऋषिः। तस्य अपत्यं पुमान् इति "वाह्वादिभ्यश्च" इति इञि आदिवृद्धौ, "नस्तद्धिते" इति टिलोपे औडुलोमिः इति रूपसिद्धिः। अयं शब्दः हरिवत्। वहुवचने तु विशेषः अस्ति। तत्र वाह्वादि—इञं वाधित्वा "लोम्नोपत्येषु वहुष्वकारो वक्तव्यः" इति वार्त्तिकेन अकार एव विधीयते। ततः टिलोप अकारप्रत्यये वृद्ध्यभावात् उडुलोम इत्यकारान्तो जायते। तदा च रामवत् रूपाणि। उडुलोमा उडुलोमान् इत्यादि॥ **इतीदन्ताः॥**

**दी—। "वातप्रमीः" (उणादि सूत्र) इत्युणादिसूत्रेण माङ ईप्रत्ययः; स च कित्; वातं प्रमिमीते इति वातप्रमीः।** "दीर्घाज्जसि च" ( इति पूर्वसवर्णदीर्घो न )। ( ततः ) **वातप्रम्यौ—वातप्रम्यः। हे वातप्रमीः।** ( अमि तु ) **"अमि पूर्वः"** ( सूत्र १९४ ) **इति** ( पूर्वरूपे सति ) **वातप्रमीम्। वातप्रम्यौ-वातप्रमीन्। वातप्रम्या—वातप्रमीभ्याम्—वातप्रमीभिः। वातप्रम्ये—वातप्रमीभ्याम्—वातप्रमीभ्यः। वातप्रमीभ्यः—वातप्रमीभ्याम्। वातप्रम्यः—वातप्रम्योः—वातप्रम्याम्** ( दीर्घत्वात् न नुट् )। **ङौ तु परत्वात्**

सवर्णदीर्घः ( न तु "एरनेकाचः—" इति वक्ष्यमाणो यणादेशः, अत्र ईकारस्य धातुत्वाभावात् )—वातप्रमी। वातप्रम्योः—वातप्रमीषु। एवं ययीपप्यादयः। यान्त्यनेन इति ययीर्मार्गः। पाति लोकमिति पपीः सूर्य्यः। "यापोः कित् द्वे च" इति ( औणादिकसूत्रेण याधातोः पाधातोः ) ईप्रत्ययः ( तस्य कित्त्वं प्रकृतेः द्वित्वश्च )। ( मीञ् हिंसायामिति क्र्यादिकस्य तु क्विपि यो वातप्रमीशब्दस्तस्य विशेषं वक्ष्यन् आह— ) क्विबन्त वातप्रमीशब्दस्य तु अमि शसि ङौ च विशेषः। ( तत्क्रमतो तथा— ) वातप्रम्यम्, वातप्रम्यः, वातप्रम्यि—इति अत्र ( ईकारान्तधातुत्वात् ) "एरनेकाचो—" ( सूत्र २७२ ) इति वक्ष्यमाणा यणादेशः। प्रधीशब्दवत्॥ बह्व्यः श्रेयस्यः यस्य स इति बहुश्रेयसी ( "ईयसश्च" इत्यत्र कप् न, "ईयसो बहुव्रीहेर्नेति वाच्यम्" इति अत्र उपसर्जनह्रस्वो न; स्त्रियाः पुंवत्—" इति बह्वीशब्दस्य पुंवत्वम्। ततः बहुश्रेयसी इति पुंलिङ्गविशेषणात् पुंलिङ्गः शब्दः। तस्य प्रथमैकवचने सिपरे प्रक्रियामाह— )। दीर्घङ्यन्तत्वात् "हल्ङ्याब्भ्यो"—( २५२ सूत्र ) इति सुलोपः ( बहुश्रेयसी इति )।

[ बहुश्रेयसी औ इत्यत्र "दीर्घाज्जसि च" इति पूर्वसवर्णदीर्घनिषेधे, यणि सति बहुश्रेयस्यौ। एवं बहुश्रेयस्यः बहुश्रेयसी+अम इत्यत्र "अमिपूर्वः" इति पूर्वरूपे बहुश्रेयसीम्। एवं शसि पुंसि "तस्माच्छसो नः पुंसि" इति नत्वे पूर्वसवर्णदीर्घे च बहुश्रेयसीन्॥ हे बहुश्रेयसी स् इति स्थिते नदीकार्य्यं वक्ष्यन् नदीसंज्ञामाह— ]

## २६६। यू स्त्र्याख्यौ नदी। १।४।३॥

दी—। ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौस्तः। "प्रथमलिङ्गग्रहणञ्च" ( वार्त्तिक ) इति पूर्वं स्त्र्याख्यस्योपसर्जनत्वेपि इदानीं नदीत्वं वक्तव्यम् इत्यर्थः।

Words ending in ईकार+ऊकार & that are always feminine are technically known as नदीसंज्ञक words. The rule directs नदीत्व of feminine ईकारान्त words whereas बहुश्रेयसी though ईकारान्त is mascu-

line ; how then can there be नदीत्व of the whole word वहुश्रेयसी ? Now the Varttika "प्रथमलिङ्गग्रहणञ्च" decides the issue ; it asserts that स्त्रीलिङ्गता of words even before its entrance into समास is to be counted. So नदीत्व of श्रेयसी though subordinated in समास, is to be counted even after समास । So नदीत्व of वहुश्रेयसी is to be counted now ; and we look forward— ।

मित— । ईच ऊच "यू" । अविभक्तिको निर्देशः । स्त्रियमाचक्षाते 'स्त्र्याख्यौ' ( मूलविभुजादित्वात् कः ), 'यू' इत्यस्येदं विशेषणम् । ततः फलितमाह—'ईदूदन्तौ नित्यस्त्रीलिङ्गौ' इत्यादि । "स्त्रियाम्" इति सिद्धे आख्याग्रहणं नित्यस्त्रीलिङ्गत्वार्थम् । तेन ग्रामणीशब्दस्य न संज्ञा । नित्यस्त्रीत्वञ्च एकस्मिन् प्रवृत्तिनिमित्ते लिङ्गान्तरविशिष्टस्यार्थस्य अनभिधायकत्वम् ॥ ननु प्रकृते तु वहुश्रेयसी शब्दस्य पुंस्त्वात् कथं नदीसंज्ञा इत्याह—"प्रथमलिङ्गग्रहणञ्च"—'समासादिवृत्तिप्रवृत्तेः पूर्वं स्त्रीलिङ्गस्य सतः वृत्तिदशायाम उपसर्जनतया स्त्रीलिङ्गत्वाभावेपि नदीत्वं वक्तव्यमिति अस्यार्थः । ततश्च वहुश्रेयसीशब्दस्य नदीत्वं सुस्थितमेव । ततः आह—

**२५७ । अम्बार्थनद्योर्ह्रस्वः । ७।३।१०७ ॥**

**दी— । अम्बार्थानां नद्यन्तानां च ह्रस्वः स्यात् सम्बुद्धौ । ( इति ) हे वहुश्रेयसि । शसि—वहुश्रेयसीन् ।**

अम्बा पर्य्याय words, words technically known as नदी, become ह्रस्व when सम्बुद्धि follows. Thus we get, हे वहुश्रेयसि with ह्रस्व । In शस् the form is वहुश्रेयसीन् ( see ante )

मित— । वहुश्रेयसि इत्यत्र ह्रस्वे सति "एङ्ह्रस्वात्—" इति सम्बुद्धिलोपः । सूत्रे ह्रस्वविधिसामर्थ्यात् "ह्रस्वस्य गुणः" इति सम्बुद्धौ गुणो न । इष्टेगुणे "अम्बार्थनद्योर्गुणः" इत्येव लाघवं सूत्रेत इति भाष्ये स्पष्टम् ॥ वहुश्रेयस्या—वहुश्रेयसीभ्याम्—वहुश्रेयसीभिः । वहुश्रेयसी ए इति स्थिते, यणि सति वहुश्रेयस्ये इति प्राप्ते च आह—

२६८ । आण्नद्याः । ७।३।११२ ॥

दी—। नद्यन्तात् परे ङिताम् आडागमः स्यात् ( इति अत्र आडागमे सति आह— )

आट् is the augement of ङ इत् affix that comes after नदीसंज्ञक words. And ए in 4th case singular is a ङ इत् affix. Thus we get—बहुश्रेयसी आट् ए, and we look forward—

मित—। सुगमा ।

२६९ । आटश्च । ६।१।९० ॥

दी—। आटः अचि परे वृद्धिरेकादेशः स्यात् । ( इति वृद्धौ यणादेशे ) बहुश्रेयस्यै । एवम् ( वृद्धौ यणादेशे च ) बहुश्रेयस्याः । बहुश्रेयस्याः । ( बहुश्रेयसीशब्दे ) नद्यन्तत्वात् परत्वात् ( "ह्रस्वनद्यापो नुट्" इति ) नुट्— बहुश्रेयसीनाम् ।

वृद्धि is the single substitute for आट् when a vowel ( अच् ) follows. Thus by वृद्धि ( here ऐ ) & यणादेश we get बहुश्रेयस्यै &c.

मित—। "इकोयणचि" इत्यतः 'अचि'; "वृद्धिरेचि" इत्यतः 'वृद्धिः' इत्यनुवर्त्तते। तत् आह—आटः अचिपरे वृद्धिः एकादेशः स्यात्; "एकः पूर्वपरयोः" इत्यस्य अधिकृतत्वात् ॥ अत्र तु "वृद्धिरेचि" "अकः सवर्णेदीर्घः" इति सिद्धेऽपि ऐचत—ऐन्दिदत् इत्याद्यर्थं वचनम्; इहापि न्याय्यत्वात् उपन्यस्तम् ॥ बहुश्रेयसी ङि इत्यत्र वातप्रमीवत् सवर्णदीर्घे प्राप्ते आह—

२७० । ङेराम् नद्याम्नीभ्यः । ७।३।११६ ॥

दी—। नद्यन्तात् आबन्तात् नीशब्दाच्च ङेराम् स्यात् । इह परत्वात् आटा नुट् वाध्यते । बहुश्रेयस्याम् । शेषम् ईप्रत्ययान्त वातप्रमीशब्दवत् ॥ ( अतिलक्ष्मीशब्दे लक्ष्मी इत्यस्य ) अङ्यन्तत्वात् न हलोपः । ( तेन )

**अतिलक्ष्मीः। शेषं बहुश्रेयसीवत्॥ कुमारीमिच्छन् कुमारीवाचरन् वा ब्राह्मणः कुमारी।** ( कुमारीनामधातोः क्विपि रूपसिद्धिः तदाह— ) **क्यजन्तात् क्विबन्ताद्वा कर्त्तरि क्विप्। "हल्ङ्याप्—" इति सुलोपः।**

आम् is substitued for ङि after नदीसंज्ञक words, after आबन्त words & after the word नी। Here नुट् by the rule "ह्रस्वनद्यापो नुट्" will not come in after आम् is substituted for ङि; for आट् which is the augment of ङि (and of its substitute आम् also) being later in the order of Astadhyayi bars नुभागम here. Thus we get बहुश्रेयस्याम् &c.

मित—। इह ङौ "आट्नद्याः" इति सूत्रेण य आट् विहितः, स च परत्वात्—ङेः स्थानी आमि कृते सति "ह्रस्वनद्यापो नुट्" इति आमि विहितस्य नुटो बाधक एव; अतोव तदाह—"इह परत्वात् आटा नुट् बाध्यते"॥ "लक्षेर्मुट च" इति ईप्रत्यये मुटिकृते लक्ष्मीः। बहुव्रीहौ अतिलक्ष्मीक इति, प्रादिसमासे अतिलक्ष्मी इति प्रातिपदिकम्। तस्य अङी—अन्तत्वात् न सुलोपः। ततः अतिलक्ष्मीः इत्यादि, अतिलक्ष्मी इत्यत्र लक्ष्मीशब्दस्य अस्त्रीप्रत्ययान्तत्वात् नोपसर्जनह्रस्वः। इदमपि अत्र स्मर्त्तव्यम् केवलस्य तु लक्ष्मीशब्दस्य "कृदिकारादक्तिनः" इति ङीष् विकल्पनात् पक्षे सुलोपः—लक्ष्मी इति। तथाच "वातप्रमी श्रीलक्ष्मीति पक्षेव्यन्ताः सुसाधवः" इति रचितः। "आशीराश्यहिदंष्ट्रायाम् लक्ष्मीर्लक्ष्मी हरिप्रिया" इति द्विरूपकोषश्च॥ अन्यत् सुगमम्॥

**दी—। कुमारीम् इच्छन् कुमारीवाचरन् वा ब्राह्मणः कुमारी। क्यजन्तादाचार क्विबन्ताद्वा कर्त्तरि क्विप् "हल्ङ्याब्भ्यो—" इति सुलोपः।**

मित—। सुगमा॥ कुमारी औ इति स्थिते आह—

## २७१। अचि श्नुधातुभ्रुवां य्वोरियङुवङौ। ६।४।७७॥

**दी—। श्नुप्रत्ययान्तस्य इवर्णोवर्णान्तस्य धातोः 'भ्रु' इत्यस्य चाङ्गस्य इयङुवङौ स्तः अजादौ प्रत्यये परे। "ङिच्च" (सूत्र ४३) इत्यन्त्यादेशः। आन्तरतम्यात् एरियङ्, ओरुवङ्। इति इयङि प्राप्ते—**

इयङ् and उवङ् respectively come when अजादि affixes follow, in places of इ and उ—this इ and उ should be of verbs ending in इ and उ ; and उवङ् also comes in place of श्नु प्रत्ययान्त bases and of the base भ्रू when an अजादि प्रत्यय follows. This इयङ् and उवङ् come in place of the last vowel and not of the whole base by the rule "ङिच्च" ( see ante ) ; owing to contiguity of pronunciation इयङ् comes in place of इ and उवङ् inplace of उ । Thus in कुमारी+औ, इयङ् is to come by this rule and we look forward—

मित—। ईश्च उश्च 'यू' ; तयोः । इवर्णोवर्णयोरित्यर्थः । 'य्वोः' इति 'धातोः' विशेषणम्—तदन्तविधिश्च ।। श्नुश्च धातुश्च भ्रूश्च इति 'श्नुधातुभ्रुवः'—द्वन्द्वः । 'श्नु' इत्यनेन प्रत्ययग्रहणपरिभाषया श्नु प्रत्ययान्तः गृह्यते [ "स्वादिभ्यः श्नुः" इति वक्ष्यमाणः श्नु गृह्यते ] । श्नु भ्रुवोः उवर्णस्य उवङ् इति फलितम् । तयोः इवर्णस्यासम्भवात् । ततः फलितमाह—"श्नु प्रत्ययान्तस्य, इवर्णोवर्णान्तस्य च धातोः, 'भ्रू' इत्यस्य अङ्गस्य इयङुवङौस्तः" इत्यादि । इण् इति सिद्धे अत्र सूत्रे 'य्वो' रिति गुरुनिर्देशः "इण् परेण् णकारेण" इति ज्ञापनार्थः ॥ 'ङिच्च' इत्यनेन सूत्रेण इयङुवङौ अन्त्यस्य इवर्णोवर्णस्य एव भवतः ॥ इति कुमारी औ इत्यत्र इवर्णस्य नामधातुत्वात् इयङि प्राप्ते आह—

## २७२ । एरनेकाचोऽसंयोगपूर्वस्य । ६।४।८२ ॥

**दी—। धात्ववयवसंयोगपूर्वो न भवति य इवर्णः तदन्तोयो धातुस्तदन्तस्य अनेकाचो अङ्गस्य यण् स्यादजादौ प्रत्यये परे। इति यण् । कुमार्यौ—कुमार्य्यः । हे कुमारि ।**

When अजादिप्रत्यय follows an इकारान्त verbal base of more than one vowel—the root here ending in इ but not preceded by a संयुक्तवर्ण ( conjunct consonant ), then यण् is the substitute for

इवर्ण and इयङ्। Thus कुमारी+औ gives कुमार्य्यौ with यण्। Similarly we get कुमार्य्यः ( in 1st plural ). In हे कुमारि, we have ह्रस्व, for the original base कुमारी is a नदीसंज्ञक word.

मित—। 'एः' इति षष्ठ्यन्तम्, 'इ' इति शब्दस्य। तस्यचार्थः—इवर्णस्य इति यावत्। पूर्वसूत्रात् "श्नुधातु भ्रुवाम्" इत्यस्मात् 'धातोः' इति अनुवर्त्तते॥ "इणो यण्" इत्यतः 'यण्' इत्यनुवृत्तिरस्ति। अजादौ प्रत्यये परे यण् स्यात् इति पूर्वसूत्रवत् फलितम्॥ अनेकः अच्—तस्य, इति 'अनेकाचः'। एतत् अङ्गविशेषणम्। 'धातोः' इत्येतत् 'असंयोगपूर्वस्य' इत्यत्र संयोगांशे अन्वेति। ततः फलितमाह—'धात्वावयव-संयोगपूर्वो न भवति य इवर्णः' इत्यादि। 'धात्वावयवो यो संयोगः' संयुक्तवर्णः 'स पूर्वो यस्मात् सः' तादृशः न भवति इवर्णः इत्यर्थः॥ एवं यणि सति कुमारी+औ इत्यत्र कुमार्य्यौ इति सिध्यति। एवं कुमारी+अस्=कुमार्य्यः। एवं हे कुमारि, इत्यत्र कुमारी शब्दस्य पूर्वं नदीत्वात् अम्बार्थनद्योरिति ह्रस्वः॥

**दी—। अमि शसि च** (पूर्वरूपाद्यपवादभूते यणि प्राप्ते) **कुमार्य्यम्। कुमार्य्यः। कुमार्य्यै। कुमार्य्याः। कुमारीणाम्। कुमार्य्याम्—कुमार्य्योः** ( **इति बहुश्रेयसीवत्॥** ( प्रध्यायतीति क्विपि ) **'प्रधीशब्दः'। अजाजौ सर्वत्र** ( "एरनेकाचः—" इति यणेव। अस्य अस्त्रीत्वात् नदीकार्य्यं न इति आह— ) **प्रधीः—प्रध्यौ—प्रध्यः। प्रध्यम्—प्रध्यः इत्यादि**; ( **प्रकृष्टा धीर्य्यस्य इति विग्रहेतु नदीसंज्ञा इयङ् च वक्ष्यते** )॥ ( उन्नयतीति उत्पूर्वकस्य नयतेः क्विपि उन्नी-शब्दः ) ( **अछ्यन्तत्वात् न छलोपः** ) **उन्नीः।** ( 'उन्नी' इत्यत्र अजादौ प्रत्यये परे यणेव। यतः 'न्न' इति धातुसंयोगो न तदाह— ) **धातुना संयोगस्य विशेषणात् इह स्यादेव यण्। उन्न्यौ—उन्न्यः। हे उन्नीः** ( अस्त्रीत्वात् अनदीत्वाच्च संबुद्धिह्रस्वो न )। **उन्न्यम्।** ( नदीत्वाभावेपि "ङेराम नद्याम् नीभ्यः" इति नीशब्दस्य पृथक् ग्रहणात् ङेः आम तदाह— ) **ङेराम्—उन्न्याम्। एवं ग्रामणीः॥** ( **सूत्रे** ) **अनेकाचः किम्? नीः—नियौ—नियः** ( अनेकाच-त्वाभावात् न यण् किन्तु इयङ् )। **अमि शसि चापिपरत्वात् इयङ्। नियम्—**

नियः। ङेराम्—नियाम्॥ 'असंयोगपूर्वस्य किम्? सुश्रियौ। यवक्रियौ।

[ सु शोभना श्रीर्यस्य इति सुश्रीः। यवान् क्रीणातीति यवपूर्वात् क्रीधातोः क्विपि यवक्रीः। अत्र अजादिप्रत्यये परे यण् न भवति---इवर्णस्य धात्ववयवसंयोगपूर्वकत्वात्॥ इदमपि अत्र स्मर्त्तव्यम्—श्रयतीति क्विपि "क्विब्वचिप्रच्छ्यायतस्तु—कटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणञ्च" इति दीर्घसम्प्रसारणाभावौ। अत्र "कृदिकारात्—" इत्यप्राप्तेपि "सर्वतोऽक्तिन्नर्थात्" (ग ।४।१।४५) इत्यस्य "कृदिकारात् अक्तिकारात्" इति व्याख्यानात् पक्षेङीषु। ङीषि नदीत्वात् सुश्रीक इति नित्यम्; अन्यथा सश्रीरपि ]॥ ("एरनेकाचः—" इति सूत्रे "गतिकारक पूर्वस्यैव इष्यते" इति वार्त्तिकं पठितम्। तदेव तात्पर्य्यतः संगृह्णाति— ) **"गतिकारकेतरपूर्वपदस्य यण् नेष्यते" (वार्त्तिक)। शुद्धधियौ। परमधियौ** [ शुद्धाधीर्य्यस्य इति विग्रहे शुद्धशब्दस्य गतिकारकेतरत्वात् यण् न किन्तु इयङ् एव। एवं प्रकृष्टा धीर्य्यस्य इति विग्रहे तु इयङ् स्यादेव यतः अत्रापि पूर्वपदं न गतिः नापि कारकम्। अत्र समासान्तविधेरनित्यत्वात् संज्ञात्वाद्वा कबभावः।]। **कथं तर्हि 'दुर्धियः वृश्चिकभियः' इत्यादि** (अत्र दुर् शब्दस्य गतित्वात्, वृश्चिकशब्दस्य अपादानकारकत्वात् इति)? **उच्यते। दुःस्थिता धीर्येषाम् इति विग्रहे 'दुर्' इत्यस्य धीशब्दं प्रति गतित्वमेव नास्ति; यत्क्रियायुक्ताः प्रादयः तं प्रत्येव गत्युपसर्गसंज्ञा। वृश्चिकशब्दस्य बुद्धिकृतमपादानत्वं नेह विवक्षितम्। (अतः वृश्चिकशब्दस्य अत्र अकारकत्वात् इयङ्)। वृश्चिकसम्बिन्धिनी भीः वृश्चिकभीः इत्युत्तरपदलोपो वा॥**

[ सुष्ठु ध्यायतीति क्विपि, सुधीशब्दः। अस्य अजादौ प्रत्ययेपरे 'एरनेकाचो—" इति यणि च प्राप्ते आह— ]

**२७३। न भूसुधियोः। ६।४।८५॥**

**दी—। एतयोर्यण् न स्यात् अचि सुपि। सुधियौ—सुधियः इत्यादि।**

मित—। भूशब्दस्य भ्वन्तस्य च निषेधः। भ्वन्तेषु अयम् "ओः सुपि" (६।४।८०)

इत्यस्यापवादः ॥ सुस्थिता धीर्यस्य इति विग्रहे तु ङिति सुपि पाक्षिकी नदीसंज्ञा इति विशेषः ॥

दी—। **सखायमिच्छति इति सखीयति** [ सखिशब्दात् क्यचिकृते "अकृत् सार्वधातु कयोः" इति दीर्घः ] **ततः क्विप्।** [ सखीय व् इति स्थिते "अतोलोपः" ( ६।४।४८ ) इति अलोपः। "लोपः व्योर्वलि" ( ६।१।६६ ) इति यलोपः तदाह— ] **अल्लोपयलोपौ। अल्लोपस्य** ( **"अचः परस्मिन् पूर्वविधौ"** इति ) **स्थानिवत्त्वात् यणि प्राप्ते** ( यकारात् ईकारस्य "इको यणचि" इति यणि प्राप्ते ) **"क्वौ लुप्त न स्थानिवत्"** ( इति स्थानिवत्वनिषेधः ॥ वेरपृक्तलोपात् 'सखी इति प्रातिपदिकम्। ततः सुबुत्पत्तौ सत्यामाह— ) **एकदेशविकृतस्य अनन्यत्वात् अनङ्णित्त्वे।** ( **ततः** ) **सखा—सखायौ सखायः। हे सखीः** ( अङ्गन्तत्वात् न सुलोपः। स्त्रीत्वाभावात् नदीत्वाभावात् नदीकार्य्यं च न )। **अमि तु पूर्वरूपात् परत्वात् यणि प्राप्ते—। ततोपि परत्वात् "सख्युरसम्बुद्धौ" इति प्रवर्त्तते। सखायम्—सखायौ। शसि तु यण्—सख्यः॥ सहखेन वर्त्तते इति सखः। तमिच्छतीति सखीः** (क्विपि अल्लोपयलोपयोः इति भावः)। **सुखमिच्छतीति सुखीः। सुतमिच्छतीति सुतीः** ( पूर्ववत् क्विपि प्रातिपदिकम् )। **सख्यौ। सुख्यौ। सुत्यौ** ( अजादौ "एरनेकाचः—" इति यण् )। **"ख्यत्यात्—" इत्यत्र दीर्घस्यापि ग्रहणात् उकारः। सख्युः। सुख्युः। सुत्युः॥** ( लूञ् छेदने क्तः इतिलूनम्। लूनमिच्छतीति क्यचि ईत्वे, लूनीयनामधातोः क्विपि 'लूनी' इति प्रातिपदिकमाह )—**लूनीः। एवं क्षाममिच्छतीति** (क्विपि) **क्षामीः।** ( **प्र+स्त्यै+क्त=प्रस्तीम** ) **प्रस्तीममिच्छतीति प्रस्तीमीः। एषां ङसिङसोर्यण्** ( "एरनेकाचः—" इत्यनेन इति।)। ( क्ते विहितयोः ) **नत्वमत्वयोरसिद्धत्वात् "ख्यत्यात्" इत्युत्वम्। लून्युः क्षाम्युः। प्रस्तीम्युः।** ( शुष+क्त= शुष्क। ततः क्यचि शुष्कीयति ) **शुष्कयतेः क्विपि शुष्कीः।** ( ? **एवं** ) **पक्वीः।** ( अत्र उभयत्र संयोगपूर्वत्वात् न यण् किन्तु इयङ् इत्याह— ) **इयङ्। शुष्कियौ—शुष्कियः। ङसिङसोः शुष्कियः इत्यादि** ( न चात्र क्ते विहितस्य

कत्वस्य असिद्धत्वात् "स्यत्यात्—" इत्युत्वम् शङ्क्यम्। इयङादेशे सति क्तत्वयत्वादेश-त्वाभावात् "स्यत्यात्—" इत्यस्य प्राप्तिर्नास्ति ) ॥ इतीदन्ताः ॥

Eng.—unnecessary.

दी—। शम्भुर्हरिवत्। एवं विष्णुवायु—भान्वादयः॥ ( क्रोष्टु— क्रोष्टृ च द्वावपि शब्दौ शृगालवाचिनौ। तत्र क्रोष्टुशब्दस्य विशेषं वक्ष्यन् आह— )

**२७४। तृज्वत् क्रोष्टुः। ७।१।९५॥**

**दी—। क्रोष्टुः तृजन्तेन तुल्यं वर्त्तते; असम्बुद्धौ सर्वनामस्थाने परे। क्रोष्टुशब्दस्य स्थाने क्रोष्टृशब्दः प्रयोक्तव्यः इत्यर्थः।**

The base क्रोष्टु is to stand like its तृजन्त form ( क्रोष्टृ ) when an affix technically called as सर्वनामस्थान follows ( excepting that of संबुद्धि) i. e., in the first five विभक्ति प्रत्यय; क्रोष्टृ is to be applied in place of the base क्रोष्टु। And what then ?

मित—। सुगमा॥ क्रोष्टृ स इति स्थिते आह—

**१७६। ऋतो ङि सर्वनामस्थानयोः। ७।३।११०॥**

**दी—। ङौ सर्वनामस्थाने च परे ऋदन्ताङ्गस्य गुणः स्यात्। इति ( गुणे ) प्राप्ते—**

ऋदन्त bases take गुण when a ङ इत् affix or सर्वनामस्थान affix ( i. e. विभक्तिप्रत्यय ) follow. Thus गुण being available in क्रोष्टृ स we look forward—

मित—। एवं क्रोष्टृ स इत्यत्र गुणे प्राप्ते आह—

**२७६। ऋदुशनस्पुरुदंसोऽनेहसां च। ७।१।९४॥**

**दी—। ऋदन्तानाम् उशनसादीनां च अनङ् स्यात् असम्बुद्धौ सौ परे।**

अनङ् comes in place of the final of ऋदन्त bases and उशनस् पुरुदंश् and अनेहस्, when सु ( not of संबुद्धि ) follows. Thus the stage being क्रोष्टृ+अनङ्+सु=क्रोष्टन्+सु=क्रोष्टा ( as in सखा—see ante ) and we look forward.

मित—। अत्र ऋतः अनङा गुणस्य बाधः स्यात्, अनवकाशत्वप्रसङ्गात् वचनस्य। ततः क्रोष्टृ अनङ् स=क्रोष्ट् अन् स इति जाते "सर्वनामस्थाने चासम्बुद्धौ" इति दीर्घसुलोपौ। क्रोष्टा। उशना। पुरुदंशा। अनेहा॥ असंबुद्धौ किम्? हे क्रोष्टः; अत्र गुण सुलोपौ॥

## २७७। अप्तृन् तृच् स्वसृनप्तृ नेष्टृत्वष्टृक्षत्तृ होतृ पोतृ प्रशास्तॄणाम्। ६।४।११॥

दी—। अवादीनाम् उपधायाः दीर्घः स्यात् असम्बुद्धौ सर्वनामस्थाने परे। नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम्। ( नियमशरीरमाह— ) उणादिनिष्पन्नानां तृन्तृजन्तानां चेत् भवति तर्हि नप्त्रादीनामेव। तेन पितृभ्रातृ प्रभृतीनां न। उद्गातृशब्दस्य तु भवत्येव। "समर्थः—पदविधिः" इति सूत्रे उद्गातारः इति भाष्यप्रयोगात्॥ क्रोष्टा [ एतच्च "सर्वनामस्थाने" इत्येव सिद्धम् इति पूर्वं कथितम्। क्रोष्टारौ इत्याद्यर्थम् तुवचनम् ] क्रोष्टारौ। ( गुणे रपरत्वे ततः अनेन सूत्रेण दीर्घे सति )—क्रोष्टारः। क्रोष्टारम्-क्रोष्टारौ। क्रोष्टून् ( सर्वनामस्थाने एव तृजवद्भावात् शसि न तृजवत् )॥

The bases अप्, तृन्नन्त, तृजन्त bases also the bases स्वसृ नप्तृ नेष्टृ त्वष्टृ क्षत्तृ होतृ प्रशास्तृ have their penultimate vowel lengthened when a सर्वनामस्थान affix ( other than सम्बुद्धि ) follows. The necessity of taking नप्तृ etc apart from the तृन्नन्त and तृजन्त bases is to make this restriction when नप्तृ etc, are derivatives. And the derivative side ( व्युत्पत्तिपक्ष ) of the bases नप्तृ &c is predominent; भाष्य

takes these as derivatives under the rule "तृन्" (३।२।१३१)। Now the author states the restriction here thus—If this दीर्घ is to come to तृन्नन्त+तृजन्त bases got from उणादि तृच्+तृन्, then the दीर्घ is to attach only after नप्तृ &c (that are तृन्नन्त of उणादि vairety) and not to others. Thus दीर्घ does not come after the bases पितृ भ्रातृ &c (being derived with उणादि तृन्); but the base उद्गातृ takes दीर्घ for भाष्यकार uses उद्गातारः under the rule "समर्थः पदविधिः"। क्रोष्टा however is establisted with अनङ् and then दीर्घ and सुलोप by the rule "सर्वनामस्थाने चासंबुद्धौ"। But दीर्घत्व here is stated for the formation of क्रोष्टारौ &c. Thus क्रोष्टा। क्रोष्टारौ &c (with गुण by the rule 275; and दीर्घ by this present one).

मित—। 'अप्' इति जलवाची बहुवचनान्तः शब्दः। तृन् तृजन्ताभ्याम् पृथक् नप्त्रादीनां पृथकग्रहणं नियमार्थम्। तत्र नियमशरमाह—उणादितृन्तृजन्तनिष्पन्नानां चेत् दीर्घः तर्हि नप्त्रादीनामेव। 'तृन्नन्त—तृजन्त' इति उणादिभिन्नस्य क्वति विहितस्य तृन्—तृज इत्यस्य ग्रहणम्। उद्गातृशब्दस्य तु भाष्योक्तत्वात् दीर्घत्वमस्ति एव॥ अत्र व्युत्पतिपक्ष एव ज्यायान्, नेष्ट्रादीनां "तृन्" (३।२।१३१) इति सूत्रेण भाष्ये व्युत्पत्तिदर्शनात् सुष्ठु अस्यतीति तृन् स्वसा। न पतन्ति पितरोनेन इति तृच् करणे निपातनात्—टिलोपश्च नप्ता। नयतीति तृन् षुक् च नेष्टा। त्विषेस्तृन् अत्योपधाया त्वष्टा। चदेस्तृन् चत्ता। जुहोतेस्तृन् होता। पुनातेस्तृन् पोता। प्रशास्तेस्तृन् प्रशास्ता॥ अधुना क्रोष्टु आ इति स्थिते आह—

## २७८। विभाषा तृतीयादिष्वचि। ७।१।९७॥

दी। अजादिषु तृतीयादिषु क्रोष्टुर्वा तृजवत्। क्रोष्ट्रा। क्रोष्ट्रे।

The base क्रोष्टु is to be designated as तृजवत् i. e, like क्रोष्टृ when तृतीयादि विभक्ति प्रत्यय beginning with अच् follows. Thus तृजवद्भावपक्षे

we have क्रोष्टा—क्रोष्टि । तृजवद्भावाभावे we get क्रोष्टुना—क्रोष्टवे इति शम्भुवत् ॥

मित— । सुगमा । क्रोष्टृ अस् इति स्थिते आह—

२७९ । ऋत उत् । ६।१।१११ ॥

दी । ऋदन्तात् ङसिङसोरति परे उकारः एकादेशः स्यात् । रपरत्वम् ।

When अ of ङसि+ङस् follows a ऋदन्त base, then उ in the single substitute for both. Here उ that comes in place of ऋ and अ is ऋस्थानिक, so we have र after it. Thus we get by गुण क्रोष्ट र् स् and look forward—

मित— । ऋकारस्य अकारस्य च स्थाने प्राप्नवतः उकारस्य स्थानिवत्वम् अस्त्येव । ततः गुणे कृते रपरे सति क्रोष्ट र् स् इति स्थिते आह— .

२८० । रात्सस्य । ८।२।२४ ॥

दी— । रेफात् संयोगान्तस्य सस्यैव लोपः 'नान्यस्य । इति ( ? ततः ) ( "खरवसानयोः—" इति ) रेफस्य विसर्गः—क्रोष्टुः ॥

After रेफ, the संयोगान्त letter स् only elides & not others. Thus we get क्रोष्टुर् ( with elision of संयोगान्त स् here ). Then by the rule "खरवसानयो"; we get विसर्ग: in place of र and the result is क्रोष्टः in fifth & sixth case singular.

मित— । सुगमा । क्रोष्टृ आम् इति स्थिते तृज्वद्भावे च प्राप्ते आह—

दी— । आमि परत्वात् तृजवद्भावे प्राप्ते—"नुम्—अचिर—तृजवद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन" ( वार्त्तिक ) क्रोष्टूनाम् ॥ क्रोष्टरि—क्रोष्ट्रोः । पक्षे हलादौ च शम्भुवत् ।

When आम् follows क्रोष्टृ, then both तृज्वद्भाव and नुट being due here, तृजवद्भाव is to come in, for it is पर । And तृजवद्भाव in connection with अजादि विभक्ति being in here नुट् can not further

operate ( the अच्त्व for तृजवद्भाव will then be destroyed ) and the सन्निपातपरिभाषा will thus stand in the way. So the Vartiika "नुम्—अचिर—" &c decides, and says that नुट् here is to operate and not तृजवद्भाव। So we get क्रोष्टूनाम्। So then we have क्रोष्टरि—क्रोष्टोः in the 7th case. In other हलादि विभक्ति क्रोष्टु is declined like शम्भु।

मित—। आमि परे नुटं बाधित्वा परत्वात् तृजवद्भाव एव स्यात्। कृते तु तृजवद्भावे नुभागमः असम्भवः यतः अज्विभक्तिमाश्रित्य विहितः तृजवद्भावः नुमागमं विधाय अच्त्वं व्याहन्तुमनुचितः। एवं तदा सन्निपातपरिभाषया नुटो दुर्लभत्वं स्यात्। एवं स्थिते आह—"नुमि—अचिर—तृज्वत्भावेभ्यो नुट् पूर्वविप्रतिषेधेन" ततश्च अत्र नुट् स्यात् न तु तृजवद्भावः। क्रोष्टूनाम् इति॥ "इकोऽचि विभक्तौ" (७।१।७३) इति नुम् विधिः। अनेन वार्त्तिकेन वारीणाम् इत्यत्र नुमंबाधित्वा पूर्वविप्रतिषेधेन नुटेव स्यात्। अचिर=अचिरविधिः। "अचि र ऋतः" (७।२। १००) इत्यचि रविधिः। तत्र तिसृणाम् इत्यत्र अचि परे परमपि रविधिं बाधित्वा नुट् प्रवर्त्तते। "विभाषा तृतीयादिष्वचि" इति च तृजवद्भावविधिः। ततश्च क्रोष्टूनाम् इत्यत्र अचिपरे तृजवद्भावविधिं परमपि बाधित्वा अनेन वार्त्तिकेन नुडागमः विहितः। इदमत्र व्याख्यानम्—एतैः विप्रतिषेधे "ह्रस्वनद्यापो नुट्" इति पूर्वोऽपि नुडविधिर्बलवत्तरः। ऊहितमेतत् आचार्यप्रहस्ता भाष्ये इत्यास्तां विस्तरेण॥ इत्वृदन्ताः॥

**अथ ऊदन्ताः॥** ( हूहू इति गन्धर्वविशेषवाचि अव्युत्पन्नं प्रातिपदिकम् )—

**हूहूः। हूह्वौ। हूह्वः। हूहूम् हूह्वौ। हूहून् इत्यादि॥ अतिचमूशब्दे तु नदीकार्य्यं विशेषः। हे अतिचमु। अतिचम्वै। अतिचम्वाः। अतिचमूनाम्। अतिचम्वाम्॥**

Eng—Easy.

मित—। चमति शव्रन् इत्यौणादिके ऊप्रत्यये, "अप्राणिजातेश्चारज्जवादीनाम्" (वार्त्तिक) इत्युकारान्तात् अपि स्त्रियाम् ऊङ्। ततो नदीसंज्ञा। एतेनापि "विमानना सुभ्रु कुतः पितुर्गृहे" इति कालिदासीयं व्याख्यातम्। चमूमतिक्रान्तः अति-चमूः—अत्र एकादेशे "उभयत आश्रयणे नान्तादिवत्" इत्यन्तादिवद्भावनिषेधात् नोपसर्जनह्रस्वः॥ पुनः ऊङिति च उकारद्वयं दीर्घेण निर्दिष्टं। तत्र द्वितीय उकारः कपोबाधकः। उपसर्जनह्रस्वाभावे तु "गोटाङ् ग्रहणं कृन्निवृत्त्यर्थम्" (वा-१।२।४८) इति कृतौ ह्रस्वनिषेधोपि प्रयोजकः॥ अतिचमूशब्दे नदीकार्यं दर्शयति—हे अतिचमु इत्यादि॥ अन्यत् सुगमम्॥ (खलं पुनातीति क्विपि) खलपुः। ततः खलपु औ खलपू अस् इति स्थिते आह—

**२८१। ओः सुपि। ६।४।८३॥**

दी—। **धात्ववयवसंयोगपूर्वो न भवति य उवर्णः तदन्तो यो धातुस्त-दन्तस्य अनेकाचोऽङ्गस्य यण् स्यादजादौ सुपि। "गतिकारकेतरपूर्वपदस्य यण् नेष्यते" (वार्त्तिक)। खलप्वौ—खलप्वः इत्यादि॥ एवं सुल्वादयः (सुष्ठु लुनातीति क्विपि सुलूः)॥ अत्र वृत्तौ एरनेकाचः किम्? लूः—लुवौ—लुवः (एकाच्त्वात् न यण्)। 'धात्ववयव—' इति किम्?—उल्लूः उल्वौ—उल्लवः** (अत्र 'ल्ल' इति धात्ववयवसंयोगपूर्वो न, अतः यण् एव)। **'असंयोगपूर्वस्य' किम्? कटप्रूः—कटप्रुवौ—कटप्रुवः** (संयुक्तधात्ववयवत्वात् न यण्)। **'गति—' इत्यादि किम्?—परमलुवौ** (अत्र गतिकारकेतरपूर्वक-त्वात् न यण्)। **सुपि किम्? लुलुवतुः** '(अत्र अतुसो धातुप्रत्ययत्वात् न यण्)॥ स्वस्मात् स्वेन आत्मना वा भवतीति—) **स्वभूः। "न भूसुधियोः"** इति (उवङिसति) **स्वभुवौ, स्वभुवः। एवं स्वयम्भूः॥**

Eng—When अजादि सुप्—प्रत्यय i. e. विभक्ति, follows a उ वर्णान्त verbal base of more than one vowel—the root having ending in उ but not preceded by a संयुक्तवर्ण (conjunct consonant), then यण् is the substitute for उवर्ण। This यण् is not intended of verbal

bases having पूर्वपद other than a गति or a कारक। Thus in खलपू— the पूर्वपद being a कारक (e. g. खलंपुनातीति &c) यण् comes by this rule in औ, अस् &c. Hence खलप्वौ—खलप्वः &c.

(Rest easy—see also under the rule "एरनेकाचः" ante).

मित—। अत्र अनुवृत्तिः व्याख्यानादि च सर्वम् "एरनेकाचः—" इति सूत्रवत्। अतः न पुनरुल्लिख्यते ॥

वर्षासु भवतीति क्विपि वर्षाभूशब्दः। "वर्षाभूर्दर्दुरे पुमान्" इति यादवः। तस्य अजादौ सुपि 'न भूसुधियोः' इति यण्निषेधे प्राप्ते आह—

## २८२। वर्षाभ्वश्च। ६।४।८४ ॥

**दी—। अस्य उवर्णस्य यण् स्यात् अचि सुपि। वर्षाभ्वौ—वर्षाभ्वः ॥ दृम्भतीति दृम्भूः**; **"अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषुः" इत्युणादि सूत्रेण** (कूप्रत्ययौ नुम् चेह) **निपातितः।** (अत्र ऊकारो न धात्ववयवः। अतः उवङ्) "ओः सुपि" इति (यण् न किन्तु "इकोयणचि" इति यण् तदाह) **दृम्भ्वौ—दृम्भ्वः। दृम्भूम्—दृम्भ्वौ—दृम्भून्। शेषं हूहूवत् ॥ 'दृन्' इति नान्ते हिंसार्थे अव्यये** (उपपदे) **भुवः क्विपि** (दृन्भू इति प्रातिपदिकम्); (सौ) **दृन्भूः। "दृन्करपुनः पूर्वस्य भुवो यण् वक्तव्यः" इति** (अत्र आजादौ सुपि यणेव)**—दृन्भ्वम्। दृन्भ्वः इत्यादि—खलपूवत् ॥ करभूः—करभ्वम्—करभ्वः। दीर्घपाठे तु 'करः' एव 'कारः'—स्वार्थिकः प्रज्ञाद्यण्।** (ततः) **कारभ्वम्—कारभ्वः ॥** ("पुनर्भूर्दिधिषुरूढ़ा" इति कोषात् पुनर्भूशब्दस्य स्त्रीत्वे सति आह—) **पुनर्भूः योगिकः पुंसि।** (पुनर्भवतीति क्विपि पुनर्भूः अस्य पुंस्त्वमस्त्येव इति फलितम्)। **पुनर्भ्वौ इत्यादि ॥** (दृशो भवतीति दृग्भूः, कारायां भवतीति कारा भूः)**—'दृग्भू—काराभू' शब्दौ स्वयम्भूवत्। इत्युदन्ताः ॥**

**दी—। अथ ऋदन्त प्रकरणम् ॥** (धा धारणपोषणयोः+तृन् तृच्वा) **धातृ। सौ** (क्रोष्टुशब्दवत् अनङ्—दीर्घ—सुलोप—नलोपाः इति) **धाता। हे**

धातः ( "ऋतोङि—" इति गुणः। रपरत्वम्। हल्ङ्यादिलोपः, विसर्गश्च )। **धातारौ—धातारः। "ऋवर्णात् नस्य णत्वं वाच्यम्" ( इति ) धातॄणाम्। इत्यादि** ( क्रोष्टृ शब्दवत् )। **एवं नप्त्रादयः॥ उद्गाता—उद्गातारौ—उद्गातारः** ( भाष्यप्रयोगात् दीर्घः )॥ **पिता। व्युत्पत्तिपक्षे नप्त्रादि ग्रहणस्य नियमार्थत्वात् न दीर्घः** ( अव्युत्पत्तिपक्षे विध्यर्थत्वादपि अनुक्तत्वात् पित्रादीनां न दीर्घः इति "अप् तृन्—" इति सूत्रे व्याख्यानावसरे उक्तम् )। **पितरौ—पितरः। पितरम्—पितरौ—पितॄन्। शेषं धातृवत् ॥ एवं जामातृ—भ्रात्रादयः॥** ( नृशब्दः मनुष्यवाची। अस्यसौ "ऋदुशनस—" इत्यनङ्। "सर्वनामस्थाने चासंबुद्धौ" इति नान्तत्वहेतुकदीर्घः। हल्ङ्यादिलोपः— इति न लोपः। ततः— ) **ना। नरौ—नरः। हे नः।** ( शसि पूर्वसवर्णदीर्घः। णत्वम्—इति नॄन्। शेषं धातृवत्। नामि विशेषं वक्ष्यति— )—

Eng.—Easy.

**२८३। नृ च। ६।४।६॥**

**दी—। 'नृ' इत्येतस्य नामि वा दीर्घः स्यात्। नृणाम्—नॄणाम्॥**

( ऋवर्णात् नस्य णत्वम्— इति अत्र णत्वम् )॥ ( ङौ गुणे रपरत्वे नरि। नृीः—नृषु )॥

**दी—। 'कॄ' 'तॄ'—अनयोरनुकरणे "प्रकृतिवत् अनुकरणम्—" इति कल्पिकातिदेशात् "ॠत इद् धातोः" इति इत्वे रपरत्वे—कीः। किरौ—किरः। तीः—तिरौ—तिरः। इत्यादि गीर्वत्।**

मित—। 'कॄ' इत्यस्य अनुकरणभूतस्य अनुकार्य्यशब्दस्वरूपवाचकत्वात् क्रियावाचकत्वाभावात् धातुत्वं न स्यात् ततः "ॠते इत् धातोः" इति इत्वमपि न स्यात्। ततः आह—"प्रकतिवत् अनुकरणम्"। अनया परिभाषया 'अतिदेशः' विधानमिति यावत् वैकल्पिकः। ततश्च अतिदेशमात्रमादाय धातुत्वात् "ॠत इत् धातोः" इति इत्वम्। अतिदेशाभावे तु धातुत्वाभावात् प्रातिपदिकत्वाद् सुबुत्पत्तिश्च। ततः

की—किरौ—किरः इत्यादि ॥ "प्रकृतिवत् अनुकरणम्" इत्यस्य अनित्यत्वात् अनुकरणस्य धातुत्वाभावात् "ऋतइद्धातोः" इति इत्वाभावे सति आह—

दी—। इत्वाभावपक्षे तु "ऋदुशनस्—" इति "ऋतो ङि—" इति च तपरकरणात् ( ऋतः अग्रहणात ) अनङ्—गुणौ नः। ( ततः ) कृः—क्रौ—क्रः। कृम्—कृौ—कृन्। कृा। कृे इत्यादि।

दी—। ऌदन्तप्रकरणम् ॥ 'गम्ऌ' 'शक्ऌ'। अनयोरनुकरणे ( ऋऌवर्णयोः सावर्ण्यात् "ऋदुशनस्—" इति ( अनङ्। गमा। शका। ङौ ) सर्वनामस्थाने च "ऋतोङि—" इति ) गुणविषये तु लपरत्वम्। गमलौ—गमलः। गमलम्—गमलौ—गमॄन् ( ऌ वर्णस्य दीर्घाभावात् ऋवर्ण एव )। गम्ला। गम्ले। ङसिङसोस्तु "अत उत्" इत्युत्वे लपरत्वे "संयोगान्तस्यलोपः" ( सूत्र ५४ )। गमुल्। शकुल् इत्यादि ॥

Eng—Easy.

( अथ एदन्ताः निरूप्यन्ते )—

( अः विष्णुः। तस्यापत्यम् इति इः ( "अतः इञ्" )। तेन इना सह वर्त्तते इति ( से इति प्रातिपदिकम्। तस्य सौ— ) सेः सयौ—सयः ( अजादौ अयादेशः )। ( हे से। अत "एङ्—ह्रस्वात्" इति सम्बुद्धिलोपः ) ॥ ( स्मृतः इः येन इति स्मते। तस्य रूपाण्याह— ) स्मृतेः—स्मृतयौ—स्मतयः इत्यादि ॥

मित—। सुगमा ॥ अथ ओदन्ताः कथ्यन्ते। गो सु इति स्थिते आह—

## २८४। गोतो णित्। ७।१।६० ॥

दी। गोशब्दात् परं सर्वनामस्थानं णिद्वत् स्यात्। गौः। गावौ। गावः।

When सर्वनामस्थान affixes comes after the base गो then these affixes are treated as ण् इत्। Thus we get वृद्धि and the result is गौः गावौ &c.

मित— । णिद्वत्त्वे "अचोञ्णिति" इति वृद्धिः । सा चात्र औकारः । रुत्वविसर्गौ । ततः गौः इति रूपम् । एवं वृद्धौ आवादेशे गौ+औ=गावौ । गौ+अस्= गावः । अमि गो+अम् इति स्थिते अनेन सूत्रेण णिद्वत्त्वात् वृद्धौ प्राप्तायाम् आह—

**२८५ । औतोऽम्शसोः । ६।१।९३ ॥**

**दी । 'आ ओतः इति छेदः । ओकारादम् शसो रचि परे आकार एकादेशः स्यात् । शसा साहचर्य्यात् सुपैव अम् गृह्यते; नेह—अचिनवम्, असुनवम् ( 'चि, सु' इति धात्वोः लङि उत्तमपुरुषे मिपो अम् ) ॥ गाम्—गावौ—गाः । गवा । गवे । गोः इत्यादि ।**

औतः in the sutra is to be disjoined as आ ओतः । And thus आ is the single substitute ( for ओ and अ ) when अ of अम & शस् come after ओकार । Here अम of सुप् affixes is taken & not अम् of धातु । Hence in अचिनवम्, असुनवम् &c आ is not the एकादेश though धातु 'अम्' follows. This is interred from अम being taken in conjunction with शस् । Thus गो+अम=गाम् ; गो+शस्=गोअस्= गाः & so on.

मित— । सुगमा ॥ द्योशब्दः ओकारान्त स्त्रीलिङ्गः । सुशोभना द्यौः यस्य इति बहुव्रीहौ सुद्यो इति प्रातिपदिकम् । अस्य रूपाण्याह—

**दी । "ओतो णित् इति वाच्यम्" ( वार्त्तिक ) । विहितविशेषणं च । तेन । सुद्यौः—सुद्यावौ—सुद्यावः । सुद्याम् इत्यादि ( गोवत् ) । 'ओकारान्तात् विहितं सर्वनामस्थानम्' इति** ( 'ओतोणित्' इति वार्त्तिक ) **व्याख्यानात् नेह । हे भानो । हे भानवः ।**

**उः सम्भुः स्मृतो येन स** ( 'स्मृतो' इति प्रातिपदिकम् । अस्य सौ आह— ) **स्मृतौः—स्मृतावौ—स्मृतावः । स्मृताम्—स्मृतावौ—स्मृताः इत्यादि गोवत् ॥**

Some ( e. g, Kaiyata ) read 'ओतो णित्' for the Sutra "गोतो णित्" । In fact 'ओतो णित् वाच्यम्' is the varttika which is explained as—"ओकारात् विहितं सर्वनामस्थानं णिद्वत् स्यात्" i. e, सर्वनामस्थान affixes after ओकारान्त bases are treated as ण इत् । As ओतो is explained as ओकारात् विहितम् । So Bhattoji here says "विहितविशेषणं च" । Thus सुद्यो+सु=सुद्यौः as in गौः । It is in fact declined like गो । As this varttika is explained as "ओकारान्तात् विहितम् सर्वनामस्थानम्" and not as, ओकारात् परम्" &c, so in हे भानु+सु=हे भानो ( by ह्रस्वस्य गुणः )+स्, there is no णिद्भाव, for here सु is after उ and not made (विहित) after ओ, and we get हे भानो । Similarly in हे भानवः ( "जसि-च" इति गुणे सति ओतः णित्वं न स्यात् । यतः जस् दशायाम् भानु इति उकारान्त एव, अतः जस् उकारात् विहितः न तु ओकारात् ) । So also the base स्मृतो is also declined like गो ।

मित— । सुगमम् ॥ "गोतो णित्" इत्यत्र "ओतो णित्" इति पाठानुसारेण वार्त्तिकमाह—"ओतो णित् वाच्यः" । व्याख्यानं च—ओकारात् विहितम् इत्यादि । विहितविशेषणफलं तु हे भानो इत्यादौ णित्वनिषेधार्थम् । वस्तुतस्तु लक्षणप्रतिपदोक्तपरिभाषया एव हे भानो इत्यादौ णिद्भावो न स्यात् । अत्र ओकारस्य लाक्षणिकत्वात् ॥ "ओतो णित् वाच्यः" इति व्याख्यानात् ओकारान्ताः शब्दाः गोवत्; यथा स्मृतो शब्दः ॥ इत्योदन्ताः ॥

अथ ऐदन्ताः निरूप्यन्ते । रैशब्दः धनवाची । अस्य विशेषं दर्शयति—

**२८६ । रायो हलि । ७।२।८५ ॥**

**दी— । रैशब्दस्य आकारो अन्तादेशः स्यात् हलि विभक्तौ ; (ततः सौ) राः । अचि विभक्तौ आयादेशः । रायौ—रायः । रायम्—रायौ—रायः । राया:—राभ्याम् इत्यादि ।**

Eng.—Easy.

मित—। सुगमा।

अथ औदन्ताः निरूप्यन्ते। ग्लौशब्दः चन्द्रवाची। अस्य सौ—

दी—। ग्लौः—ग्लावौ—ग्लावः। ग्लावम्—ग्लावौ—ग्लाव इत्यादि। "ओतो अम् शसोः" इति सूत्रमिह न प्रवर्त्तते। "ऐ औच्" इति (? माहेश्वर) सूत्रेण औदौतोः सावर्ण्याभावज्ञापनात्। इत्योदन्ताः।

इत्यजन्तपुंलिङ्गप्रकरणम्

---

# "अथ अजन्ताः स्त्रीलिङ्गाः"



[ रमते इति पचाद्यचि स्त्रियाम् "अजाद्यतष्टाप्" इति टापि च रमा। रमा+सु इत्यत्र "हलङ्याप्भ्यो दीर्घात् सुतिस्यपृक्तं हल्" इति सुलोपः— ] **रमा**।

( अस्य औङि रमा औ इति स्थिते आह— )

**२८७। औङआपः। ७।१।१८॥**

दी—। आवन्तात् अङ्गात् परस्य औङः शी स्यात्। 'औङ्' इतौकार विभक्तेः संज्ञा ( प्राचां शास्त्रे इत्यर्थः )। रमे। रमाः।

औङ् coming after आवन्त bases is replaced by शी। औङ् is the designation of औकार Vibhakti-affixes of the old school. Thus रमा+औ=रमा+शी=रमा ई ( शकारस्य "लशक्वतद्धिते" इति इत्त्वात् )=रमे ( by the rule "आद्गुणः" )॥ ( सवर्णदीर्घं मत्वा आह— ) रमाः।

मित—। 'आपः' इति पञ्चमी ; आवन्तं विवक्षितम्। औङः इति षष्ठी। "जश् शसोः शी" इत्यतः 'शी' इत्यनुवर्त्तते। अत आह—'आवन्तात् अङ्गात्' इत्यादि। 'शी' इत्यत्र "लशक्वतद्धिते" इति शकारस्य इत्त्वम्। रमा+ई=रमे ("आद्‌गुणः" इति सूत्रेण)॥ "हल् ङ्याब्भ्यो—" इति सूत्रे ङ्यावग्रहणे दीर्घग्रहणं वक्तव्यम्। तेन प्रलम्बमाली रामगोपाली। अत्र 'माला' इत्यस्य दीर्घाभावात् औङः शी न स्यात्॥ हे रमा स् इति स्थिते आह—

## २८८। सम्बुद्धौ च। ७।३।१०६॥

**दी—। आप एकारः स्यात् सम्बुद्धौ। "एङ् ह्रस्वात्—" इति सम्बुद्धिलोपः। हे रमे। हे रमे—हे रमाः॥ रमाम्** ("अमि पूर्वः" इति पूर्वरूपम्)। **रमे—रमाः। (शसि) स्त्रीत्वात् नत्वाभावः** । "तस्मात् शसो नः पुंसि" इति नत्वमत्र न भवति ।।

एकार is ordered in place of आ when संबुद्धि follows. Thus हे रमा स् becomes हे रमे स्। Then by the rule "एङ् ह्रस्वात्—" the संबुद्धि elides and we get हे रमे &c. हे रमे ; हे रमाः are as in 1st case dual & plural. In रमाम् we get पूर्वरूप ; and in रमा शस् we get रमाः by पूर्वसवर्णदीर्घः ; here नत्व does not come in by the rule "तस्मात् शसो नः पुंसि", for the base is in the feminine.

मित—। "बहुवचने झल्येत्" (७।३।१०३) "ओसि च" (७।३।१०४) इत्यतः 'ए', "आङि चापः" इत्यतः 'आपः' इत्यनुवर्त्तते, तदाह "आप एकारः स्यात्' इति॥ दीर्घस्य आवन्तस्य एव एकारः। हे चन्द्रचूड़। अत्र 'चूड़ा' इत्यस्य दीर्घत्वाभावात् न एकारः॥ रमा आ इति स्थिते आह—

## २८९। आङि चापः। ७।३।१०५॥

**दी—। आङि ओसि च परे आवन्तस्य अङ्गस्य एकारः स्यात्। रमया। रमाभ्याम्—रमाभिः।**

एकार is ordered at the end of a आवन्त base when आङ् (the

designation for 3rd case singular affix ) and ओस् follow. Thus रमा आ=रमे आ=रमया &c.

मित—। 'आङ्' इति पूर्वाचार्य्यनिर्देशेन तृतीयैकवचनं गृह्यते। सूत्रे "चकारात्" ओसि च गृह्यते। 'ओसि' इति पूर्वसूत्रात् अनुवृत्तिरस्ति। एकारानुवृत्तिः चात्र पूर्वसूत्रवत् बोद्धव्या। एवं रमा आ=रमे आ=रमया। अत्रापि दीर्घ-आप् ग्रहणात् नेह—अतिखट्वेन॥ रमा ए इति स्थिते आह—

**२६० । याडापः । ७।३।११३ ॥**

**दी—। आपः परस्य ङित्—वचनस्य याडागमः स्यात्। "वृद्धिरेचि" इति ( ऐकारादेशे ) रमायै। सवर्णदीर्घः—रमायाः। रमायाः—रमयोः—रमाणाम्। रमायाम्। रमयोः। रमासु। एवं दुर्गादयः॥**

याड् ( या ) is the augment after आबन्त bases, when a ङित् Vibhakti affix follows. Thus रमा+ए=रमा या ए ( by याडागम )। Then by the rule "वृद्धिरेचि" we get रमायै=रमायै। By सवर्ण दीर्घ; we get रमा या अस्=रमायाः। रमा ओस्=रमे ओस् ( एकार coming when ओस् follows by theprevious rule "आङि चापः" )=रमयोः। In रमाणाम् we have नुट by the rule "ह्रस्वनद्यापो नुट्", then दीर्घ by the rule "नामि" and lastly णत्व by "अट् कु प्वाङ्" and "रषाभ्यां नोणः समानपदे"। In रामायाम् we have first अम् in seventh singular by the rule "ङेः आम् नद्याम्नीभ्यः" then याडागम and lastly सवर्णदीर्घ॥

मित—। 'ङित्' वक्तीति ङित्वचनम्। तस्य; ङितः सुपः इत्यर्थः॥ "घेर्ङिति" इत्यतः ङेः इति षष्ठ्या विपरिणतम् अनुवर्त्तते। ततः आह 'ङित्वचनस्य'। आबन्तात् उत्तरस्य ङितः सुपो याडागमः इत्यर्थः। रमा+या ए=रमायै। अत्र वृद्धिश्च ऐकारः "वृद्धिरेचि" इत्यनेन॥ रमा ओस् इत्यत्र "आङि चापः" इत्यनेन एकारे सति रमे ओस्=रमयोः॥ 'रमाणाम्' इत्यत्र "ह्रस्वनद्यापो नुट्" इति नुटि सति "नामि" इति दीर्घे च सति, "रषाभ्याम्—अट्

"कुप्वाङ्—" इति च णत्वम् ॥ रमा ङि इत्यत्र 'ङेराम् नद्याम् नीभ्यः' इत्यनेन आमि सति याडागमे सवर्णदीर्घे च रमायाम् ॥ सर्वशब्दात् टापि कृते स्त्रियाम् सर्वाशब्दः। सोपि प्रायेण रमावत्। अस्यापि ङित्सु "याडापः" इति याडागमे प्राप्ते आह—

२११। सर्वनाम्नः स्याड् ह्रस्वश्च। ७।३।११४ ॥

**दी—। आबन्तात् सर्वनाम्नः परस्य ङितः स्याट् स्यात्; आपश्च ह्रस्वः। याटोऽपवादः (अयं स्याट्)। सर्वस्यै। सर्वस्याः। सर्वस्याः। एकादेशस्य पूर्वान्तत्वेन ग्रहणात् "आमि सर्वनाम्नः—" इति सुट्—सर्वासाम्। सर्वस्याम्। सर्वयोः—सर्वासु। एवं विश्वादयोऽप्यावन्ताः॥**

स्याट् is the augment of ङ इत् vibhakti affixes after आबन्त सर्वनाम (pronominal) bases. And also there is ह्रस्व of आप् here by this very rule. This स्याट् is a bar to याड् as declared by the previous rule. Thus सर्वस्यै, सर्वस्याः &c. In the case of सर्वा+आम्, आवादेश in सर्वा is taken as पूर्वान्त and not as परादि, and now as regards सर्वा by लिङ्गविशिष्टपरिभाषा it is also a सर्वनाम। Then by the rule "आमि सर्वनाम्नः—" we have सुट् when आम् follows. Thus we get सर्वासाम् ॥ In सर्वस्याम्, सुट् is barred by the rule "ङेराम्" being पर। Then स्याट and ह्रस्व come by this rule and we get सर्वस्याम् ॥ Similarly विश्वा &c. are to be declined.

मित।—पूर्वसूत्रादापः इत्यनुवर्त्तते। तच्च 'सर्वनाम्नः' इत्यस्य विशेषणम्। ङितः इत्युवर्त्तनम् पूर्वसूत्रवत् बोद्धव्यम्। तत्तु 'सर्वनाम्नः' इति पञ्चम्या अनुरोधात् षष्ठ्या विपरिणाम्यते। तदाह—'आबन्तात् परस्य सर्वनाम्नो विहितस्य ङितः' इत्यर्थः। तेन मासपूर्वायै इत्यादि सिद्धम् ॥ सर्वा+आम् इत्यत्र 'सर्वा' इत्यस्य आवादेशः पूर्वान्तवत् न तु परादिवत्, तेन आबन्तस्य सर्वा-शब्दस्य सर्वादिगणेपाठाभावात् अपि लिङ्गविशिष्टपरिभाषया सर्वनामत्वे सति 'आमि सर्वनाम्नः सुट्' इति सुटि सर्वासाम् इति

रूपम् ॥ सर्वा ङि इत्यत्र सुट् परत्वात् बाधित्वा "ङेराम्" इति आम्। ततः स्याट् ह्रस्वश्च इति सर्वस्याम् ॥ एवं विश्वादयः आवन्ताः बोधव्याः।

२६२। **विभाषा दिक्समासे बहुव्रीहौ। १।१।२८ ॥**

**दी। अत्र सर्वनामता वा स्यात्। उत्तरपूर्वस्यै—उत्तरपूर्वायै। दिङ्नामान्यन्तराले इति प्रतिपदोक्तस्य दिक्समासस्य ग्रहणात् नेह। योत्तरा सा पूर्वा यस्या उन्मुग्धायाः तस्यै उत्तरपूर्वायै। बहुव्रीहिग्रहणं स्पष्टार्थम्। अन्तरस्यै शालायै; वाह्यायै इत्यर्थः। 'अपुरि' इत्युक्तेर्नेह—अन्तरायै नगर्यै ॥**

This rule provides optional सर्वनामता of दिग्वाचक words entering in a वहुव्रीहि compound by the specific rule "दिङ्नामानन्तराले"। Thus we get both उत्तरपूर्वस्यै and उत्तरपूर्वायै, as वहुव्रीहि here is by the rule "दिङ्नामानि—" &c. As the दिक् समास only is to be committed here by the special rule "दिङ्नामानि—", so in the case of ordinary वहुव्रीहि as योत्तरा सा पूर्वा यस्याः सा उत्तरपूर्वा etc, सर्वनामता cannot attach to the base उत्तरपूर्वा। And the mention of the word वहुव्रीहौ in the sutra is thus to avoid ambiguity, though without it the same meaning comes if प्रतिपदोक्त दिक् समास is counted. In अन्तरस्यै शालायै, अन्तरा meaning वाह्या is a सर्वनाम, but in अन्तरायै नगर्य्यै, अन्तरा is not a सर्वनाम, सर्वनामता here being prohibited by the word 'अपुरि' in the गणसूत्र "अन्तरं वहिर्योग—" ; here reference being to a 'city.'

मित। "न वहुव्रीहौ" इति नित्ये प्रतिषेधे प्राप्ते विभाषेयमारभ्यते। दिशां समासो 'दिक्समासो' दिगुपदिष्टे समासे बहुव्रीहौ विभाषा सर्वादीनि सर्वनामसंज्ञानि भवन्ति। दिग्ग्रहणं किम्? "न वहुव्रीहौ" इति प्रतिषेध उक्तः, तत्र न ज्ञायते—क्व विभाषा क्व प्रतिषेध इति। दिग्ग्रहणे क्रियमाणे ज्ञायते—दिगुपदिष्टसमासे विभाषा अन्यत्र प्रतिषेध इति। दिशां समासः 'दिक् समासः'—इत्यनेन "दिङ्नामान्यन्तराले

( १।२।२६ ) इति समासेह ग्रहणात्, लाक्षणिकदिक्शब्दानां ("अनेकमन्य पदार्थे" इति बहुव्रीहिसमासे इत्यर्थः,) न स्यात्। तदाह—"प्रतिपदोक्तस्य दिक्समासस्य ग्रहणात् नेह"। या उत्तरा सा पूर्वा यस्याः इति उत्तरपूर्वा "अनेकमन्य पदार्थे" इति समासः, इह यद्-तद् शब्दग्रहणं सामान्याधिकरणादर्शनार्थम्। अत्र दिक्शब्दस्य अप्राधान्यात् लाक्षणिकत्वात् नास्य सूत्रस्य प्राप्तिः। अतः आह—उत्तरपूर्वायै॥ लक्षणप्रतिपदोक्त-परिभाषया "विभाषा दिक्समासे" इत्येतावता एव सूत्रशरीरेण "दिङ्नामानि" इति बहुव्रीहेरेव ग्रहणसिद्धेऽपि सूत्रे 'बहुव्रीहिग्रहणं' स्पष्टार्थम्। अन्तरशब्दस्य वाह्यार्थे, सर्वनामता, 'अपुरि' इति सर्वादिगण—गणपाठे उक्तत्वात्; 'अन्तरायै' नगर्यै इत्यत्र सर्वनामता न॥

## २६३। विभाषा द्वितीयातृतीयाभ्याम्। ७।३।११५॥

दी। **आभ्यां ङितः स्याट् वा स्यात्, आपश्च ह्रस्वः। इदं सूत्रं त्यक्तुं शक्यम्** ( इदं सूत्रं न कर्त्तव्यमित्यर्थः )। "**तीयस्य ङित्सुपसंख्यानात्**" (२२६ सूत्रे अस्मात् वार्त्तिकबलात् इदं सूत्रं न कर्त्तव्यम् इत्यर्थः)। **द्वितीयस्मै—द्वितीयायै। द्वितीयस्याः—द्वितीयायाः। द्वितीयस्याः—द्वितीयायाः। द्वितीयस्याम्—द्वितीयायाम्। शेषं रमावत्। एवं तृतीया॥** (अम्बा-अल्ला-अक्का इति अम्बार्थशब्दाः। एषां सम्बोधने विशेषमाह—) "**अम्बार्थनद्योर्ह्रस्वः**" ( **सूत्र २६७** ) इति ( क्रमे सति आह )— **हे अम्ब। हे अक्क। हे अल्ल। "असंयुक्ताः ये डलकाः तद्वतां ह्रस्वो न" ( वार्त्तिक )। हे अम्बाडे। हे अम्याले। हे अम्बिके।**

Eng.—Easy.

मित।—सुगमा—। "जॄष वयोहानौ" इति धातोः "षिद्भिदादिभ्योऽङ्" इति अङि जराशब्दः। अस्य सौ हल्ङ्यादिना सुलोपे जरा इति। जराशब्दस्य "जराया जरसन्यतरस्याम्" इति सूत्रेण तु अजादौ पाक्षिको जरसादेशः तदाह—

दी। **जरा। जरे—जरसौ। शीभावात् परत्वात् जरस्॥ आमि नुटः परत्वात् जरस्। जरसाम् इत्यादि। पक्षे हलादौ रमावत्। इह पूर्वविप्रतिषेधेन शीभावं कृत्वा सन्निपातपरिभाषायाः अनित्यत्वमाश्रित्य 'जरसी' इति**

केचित्। तन्निर्मूलम्। यद्यपि जरसादेशस्य स्थानिवद्भावेन आबन्ततामाश्रित्य 'औङ्आपः' "याडापः" "ह्रस्वनद्यापः" "ङेराम् नद्याम्नीभ्यः" इति च पञ्चापि विधयः प्राप्ताः एवं नस्-निट्-पृतुष्ठ, तथापि 'अनल्विधौ' इत्युक्तेः न भवन्ति। 'आ आप्' इति प्रश्लिष्य आकाररूपस्यैवापः सर्वत्र ग्रहणात्। एवं 'हल् ङ्याप्—' (सूत्र २५२) इति सूत्रेऽपि 'आ आप्' 'ङी ई' इति प्रश्लेषात्, 'अतिखट्वः निष्कौशाम्बिः' इत्यादिसिद्धे दीर्घग्रहणं प्रत्याख्येयम्। न च एवमपि 'अतिखट्वाय' इत्यत्र स्वाश्रयमाकारत्वं स्थानिवद्भावेन आप्त्वंचाश्रित्य याट् स्यात् इति वाच्यम्। आबन्तं यदङ्गं ततः परस्य याट् विधानात्। "उपसर्जनस्त्रीप्रत्यये तदादिनियमात्" ॥

मित—। जरसौ इत्यत्र जरस्-भावः परः। अतः तस्मिन् प्रवृत्ते शीभावः न स्यात्। अकृते तु जरस्भावे जरा इत्याबन्तात् शीभावः स्यादेव। तदाह 'शीभावात् परत्वात् जरस्' ॥ एवं 'आमि नुटः परत्वात् जरस्'। ततश्च जरसादेशे न नुट्—जरसामिति। पुनश्च शीभावः आबन्तसन्निपातमाश्रित्य प्रवर्त्तितः सन् आबन्ततां न विनाशयेत्। अतश्च आबन्तनाशके जरसादेशे सति शीभावो न स्यात् ॥ केचित्तु अत्र "विप्रतिषेधे पूर्वं कार्य्यम्" इति परिभाषामाश्रित्य पूर्वविप्रतिषेधेन शीभावं कृत्वा ततः जरसादेशं विदधति, ततश्च 'जरसी' इति रूपयति। एतेच सन्निपातपरिभाषाया अनित्यभावं पुरस्कृत्य इष्टसिद्ध्यर्थं नात्र तां परिभाषां प्रवर्त्तयन्ति। तच्च न युक्तम्। सर्वत्र सन्निपातपरिभाषायाः अनित्यत्वाश्रयणे प्रमाणाभावात्, अस्य पूर्वविप्रतिषेधाश्रयणस्य च भाष्ये अदृष्टत्वात् ॥ जराशब्दस्थाने जरसादेशस्य स्थानिवद्भावमाश्रित्य अस्य आबन्तत्वेसति "औङ आपः" "आङिचापः" इत्यादि पञ्च विधयः प्राप्नुवन्ति। एवं "पद्दन्नो—" इति सूत्रेण नासिका-निशा-पृतनाशब्दस्थाने नस्—निश् पृत्—आदेशेषु सत्सु स्थानिवत्त्वात् एषामाबन्तत्वेसति एते पञ्चापि विधयः स्युः इति शङ्कते। तां च शङ्कां परिहरति—"स्थानिवदादेशो अनल्विधौ" इति सूत्रे 'अनल्विधौ' इति उक्तत्वात्। अत्र च आबन्तमाश्रित्य एते पञ्चविधयः अल्विधिः एव। अतः एषु कर्त्तव्येषु एतेषाम् अलाश्रयविधित्वात् जरसाद्यादेशानां स्थानिवत्त्वं न सम्भवति। ततः जरसादेशस्य आबन्तत्वाभावात् उक्तपञ्चसूत्रा एत्वादिविधयो न भवन्ति। अथवा "आङिचापः" इत्यादौ 'आ आपः'

इति प्रश्लेषात् सर्वत्र आपः एव ग्रहणात् जरसादेशस्य आवन्तत्वाभावात्, तत्र एते विधयः न स्युः। अतश्च 'जरसी' इति रूपमनिष्टमेव॥ प्रसङ्गात् आह—हल्ङ्यादि—सूत्रे उक्तरीत्या 'आ आप' 'ङी ई' इति व्याख्याने सति सूत्रे दीर्घग्रहण प्रत्याख्येयम् स्यात्। ततश्च 'अतिखट्वः निष्कौशाम्बिः' इत्यादि सिद्धिरपि स्यात्। एवं 'अतिखट्व' इत्यत्र खट्व इत्यस्य आकारान्तत्वाभावात् सुलोपो न॥ ननु एवम् 'याडाप' इति सूत्रे आकार-प्रश्लेषे सत्यपि, 'अतिखट्वाय' इत्यत्र खट्वा शब्दस्य स्वतःसिद्धस्य आकारस्य स्थानिवद्भावेन आप्त्वं पुरस्कृत्य याट् कथं न स्यात्? इत्यत्रोत्तरमाह—'आवन्तं यदङ्गं ततः परस्य याट्-विधानात्', प्रकृते तु अतिखट्व इति समुदाय एव ङित्तं प्रति अङ्गम् ततश्च अतिखट्व इति यदङ्गं न तत् आवन्तम्। अतः स्थानिवत्त्वेन आप्त्वे सत्यपि न याडिति भावः। 'याडाप' इत्यत्र हि आवग्रहणेन प्रत्ययग्रहणपरिभाषया ('प्रत्ययग्रहणे प्रकृतिप्रत्ययसमुदायस्य ग्रहणम्' इत्यर्थयुक्तपरिभाषया इत्यर्थः) आवन्तं गृह्यते। नासौ 'अतिखट्व' इति आवन्तमङ्गम्। अतश्च नात्र "याडापः" इति सूत्रस्य प्रवृत्तिर्युज्यते। "उपसर्जनस्त्रीप्रत्यये तदादिनियमात्" इति न्यायात्, प्रकृते स्त्रीप्रत्यये उप-सर्जने तदादिनियमस्य निर्बाधत्वात् अपि "याडापः" इति सूत्रस्य नात्र प्रस-रोऽस्ति। एवम् च आवग्रहणेन प्रत्ययग्रहणमिपरिभाषया तदन्ते गृहीते तेन अङ्गस्य विशेषणात् आवन्तान्तं यदङ्गमित्यर्थात् 'अतिखट्व' इत्यत्र आवन्तत्वाभावात् 'याडाप' इत्यस्य नाप्तिः। अतएव आप्ग्रहणे "अदीर्घो आदेशो न स्थानिवत्" इति वार्त्तिकेन कृते स्थानिवत्त्वनिषेधात् कथं तत्स्थानिके दीर्घे तल्लाभ इति वार्त्तिककारमतं भाष्यकारेण दूषितम्। अङ्गस्य विशेषणत्वाश्रयणात्"॥ आधुना नासिकाशब्दस्थाने शसादौ नसादेशं वक्ष्यति।

**दी—। "पद्दन्नो—" इति नासिकाया नस्। नसः। नसा। नोभ्याम् इत्यादि। पक्षे (नसादेशाभावपक्षे) लुटि रमावत्॥ निशाया निश्। निशः। निशा।**

मित। सुगमा—। निश् भ्याम् इति स्थिते आह—

**२९४। व्रश्चभ्रस्जसृज—मृजयजराजभ्राजच्छशां षः। ८।२।३**

**दी—। व्रश्चादीनां सप्तानां छशान्तयोश्च षकारोऽन्तादेशः स्यात्।**

पदान्ते च। षस्य जश्त्वेन डः। निड्भ्याम्—निड्भिः। सुपि "डः सि धुट्" (सूत्र १३१) इति पक्षे धुट्। चर्त्वम्। तस्य असिद्धत्वात् "चयो द्वितीयाः शरि—" इति टतयोः ठथौ न। "न पदान्तात्—" इति ष्टुत्व न। निट्त्सु-निट्सु।

Thus of seven roots beginning with व्रश्च and ending with भ्राज and of roots ending in छ and श, षकार is ordered (at the end) when a झल् letter follows or these are final in a पद। Thus निश् भ्याम् = निष्भ्याम्। Then ष becomes ड by the rule "झलां जशो अन्ते", and we get निड्-भ्याम्, निड्भिः &c. In निश् + सु (seventh plural) we get निट् सु—ड् becoming ट by the rule "खरि च"। Optionally here धट् (augment) comes in by the rule "डः सि धुट्"; and then the form is निट् ध् सु। Then here चर्त्व comes by the rule 'खरिच' (i.e., खरि परे झलां चरः स्युः) and the form is निट् त् सु। Here however ट+त are not replaced by ठ and थ by the Varttika "चयो द्वितीयाः शरि—" (under rule 130 ante.) [Remember that this Varttika is to direct थ for त् in धुट पक्षे, and to direct ठ for ट् in धुडभावपक्षे]। For चर्त्व is regarded as असिद्ध with reference to this Varttika; because this Varttika being read under the rule "नादिन्याक्रोशे" (८।४।४८) by भाष्यकार is earlier than the rule for चर्त्व e g. "खरि च (८।४।५५); by the rule—पूर्वत्रासिद्धम् (८।२।१), this परशास्त्र (i.e., चर्त्व) is असिद्ध with regard to earlier operations. Then again in निटत्सु, त् does not become ट by ष्टुत्व by the rule "न पदान्तात् टोरनाम्" (८।४।४२); so the final form is निटत्सु in धुटपक्षे।

निश—। 'निश्भ्याम्' इत्यत्र अनेन सूत्रेण षत्वे, तस्य "झलां जशोन्ते" इति जश्त्वेन डकारः। ततः निड्भ्याम्—निड्भिः इत्यादि। 'निश् सुप्' इति सुपि परे 'निड्सु' इति स्थिते "खरिच" (८।४।५५) इति डस्य टत्वे निट् सु इति रूपम्। पक्षे

अत्र "ङः सि धुट्" इति धुडागमोऽपि। ततः निट् ध् सु इति जाते चर्त्वेन निटत्सु इति रूपम्। चर्त्वं चात्र "खरि च" (८।४।५०) सूत्रलभ्यम्। शरि परे च चयो द्वितीयाविधानं च ("चयो द्वितीयाः शरि"—इति वार्त्तिकेन) ८।४।४८ संख्यकसूत्रदशायाम् जातम् ("नादिन्याक्रोशे" ८।४।४८ इति सूत्रे भाष्ये अस्य वार्त्तिकस्य पाठात्); अतश्च "पूर्वत्रासिद्धम्" (८।२।१) इति सूत्रे परं चर्त्वं पूर्वं शरि द्वितीयाविधानं प्रति असिद्धम्। ततश्च निटत्सु इत्यत्र त्कारस्य न थकारः। एवं निट् सु इत्यत्र टस्य न ठः। निटत्सु इत्यत्र त् कारस्य ष्टुत्वेन टकारोऽपि न "न पदान्तात् टोरनाम्" इति ष्टुत्वनिषेधात्॥ ननु "व्रश्चादि—" सूत्रेण अत्र निश् सु इत्यत्र निष्सु इति षत्वे जाते जश्त्वात् प्राक् सकारे परे सति ककारमाशङ्क्य आह—

**२९५। षढोः कः सि। ८।२।४१॥**

**दी। षस्य ढस्य च कः स्यात् सकारे परे। इति तु न भवति। जश्त्वं** प्रति (अस्य असिद्धत्वात्)। **केचित्तु व्रश्चादिसूत्रे—"दादेर्धातोः"** (८।२।३२) **इति सूत्रात् धातोरित्यनुवर्त्तयन्ति। तन्मते** (निश्भ्याम् इत्यत्र) **जश्त्वेन जकारे—निज्भ्याम्—निज्भिः। "चोः कुः"** (८।२।३०) **इति कुत्वं तु न भवति।** (कुत्वं प्रति) **जश्त्वस्यासिद्धत्वात्॥** (निश्सु इत्यत्र) **जशत्वम्। श्चुत्वम्** (सस्य चुत्वेन शकारः)। **चर्त्वम्** (जस्य चर्त्वेन चः) इति **निच्शु,** (शस्य छत्वविकल्पे तु) **निच्छु॥ "मांस-पृतना-सानूनां मांस्—पृत्—स्नवः** (**आदेशाः**) **वाच्याः शसादौ वा** ("पद्दन्नो—इति सूत्रे वार्त्तिकमेतत्)। (अतः पृतनाशब्दस्य शसि पृत् आदेशे) **पृतः। पृता—पृद्भ्याम्। पक्षे सुटि च रमावत्। गोपा विश्वपावत्** (क्विबन्तात् स्त्रियामपि पुंवद्रूपम्। न तु टाबन्तः, "अजाद्यतष्टाप्" इति तपरकरणात्)॥ **इत्याबन्ताः॥**

In निश्सु there being षत्व by the rule "व्रश्च—" &c we get निष् सु। Then the apprehension is that, why should not the rule "षढोः कः सि" (i. e, क comes in place of ष and ढ when सकार follows) operate before the operation of the rule for जश्त्व e. g. "भर्ता

जशोन्ते' ( ८।२।३९ ) ? The answer is that this present rule is असिद्ध with regard to जश्त्व, for this rule being पर is to operate after operation of जश्त्व। And जश्त्व coming in, then this has no application at all. Some however bring "धातोः" in the rule "व्रश्च—" from the rule "दादेर्धातोर्घः"। In that case in निश्भ्याम्, निश् being not a verb, then षत्व does not come & by जश्त्व we get निज्भ्याम् &c. In निज्भ्याम्, कुत्व by therule "चोः कुः" ( ८।२।३० ) does not operate, for जश्त्व is असिद्ध with regerd to कुत्व, and जश्त्व being more powerful operates first & thus nullifies further operation of कुत्व। According to this latter view in निज्सु we have निज्सु by जश्त्व then निज्षु by षत्व and lastly निच्षु by चर्त्वं of जकार। Again ष becoming optionally क्ष by the rule "शश्छोटि" we get निच्क्षु। ( Rest easy ).

मित—। सुगमा ॥ इत्यावन्ताः।

दी—। मतिशब्दः प्रायेण हरिवत्। स्त्रीत्वात् ( "तस्माच्छसो नः पुंसि" इति ) नत्वाभावः—मतीः। ( तृतीयैकवचने "आङोनाऽस्त्रियाम्" इति 'अस्त्रियाम्' इति पर्युदासात् ) नात्वं न—मत्या।

मित—। सुगमा ॥ मतिशब्दस्य इदन्तत्वात् "यू स्त्र्याख्यौ नदी" इति "नदीसंज्ञायाम् अप्राप्तायाम् ङित्सु तद्विकल्पं दर्शयितुमाह—

## २६६। ङिति ह्रस्वश्च। १।४।६ ॥

दी—। इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ ह्रस्वौ च इवर्णोवर्णौ स्त्रियां वा नदीसंज्ञौ स्तः ङिति परे। "आण्नद्याः" ( सूत्र २६८ )। मत्यै—मतये। मत्याः—मतेः। मत्याः—मतेः। नदीत्वपक्षे "औत्" इति ङेरौत्वे प्राप्ते—

Words that are always feminine ( except the base स्त्री ) and ending in long ई and ऊ which are to take इयङ् and उयङ् after them by the rule "अचि श्नु धातुभ्रुवां य्वोरियङुवङौ", and also bases ending in short इ and उ, are optionally designated as नदी in feminine when विभक्तिप्रत्यय having 'ङ' इत् follows. Thus in मति ङे, the base being optionally नदी we get आट् here by the rule "आण्नद्याः" and the form is मति आ ए=मत्यै with वृद्धि by the rule "आटश्च" ( ante ). मतये is the form when मति is not नदीसंज्ञक, गुण coming by the rule "घेर्ङिति"। Similarly मत्याः—मतेः are formed. Then in मति ङि, the rule "औत्" ( २५९ ) is to operate here when मति is नदीसंज्ञक and we look forward—

मित। "नेयङुवङ्स्थानावस्त्री" ( १।४।४ ) इति सूत्रं नञ्वर्जमनुवर्त्तते। 'य्वौ' इत्यपि अनुवर्त्तते, "वामि" ( १।४।५ ) इत्यतः 'वा' इत्यनुवर्त्तते। इयङुवङोः स्थानं स्थितिर्ययोः तौ इयङुवङ्स्थानौ। फलितमाह—'इयङुवङ्स्थानौ अस्त्री (स्त्रीशब्दभिन्नौ) नित्यस्त्रीलिङ्गौ ईदूतौ ह्रस्वौ च इवर्णोवर्णौ स्त्रियां ङिति परे वा नदीसंज्ञौ स्तः' इति। ततः मति ङे इत्यत्र मतिशब्दस्य पाक्षिके नदीत्वे सति "आण्नद्याः" इति आट्; ततः "आटश्च" इति वृद्धिरेकादेशे मत्यै। नदीसंज्ञाभावे घिसंज्ञायाम् "घेर्ङिति" इति गुणः—मतये। एवं मत्याः—मतेः इत्यादि॥ मति ङि इत्यत्र नदीत्वपक्षे "औत्" ( ७।३।११८ ) इति ङेः; औत्वे प्राप्ते आह—

२९७। इदुद्भ्याम् । ७।३।११९ ॥

दी—। नदीसंज्ञकाभ्याम् इदुद्भ्याम् परस्य ङेराम् स्यात् ( नदीत्वाभावपक्षे ) "अच्च घेः" ( सूत्र २४७ ) ( इति ङेः औत्वम्, घेरत्वं। ततः आह— ) मत्याम्—मतौ। एवं श्रुत्यादयः।

आम् is the substitute for ङि when it comes after इ and उ कारान्त bases that are optionally नदीसंज्ञक। Thus मति आम्=मत्याम्।

When मति is not नदीसंज्ञक then मति+ङि=मत औ=मतौ by the rule "अच्चघेः"। Similarly श्रुति &c are declined.

मित—। "ङेराम् नद्याम् नीभ्यः" (७।३।११६) इत्यतः "ङेराम" इति 'नदी' इति च अनुवर्त्तते। "नदी" इति च इदुद्भ्याम् इत्यस्य विभक्ति विपरिणामेन विशेषणम्। तदाह—'नदीसंज्ञाकाभ्याम् इदुद्भ्याम्' इत्यादि॥ "इदुद्भ्याम् औत् अच्चघेः" इत्यपि सूत्राङ्गं केचिदत्र पठन्ति। तेषां मते अत्र योगविभागः कर्त्तव्यः—"इदुद्भ्याम्" "औत्" अच्चघेः" इति। नदीसंज्ञायाम् आद्येन परत्वात् आम्भावस्य वाधक औद्भावो निवर्त्त्यते॥ एवम् मति आम्=मत्याम्। नदीत्वाभावपक्षे तु मति ङि इति स्थिते "अच्चघेः" इति सूत्रेण ङेरौत्वे, घेरत्वे च, मत ऐ=मतौ॥ अधुना स्त्रियाम् त्रिशब्दस्य विशेषमाह—

## २६८। त्रिचतुरोः स्त्रियां तिसृ चतसृ। ७।२।९९॥

दी—। स्त्रीलिङ्गयोरेतयोः एतावादेशौ स्तः विभक्तौ परतः।

तिसृ and चतसृ are respectively ordered in place of feminine base त्रि and चतुर् when a case affix follows.

मित—। सुगमा॥ त्रिशब्दस्य नित्यबहुवचनान्तत्वात् तिसृ+अम् इति स्थिते आह—

## २६९। अचि र ऋतः।७।२।१००॥

दी—। तिसृ चतसृ एतयोः ऋकारस्य रेफादेशः स्यादचि। गुणदीर्घोत्त्वानामपवादः। तिस्रः। तिस्रः। तिसृभिः। तिसृभ्यः—तिसृभ्यः। आमि 'नुम्—अचिर—' इति नुट्।

रेफ is ordered in place of ऋ of तिसृ and चतसृ when affixes beginning with अच् follow. This bars गुण here by the rule "ऋतो ङिसर्वनामस्थानयोः" ( ante ) and we get तिस्रः। In तिस्रः ( 2nd case plural ) this rule bars application of सवर्ण दीर्घ by the rule "प्रथमयोः

पूर्वसवर्णः" ( ante ). This very rule also bars application of उत्त्व by the rule "ऋत उत्" in the case of 6th case singular of the base प्रियत्रि ( got as प्रियाः तिस्रः यस्य इति विग्रहः ) which becomes प्रियतिसृ when विभक्तिप्रत्यय follows. Thus we get प्रियतिस्रः स्वम् ( and not प्रियतिसुः स्वम् by उत्त्व )। So we have here "गुणदीर्घोत्त्वनामपवादः"। In तिसृ+आम्, नुट् comes after रत्व by पूर्वविप्रतिषेध by the Varttika "नुम्—अचिर—तृजवद्भावेभ्यः नुट् पूर्वविप्रतिषेधेन" ( which see ante ), and then दीर्घ being due by the rule "नामि" we look forward—

मित—। पूर्वसूत्रात् 'तिसृचतसृ' इत्यनुवर्त्तते, तच्च षष्ठ्यन्तं सत् अन्वितं वर्त्तते, तदाह—'तिसृ चतसृ एतयोः ऋकारस्य रेफादेशः' इत्यादि। एष रेफादेशः "ऋतो ङि सर्वनामस्थानयोः" इत्यनेन विहितस्य गुणस्यापवादः। ततः तिसृ+अस्= तिस्रः। एवं तिसृ+अस् इत्यत्र "प्रथमयोः पूर्वसवर्णः" इति सवर्णदीर्घे प्राप्ते अयं रेफादेशः तस्य बाधको वर्त्तते ; ततः तिस्रः इति रूपम्॥ प्रियाः तिस्रः यस्य इति विग्रहे 'प्रियत्रि इति प्रातिपदिकम्। अस्य सुपि त्रिशब्दस्य स्त्रियां स्थितत्वात् विभक्तिपरत्वात् तिसृभावः इति परसूत्रे द्रष्टव्यः। एवं प्रियतिस्रः स्वम् इत्यत्र षष्ठ्येकवचने तिसृ आदेशे सति "ऋत उत्" इति उत्त्वं न स्यात् ; एष रेफादेशः एव तस्य बाधकः स्यात्। अतः आह—"गुणदीर्घोत्वानाम् अपवादः"॥ तिसृ आम् इत्यत्र नुट् बाधित्वा "अचिर ऋतः" इति रत्वे प्राप्ते "नुम अचिर तृजवद्भाविभ्यो—" इति वार्त्तिकेन पूर्वविप्रतिषेधेन नुडेव प्राप्तः। तदाह—"आमि" 'नुमचिर'— इति नुट्। नुटि सति "नामि" इति दीर्घे प्राप्ते आह—

## ३०० । न तिसृ चतसृ । ६।४।४।

दी—। तिसृ चतसृ एतयोः नामि दीर्घो न स्यात्। तिसृणाम्, तिसृषु। 'स्त्रियाम्' इति त्रिचतुरोर्विशेषणात् नेह ( "त्रिचतुरोः स्त्रियाम्—" ति सूत्रे स्त्रियां स्थितयोः त्रिचतुरोः इत्यन्वयः, अतः तत्र वृत्तावाह स्त्रीलिङ्गयोरेतयोरिति। एवं व्याख्यानात् इह 'तिसृ' आदेशो न— )।

**प्रियाः त्रयः त्रीणि वा यस्याः सा प्रियत्रिः** ( अत्र त्रिशब्दस्य स्त्रियां वृत्तिर्नास्ति ततः समासोत्तरं सुपि तिसृभावोन )—**मति शब्दवत्।** **आमि तु** ( षष्ठीबहुवचने "त्रेस्त्रयः" इति त्रयादेशस्य आङ्गत्वेन तदन्तेपि प्रवृत्तेः ) **प्रियत्रयाणाम् इति विशेषः।** **'प्रियास्तिस्रो यस्य सः' इति विग्रहे तु प्रियतिसा** ( प्रियास्तिस्रो यस्य इति तु "अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते" इति समासे अन्तर्वर्तिविभक्तेः लुप्तत्वात् अन्तरङ्गोपि तिसृभावो न। तेन प्रियत्रि इत्येव प्रातिपदिकम्। अस्य सुपि त्रिशब्दस्य स्त्रियां स्थितत्वात् विभक्तिपरत्वाच्च तिसृभावः। "ऋदुशनस्—" इत्यनङ् ततः प्रियतिसा इति )। **प्रियतिस्रौ—प्रियतिस्रः**—( गुणादीन् बाधित्वा रत्वम् ) **प्रियतिस्र-मित्यादि। प्रियास्तिस्रस्त्रो यस्य तत् कुलं प्रियत्रि।** ( "स्वमोर्नपुंसकात्" इति सूत्रेन ) **स्वमोर्लुका लुप्तत्वेन प्रत्ययलक्षणाभावात् न तिस्रादेशः** ( "न लुमताङ्गस्य" इति सूत्रेण प्रत्ययलक्षणाभावात् विभक्तिपरकत्वाभावात् तिसृभावोन )। **न लुमताङ्गस्य इति निषेधस्य अनित्यत्वात् पक्षे प्रियतिसृ। रत्वात् पूर्वविप्रतिषेधेन नुम्** ( पूर्वविप्रतिषेधेन रत्वं बाधित्वा नपुंसके नुम् ततः आह— ) **प्रियतिसृणी। प्रियतिसृणि। तृतीयादिषु वक्ष्यमाणपुंवद्भाव—विकल्पात्** ( सूत्र ३२१ ) **पर्यायेन नुम—रभावौ।** ( पुंवत्त्वाभावपक्षे नुमिरूपम्— ) **प्रियतिसृणा** ( पुंवत्त्वेनुमभावात् "अचिरऋतः" इति रत्वम्— ) **प्रियतिस्रा इत्यादि॥**

( द्विशब्दस्य "त्यदादीनामः" ( ७।२।१०२ ) इत्यत्वे स्त्रियां "अजाद्यतः टाप्" इति टाप् ततः आह— ) **द्वेरत्वे सति आप्। द्वे द्वे। द्वाभ्याम् द्वाभ्याम् द्वाभ्याम्। द्वयोः—द्वयोः।** ( टापि सति द्वाशब्दस्य रमावत् रूपाणि इति फलितम् )॥

Eng.—Easy.

( अथ स्त्रियामीदन्ताः निरूप्यन्ते।—गौरी सु इत्यत्र हलङ्याब्भ्यादिसूत्रेण सुलोपः। ततः आह— )।

**ङी—। गौरी। गौर्यौ—गौर्यः** ( दीर्घात् "जसि च" इति पूर्वसवर्णदीर्घनिषेधे यण् इति भावः )। ( गौरीशब्दस्य "यू स्त्र्याख्यौ नदी" इति नदीत्वात् आह— )। **नदीकार्य्यम्, हे गौरि** ( 'अम्बार्थनद्योर्ह्रस्वः' इति। ( 'आट् नद्याः'

"आटश्च" इति ) **गौर्य्यै इत्यादि।** ( "ङेराम्—" इति ङौ गौर्य्याम् इत्यादि नदीकार्य्यं बहुश्रेयसीवत् बोध्यम् )। **एवं वाण्यादयः॥** ( सखिशब्दात् स्त्रियाम् ङीषि सखी इति प्रातिपदिकम्। अस्य "अनङ् सौ" "सख्युरसंबुद्धौ" इति अनङ्—णिद्भावौ आशङ्क्य आह— ) **प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणात् अनङ्णिद्भावे प्राप्ते "विभक्तौ लिङ्गविशिष्टाग्रहणम्"** ( वार्त्तिक ) **इति न अनङ्—णिद्भावौ। ततः सखी—सख्यौ—सख्यः इत्यादि गौरीवत्॥**

( "लक्षेर्मुट् च" इति लक्षधातो रीप्रत्यये मुडागमे लक्ष्मीशब्दः। तस्य अङ्यन्तत्वात विशेषमाह— ) **अङ्यन्तत्वात् न सुलोपः। लक्ष्मीः। शेषं गौरीवत्। एवं तरीतन्त्र्यादयः।** [ "अवितृ स्तृतन्त्रिभ्यः ई" इति ईप्रत्यये आवीः तरीः तन्त्रीः, इत्यादि। एषां "कृदिकारात्" इति ङीषि तु सम्पूर्णं गौरीवत् ]॥

( स्त्यायत्यस्याम् इत्यधिकरणे ड्रट्। स्त्रियां ङीप्। 'स्त्री' इति प्रातिपदिकम्। हल्ङ्यादिलोपः। ततः आह— ) **स्त्री।** (स्त्रीशब्दस्य नदीत्वात्—) **हे स्त्रि** ("अम्बार्थनद्योर्ह्रस्वः")॥ ( स्त्री औ इति स्थिते अत्र अधात्विकारत्वात् "अचि श्नु धातुभ्रुवां य्वोरियङुवङौ" इति इयङि अप्राप्ते आह— )

**२०१। स्त्रियाः। ६।४।७९॥**

**वृ—। स्त्रीशब्दस्य इयङ् स्यात् अजादौ प्रत्यये परे। स्त्रियौ—स्त्रियः।**

Eng.—Easy.

मित—। सुगमा॥ स्त्रीशब्दस्य अमि शसि च अनेन सूत्रेण स्त्रियम् स्त्रियः इति नित्यमेव इयङि प्राप्ते आह—

**२०२। वाऽम्शसोः। ६।४।८०॥**

**वृ—। अमि शसि च स्त्रियाः इयङ् वा स्यात्। स्त्रियम्—स्त्रीम्। स्त्रियौ। स्त्रियः—स्त्रीः॥ स्त्रिया। स्त्रियै** ( **आट् वृद्धिः इयङ् च** )।

**स्त्रियाः। स्त्रियाः—स्त्रियोः।** (आमि "स्त्रियाः" इति इयङ् अपेक्षया "ह्रस्व-नद्यापो नुट्" (७।१।५४) इति नुटः परत्वात् नुटि प्राप्ते आह—) **परत्वात् नुट्—स्त्रीणाम्। स्त्रियाम्—स्त्रीषोः—स्त्रीषु॥**

The base स्त्री takes optionally इयङ् when अम् and शस् follows. Thus स्त्रियम्—स्त्रीम् &c. In स्त्रीणाम् we have नुट् in supercession of इयङ् by the rule "स्त्रियाः", for the rule for नुट् is later than this ruie.

मित—। सुगमा॥ अधुना प्रसङ्गात् पुंसि नपुंसके च स्त्रीशब्दस्य विशेषं दर्शयति—

**दी—। स्त्रियमतिक्रान्तोऽतिस्त्रिः। अतिस्त्रियौ। "गुण—नाभाव औत्व—नुड्भिः परत्वात् पुंसि बाध्यते। क्लीबे नुमा च स्त्रीशब्दस्य इयङ् इत्यवधार्य्यताम्'॥**

(स्त्रीशब्दस्य इयङ्तु, पुंसि "जसि च" "घेर्ङिति" इत्यादिगुणः, "आङो नास्त्रियाम्" इति नाभावः, "अच्चघेः" इति औत्वम्, "ह्रस्वनद्यापो नुट्" इति नुट प्रभृतिभिः बाध्यते; ततः आह—गुण—नाभाव—औत्वनुड्भिः परत्वात् बाध्यते"; क्लीबे तु परत्वात् "इकोचि विभक्तौ" इति नुमा इयङ् बाध्यते इत्यन्वयः। ततः आह—)

**दी—। "जसि च" (? इति गुणः)। अतिस्त्रयः। हे अतिस्त्रे** ("ह्रस्वस्य गुणः" इति गुणे "एङ् ह्रस्वात्" इति संबुद्धिलोपः)। **हे अतिस्त्रियौ—हे अतिस्त्रयः॥ "वाम् शसोः" इति इयङ्विकल्पात्—अतिस्त्रियम् अतिस्त्रिम्। अतिस्त्रियौ। अतिस्त्रियः—अतिस्त्रीन्। अतिस्त्रिणा। 'घेर्ङिति' (? इति गुणः)। अतिस्त्रये। अतिस्त्रेः। अतिस्त्रियोः। अतिस्त्रीणाम्। "अच्चघेः" (इति औत्वे) अतिस्त्रौ। अतिस्त्रियोः।** (अधुना फलितमाह—)

**"ओसौकारे च नित्यं स्यादमशसोस्तु विभाषया।**
**इयादेशोऽचि नान्यत्र स्त्रियाः पुंस्युपसर्जने"॥**

(अन्वयः यथा—"उपसर्जनत्वदशायां पुंसि विद्यमानस्य स्त्रीशब्दस्य 'अचि यः इयादेशः' "स्त्रियाः" इति सूत्रविहितः इत्यर्थः, सः 'ओसि' षष्ठीसप्तमीद्विवचने 'औकारे च'

प्रथमा—द्वितीया—द्विवचने च नित्यं स्यात्। 'अम् शसोस्तु विभाषया' विकल्पेन स्यात्। उक्त चतुर्थ्यो— अन्यत्र तु अचि सर्वत्र इयादेशो न स्यात् इति योजना"— इति बालमनोरमा )।

दी—। ( स्त्रियमतिक्रान्तं कुलम् अतिस्त्रि। अस्य "स्वमोर्नपुंसकात्" इति सुलुक्। ततः अतिस्त्रि इति— ) **अतिस्त्रि।** **क्लीबे तु नुम्** ( "नपुंसकस्य झलचः" इति नुम् ) **अतिस्त्रिणी।** [ अत्र "क्लीबे तु नुम। अतिस्त्रि" इति पाठः सर्वत्र दृश्यते। तन्न युक्तम्, यतः अतिस्त्रि इत्यत्र नुमागमस्य प्राप्तिरेव नास्ति, किन्तु अतिस्त्रिणी इत्यत्र नुमो प्राप्तिरस्ति। अतः "अतिस्त्रि। क्लीबे तु नुम्—अतिस्त्रिणी" इत्येव पाठः साधीयान् भाति ]। **अतिस्त्रीणि।** ( "इकोचि विभक्तौ" इति नुम्, तदाह— ) **अतिस्त्रिणा। अतिस्त्रिणे। ङेप्रभृतौ अजादौ वक्ष्यमाण-पुंवद्भावात् पक्षे प्राग्वद्रूपम्** ( ३२, सूत्रं द्रष्टव्यम् )। **अतिस्त्रये—अति-स्त्रिणे। अतिस्त्रेः—अतिस्त्रिणः। अतिस्त्रेः—अतिस्त्रिणः। अति-स्त्रियोः—अतिस्त्रिणोः। इत्यादि॥** ( स्त्रियमतिक्रान्ता इति विग्रहे "अत्यादयः क्रान्ताद्यर्थे" इति समासे "गोस्त्रियोरुपसर्जनस्य" इति ह्रस्वे सति अतिस्त्रिशब्दः। तस्य प्रायेण उक्तपुल्लिङ्गवत् रूपाणि तदाह— ) **स्त्रियां तु प्रायेण पुंवत्।** ( विशेषं दर्शयति— ) **शसि अतिस्त्रीः** ( इयङ् पक्षे पुंवत्। तदभावपक्षे— स्त्रीलिङ्गत्वात् नत्वं न, अतः आह अतिस्त्रीः इति )। ( स्त्रीलिङ्गत्वात् नात्वाभावे इयङ्, तदाह— ) **अतिस्त्रिया।** '**ङितिह्रस्वश्च" इति ह्रस्वान्तत्वप्रयुक्तो विकल्पः** ( इति अतिस्त्रिशब्दस्य मतिशब्दवत् ङित्सु नदीत्वविकल्प एव )। [ ननु "नेयङुवङ्स्थानावस्त्री" ( सूत्र २०२ ) इत्यतः 'अस्त्री' इत्यस्य अनुवृत्तेः कथमिह नदीत्वविकल्पः इत्याशङ्कायामाह— ] **'अस्त्री' इति तु 'इयङुवङ्स्थानौ' इत्यस्यैव पर्युदासः, तत् संबद्धस्यैवानुवृत्तेः दीर्घस्यायं निषेधः न तु ह्रस्वस्य** ( "ङिति ह्रस्वश्च" इति सूत्रे इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गौ ईदूतौ नदीसंज्ञौवास्तः ङिति इति प्रथमः कल्पः। ह्रस्वौ इवर्णोवर्णौ स्त्रियां ङिति नदी-संज्ञौवास्तः इति द्वितीयः कल्पः। अतिस्त्रिशब्दस्य द्वितीयकल्पेन ङित्सु नदीत्व-विकल्पः। 'अस्त्री' इति पर्युदासस्य 'प्रथम कल्पस्थितस्य "इयङुवङ्स्थानौ" इत्यस्य

एव विशेषणम्। अतः अस्यैव पर्य्युदासः। एतत्संबद्धस्य च 'ईदूतौ' इत्येतं प्रति अन्वयात् 'अस्त्री' इति दीर्घस्य स्त्रीशब्दस्य निषेधः न तु ह्रस्वस्य; अतः 'अतिस्त्रि' इत्यत्र 'स्त्रि' इत्यस्य दीर्घत्वाभावात् ङित्सु अस्य नदीत्वविकल्पः सुस्थितः एव। ततः आह— ) **अतिस्त्रियै—अतिस्त्रये। अतिस्त्रियाः—अतिस्त्रेः ( २ ) अतिस्त्रीणाम्॥ अतिस्त्रियाम्—अतिस्त्रौ॥** ( अधुना श्रीशब्दमाह। श्रि+क्विप्=श्रीः। दीर्घः असम्प्रसारणञ्च। अस्य अब्यन्तत्वात् न सुलोपः तदाह— ) **श्रीः श्रियौ—श्रियः** ( धात्ववयव—इवर्णत्वात् "अचि श्नु धातु—" इति इयङ् )॥

Eng.—Easy.

( अस्य "यू स्त्र्याख्यौ नदी" इति नदीत्वात् संबुद्धौ ह्रस्वे प्राप्ते आह— )

**३२३। नेयङुवङ्स्थानावस्त्री। १।४।४॥**

दी—। **इयङुवङोः स्थितिर्ययोः तावीदूतौ नदीसंज्ञौ न स्तः, न तु श्री। हे श्रीः। श्रियम्—श्रियौ—श्रियः** ( इयङ् )। ( "ङिति ह्रस्वश्च" इति ङिति नदीत्वपक्षे आट् वृद्धिश्च, तदाह— ) **श्रियै—श्रिये** ( इति नदीत्वाभावे इयङ् )। **श्रियाः—श्रियः**।

Excepting the base श्री, words that take the affixes इयङ् and उवङ् after them and end in ई and ऊ are not termed as नदी। Thus श्री is not नदीसंज्ञक, and we get हे श्रीः ( without ह्रस्व as in नदीसंज्ञक words ). In श्रियम् &c, there is इयङ्। When श्री is optionally नदी by the rule "ङिति ह्रस्वश्च", then श्री+ङे=श्री+आट् ए=श्री ऐ=श्रियै ( with इयङ् ); when it is not नदी then इयङ् only comes and the form is श्रिये। Similarly श्रियाः+श्रियः in नदीत्वपक्षे+अनदीत्वपक्षे respectively.

मित—। "यू स्त्र्याख्यौ नदी" इति पूर्वसूत्रेण विहिता नदीसंज्ञा प्रतिषिध्यते॥ अनेन सूत्रेण श्रीशब्दस्य तु नित्या संज्ञा इत्यर्थः। अन्यत् सुगमम्॥ श्री+आम इति स्थिते। आमो अङित्वात् तत्र नदीत्वाभावे सति आह—

२०४। वामि। १।४।५॥

**दी—। इयङुवङ्स्थानौ स्त्र्याख्यौ यू आमि वा नदीसंज्ञकौ स्तः, न तु स्त्री। श्रीणाम्—श्रियाम्। भ्रियाम्—भ्रियि॥**

Excepting the base स्त्री, feminine words that take the affixes इयङ् & उवङ् after them and end in ई and ऊ are optionally treated as नदीसंज्ञक when आम (6th case plural affix) follows. Thus नदीत्वपक्षे—श्री+नाम्=श्रीणाम् (with नुट् by the rule "ह्रस्वनद्यापो नुट्"); अनदीत्वपक्षे—श्रियाम् (with इयङ्)। Similarly भ्रौं नदीत्वपक्षे भ्रियाम्; other wise the form is भ्रियि।

मित—। "वा आमि" इति छेदः। "यू स्त्र्याख्यौ नदी" (१।४।३।) इति वर्त्तते, "नेयङुवङ्स्थानावस्त्री" इत्यपि नञ्वर्जमनुवर्त्तते। तदाह—'इयङुवङ्-स्थानौ स्त्र्याख्यौ' इत्यादि। आमि नदीत्वपक्षे—श्रीणाम् ("ह्रस्वनद्यापो नुट्" इति नुट्; णत्वम्); अनदीत्वपक्षे इयङि श्रियाम्। एवं ङौ ङित्त्वात् नदीत्वे भ्रियाम् ("ङेराम् नद्याम् नीभ्यः" इति ङेः आम्)। अनदीत्वे तु भ्रियि इति इयङ्॥

**दी—। 'प्रधी' शब्दस्य तु वृत्तिकारादीनां मते लक्ष्मीवत् रूपम्।** (ननु प्रध्यायतेः क्विपि निष्पन्नस्य प्रधीशब्दस्य नित्यस्त्रीत्वाभावात् कथमस्य नदीसंज्ञा येन लक्ष्मीवत् रूपं स्यात्? इत्यत्राह—) **'पदान्तरं विनापि स्त्रियां वर्त्त-मानत्वं नित्यस्त्रीत्वम्' इति (वृत्तिकारादिभिः) स्त्रीकारात्। "लिङ्गा-न्तरानभिधायकत्वं नित्यस्त्रीत्वं" इति कैयटमते तु पुंवत् रूपम्। 'प्रकृष्टाधीः' इति विग्रहे** (प्रधीशब्दस्य नित्यस्त्रीत्वात्) **लक्ष्मीवत् रूपम्** [अङ्न्तत्वात् न गौरीवत्]। **अमि शसि च 'प्रध्यम्' 'प्रध्यः' इति विशेषः** ("एरनेकाचः असंयोगपूर्वस्य" इति यण्)॥ **सुष्ठु धीर्यस्य, सुष्ठु—ध्यायति वा इति विग्रहे तु वृत्तिकारमते 'सुधीः' श्रीवत्। मतान्तरे तु** (लिङ्गान्तरानभि-धायकत्वं स्त्रीत्वमिति कैयटमते) **पुंवत्। 'सुष्ठु धीः' इति विग्रहे तु नित्य स्त्री-**

**त्वात् स्त्रीवदेव। ग्रामणीः (स्त्रियामपि) पुंवत्।** (प्रधीशब्दवत् पदान्तरं विनापि स्त्रियां वर्त्तमानत्वात् नित्य स्त्रीलिङ्गत्वात् कथं ग्रामणी पुंवत् इत्याह— ) **ग्रामनयनस्य उत्सर्गतः पुंधर्मतया, पदान्तरं विनापि स्त्रियामप्रवृत्तेः** (अस्य नित्यस्त्रीत्वाभावात् न नदीकार्य्यम्)। **एवं खलपवनादेरपि पुंधर्मत्वम् औत्सर्गिकम् वोध्यम्** (अतः खलपूः कटप्रूः इत्यादिशब्दानामपि स्त्रियाम् वृत्ति-कारादिमतेपि नित्यं स्त्रीत्वं न)॥ इतीदन्ताः॥

Eng.—unnecessary.

(अथ उदन्ताः निरूप्यन्ते— )

**दी—। धेनुः—मतिवत्।**

मित—। अथ क्रोष्टुशब्दस्य स्त्रियाम् विशेषमाह—

**३०५। स्त्रियां च। ७।१।९६॥**

**दी—। स्त्रीवाची क्रोष्टुशब्दः तृजन्तवत् रूपं लभते।**

The base क्रोष्टु when denoting स्त्रीलिङ्ग then it is declined like तृजन्त bases.

मित—। रूपातिदेशोयम्। तदाह—'स्त्रीवाची क्रोष्टुशब्दः'। एवं स्त्रियाम् क्रोष्टुशब्दः क्रोष्टृ इति ऋदन्त भवति। ततश्च इह—तृजवद्भावः सार्वत्रिकः, पूर्वत्र तु असंबुद्धौ सर्वनामस्थाने विधिः, वैकल्पिकश्चाजादौ॥ एवं क्रोष्टृ इति प्रातिपदिके स्थिते आह—

**३०६। ऋन्नेभ्यो ङीप्। ४।१।५ प**

**दी—। ऋदन्तेभ्यः नान्तेभ्यश्च (प्रातिपदिकेभ्यः) स्त्रियां ङीप् स्यात्। क्रोष्ट्री—क्रोष्ट्र्यौ—क्रोष्ट्र्यः (गौरीवत्)।**

ङीप् comes after ऋदन्त+नान्त bases when they denote feminine objects. Thus क्रोष्टृ+ङीप्=क्रोष्ट्री। Then it is declined like गौरी ॥ The instance for ङीप् नान्त bases is दुःखिनी, दन्तिनी &c.

मित—। ऋतश्च नश्च इति द्वन्द्वः। तेभ्यः। "स्त्रियाम्" इत्यधिकारोऽस्ति। "ङ्याप्प्रातिपदिकात्" इत्यत्र प्रातिपदिकग्रहणमनुवर्त्तते। तथा च वृत्तिः—ऋदन्तेभ्यः नान्तेभ्यः प्रातिपदिकेभ्यः स्त्रियां ङीप् स्यात्। 'प्रातिपदिक' इत्यनुवृत्तेः दीक्षितपाठे 'प्रातिपदिकेभ्यः' इति स्यात् युक्तम् मन्ये। वृत्तिकारश्च आह—ऋकारान्तेभ्यः नकारान्तेभ्यः प्रातिपदिकेभ्यः' स्त्रियाम् ङीप् प्रत्ययो भवति॥ इत्युदन्ताः॥

( अधुना ऊदन्ताः कथ्यन्ते— )

दी—। 'वधूः' गौरीवत्। 'भ्रूः' श्रीवत् (" अचि श्नुधातुभ्रुवां—" इति उवङ्)। ( सुशोभना भ्रूर्यस्य इति सुभ्रूः। अस्य "नेयङुवङ्स्थानवस्त्री" इति नदीत्वनिषेधात्— )। हे सुभ्रूः। ( यदि सुभ्रूशब्दे नदीकार्य्यं न स्यात् ) कथं तर्हि "हा पितः क्वासि हे सुभ्रु" इति भट्टिः। प्रमाद एवायम् इति बहवः। ( वस्तुतस्तु "अप्राणिजातेश्चारज्ज्वादीनाम्" ( वार्त्तिक ) इत्यूकारान्तादपि स्त्रियाम् ऊङ् विहितः। ततो नदीसंज्ञा। ततो संबुद्धिह्रस्वः। एतेन "विमानना सुभ्रु कुतः पितुर्गृहे" इति व्याख्यातम् इति पूर्वत्र द्रष्टव्यम् )। खलपूः पुंवत् ( इति प्राक् प्रतिपादितम् )। पुनर्भूः। ( अस्य "नेयङ् उवङ्स्थानावस्त्री" इति निषेधमाशङ्क्य आह— ) "दृन्करं—" ( वार्त्तिक ) इति यणा उवङो बाधनात् "नेयङुवङ्—" इति निषेधो न ( ततः अस्य नदीकार्य्ये सति आह— ) हे पुनर्भु। पुनर्भ्वम् पुनर्भ्वौ—पुनर्भ्वः॥

मित—। नद्यन्तत्वात् नुटि दीर्घे पुनर्भूनाम् इति स्थिते रेफात् नकारस्य भिन्नपदस्थत्वात् "अट् कुप्वाङ्नुम् व्यवायेपि" इत्यस्य अप्राप्तौ सत्याम् आह—

३०७। एकाजुत्तरपदे णः। ८।४।१२॥

दी—। एकाजुत्तरपदं यस्य तस्मिन् समासे पूर्वपदस्थात् निमित्तात् परस्य प्रातिपदिकान्त नुम् विभक्तिस्थस्य नस्य नित्यं णत्वं स्यात्। आरम्भसामर्थ्यात् नित्यत्वे सिद्धे पुनर्ग्रहणं स्पष्टार्थम्। ( "दृन्करं—" इति वार्त्तिकविहितं ) यणं बाधित्वा परत्वात् नुट्। पुनर्भूणाम्॥

न ( dental ) being in the उत्तरपद which is of one vowel & at the same time it being of विभक्ति, of नुम् and at the end of a प्रातिपदिक, always changes to ण ( cerebral ) & the cause for the change (as in the rule "रषाभ्यां नोणः" &c ) being in a पूर्वपद। Thus पुनर्भ्वाम् with cerebral. Here नुट् comes in supercession of यण् due by tha Varttika "इन्कर—", being पर in the order of Astadhyayi.

मित—। उत्तरपदशब्दस्तु समासस्य चरमावयवे रूढ़ः। एकः अच् यस्मिन् तत् एकाच्; तत् उत्तपरपदं यस्य सः एकाजुत्तरपदः। तस्मिन्। एकाच् यः समासचरमावयवः तस्मिन् स्थितस्य नस्य इत्यर्थः। "प्रातिपदिकान्तनुम् विभक्तिषु च" ( ८।४।११ ) इति अत्र वर्त्तते। "पूर्वपदात् संज्ञायाम् अगः" ( ८।४।३ ) इत्यतः 'पूर्वपदात्' इति अनुवर्त्तते। तदाह—एकाजुत्तरपदे समासे पूर्वपदस्थात् निमित्तात् परस्य प्रातिपदिकान्त विभक्तिस्थस्य नस्य नित्यं णः स्यात्॥ "रषाभ्यां नोणः समानपदे" ( ८।४।१) इत्यतः 'ण' इत्यनुवर्त्तमाने पुनर्णं—ग्रहणं व्यर्थम्। न च "प्रातिपदिकान्त नुम्—" इति विकल्पनिवृत्त्यर्थं पुनर्ण-ग्रहणं वाच्यम्?—तत् कथं पनर्ण-ग्रहणमित्यत्राह—"आरम्भसामर्थ्यात् नित्यत्वेसिद्धे पुनर्ग्रहणं स्पष्टार्थम्"॥ अन्यत् सुगमम्॥ अधुना वर्षाभूशब्दे विशेषमाह—

**दी—। वर्षाभूः। भेकजातौ नित्यस्त्रीत्वाभावात् हे वर्षाभूः कैयटमते। मतान्तरे तु** ( पदान्तरं विनापि स्त्रियां वर्त्तमानत्वात् इति वृत्तिकारमते तु ) **हे वर्षाभु। "भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दुर्दुरे पुमान्" इति यादवः** ( ततः वर्षाभूशब्दस्य नित्यस्त्रीत्वम् न )। **"वर्षाभ्वश्च" इति यण्। वर्षाभ्वौ वर्षाभ्वः। स्वयम्भू पुंवत्** ( अस्य चतुरानने रूढ़त्वात् न स्त्रीलिङ्गता )॥ इतूदन्ताः॥

Eng.—unnecessary.

मित—। सुगमा—। अथ ऋदन्ताः कथ्यन्ते—अस + ऋण्=स्वसृ इति, पूर्वमुक्तम्। अस्य स्त्रियाम् "ऋन्नेभ्यो ङीप्" इति ङीपि प्राप्ते आह—

३०८। न षट् स्वस्रादिभ्यः।

दी—। षट्संज्ञकेभ्यः स्वस्रादिभ्यः ङीप् टापौ नस्तः।

ङीप् ( by the rule "ऋन्नेभ्यो ङीप्" ) and टाप् (by the rule "टाबृचि" ) are not to come after the six bases with स्वसृ &c, at the beginning in the feminine. Now the seven bases स्वसृ &c are being enumerated.

मित—। सुगमा।

दी—। स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा।
याता मातेति सप्तैते स्वस्रादय उदाहृताः॥

"अप्तृन्—" इति दीर्घः। स्वसा—स्वसारौ—स्वसारः॥ माता पितृवत्। शसि ( अपुंस्त्वात् न—भावो न ) मातॄः।

Eng.—Easy.

मित—। "न तिसृ चतसृ" इति निषेधादेवानयोः ङीवभावो ज्ञायते; अत्र तु पाठो व्यर्थः इति "ऋन्नेभ्यः" सूत्रे कैयटः॥ "ननान्दा तु स्वसा पत्युः" इत्यमरः॥ स्वसृशब्दस्य "अप्तृन्—" सूत्रे ग्रहणात् सर्वनामस्थाने दीर्घः। अन्येषामग्रहणात् न दीर्घः।

दी—। द्यौः गोवत्। ( द्योशब्दस्य इदं रूपं न तु दिव्शब्दस्य )। राः पुंवत् ( रैशब्दस्य स्त्रियाम् 'राः' इत्यादि पुंवत् )। नौः ग्लौवत्॥

Eng.—Easy.

मित—। सुगमा॥

# "अथ अजन्तनपुंसकलिङ्गाः"



३०९ । अतोऽम् । ७।१।२४ ॥

दी—। अतोऽङ्गात् क्लीवात् स्वमोरम् स्यात् । "अमि पूर्वः" ( सूत्र १६४ ) । ज्ञानम् । "एङ् ह्रस्वात्—" ( सूत्र १९३ ) इति हल्मात्रलोपः । हे ज्ञान ।

सु ( 1st case singular ) and अम् (2nd case singular ) after अकारान्त neuter bases, are replaced by अम् । Then the sutra "अमिपूर्वः" operates and we get ज्ञानम् by पूर्वरूप एकादेश । Then in हे ज्ञान स् it becomes हे ज्ञान अम् (सोः अम् by this very rule)=हे ज्ञानम् ; and then म् only which is now left of संबुद्धि elides by the rule "एङ् ह्रस्वात्" (rule 193 ante ).

३१० । नपुंसकाच्च । ७।१।१९ ॥

दी—। क्लीवात् परस्य औङः शी स्यात् । भसंज्ञायाम् ।

औङ् is the designation for औ and औट् । And औट् ending after neuter bases is replaced by शी । Now in 'शी', श is इत् and ई is only left. In ज्ञान+ई ( the substitute of औ ), ज्ञान is a भ by the rule "यचि भम्" ; for here अच् विभक्तिप्रत्यय follows, and now we look forward—

मित—। "जसः शी" ( ७।१।१७ ) इत्यतः 'शी' ; "औङ् चापः" ( ७।१।८१ ) इत्यतः औङ् इति अनुवर्त्तते । तथा च वृत्तिः "क्लीवात् परस्य औङः शी स्यात्" । 'शी' इत्यत्र "लशक्वतद्धिते" इति सूत्रेण शकारस्य इत्त्वात् ईकारमात्रे सति ज्ञान+ई इत्यत्र 'ज्ञाने' इत्यस्य "यचिभम्" इति भसंज्ञायाम् सत्याम् आह—

३११ । यस्येति च । ६।४।१४८ ॥

दी—। तस्य इवर्णावर्णयोः लोपः स्यात् ईकारे तद्धिते च परे। इत्यकारलोपे प्राप्ते—। "औङः श्यां प्रतिषेधो वक्तव्यः" (वार्त्तिक)। ज्ञाने ।

The इवर्ण and अवर्ण of a भसंज्ञक word elides when ई or a तद्धित affix follows. Thus here in ज्ञान+ई the elision of अकार in ज्ञान being due, the Varttika "औङः श्याम्" declares that अकार of a भसंज्ञक word is not to elide when शी of औङ् follows. Thus now ज्ञान+ई=ज्ञाने ।

मित—। यस्य ईति इति छेदः ॥ अः च इः च इति समाहारद्वन्द्वः 'यम्'। तस्य। अवर्ण—इवर्णयोः इत्यर्थः। 'भस्य' इत्यधिकृतमस्त्येव। सूत्रे 'चकारात्' "नः तद्धिते" इति सूत्रात् 'तद्धिते' इति "ढ्रलोपः" (६।४।१४७) इत्यतः लोपः चानुवृत्तमस्ति। तदाह—भस्य इवर्णावर्णयोः लोपः स्यात् ईकारे तद्धिते च परे। एवम् ज्ञान+ई इत्यत्र अकारलोपे सति वार्त्तिकमाह—"औङः श्याम्—"। अनेन च अलोपे प्रतिषिद्धे "आद्गुणः" इति 'ज्ञाने' इति रूपम् ॥ ज्ञान+जस् इति स्थिते आह—

३१२ । जश्शसोः शिः । ७।१।२० ॥

दी—। क्लीबात् अनयोः शिः स्यात् ।

मित—। सुगमा। इति ज्ञान+शि इति स्थिते आह—

३१३ । शि सर्वनामस्थानम् । १।१।४२ ॥

दी—। 'शि' इति एतत् उक्त संज्ञं स्यात् ।

This शि (the substitute of जस् and शस्) is styled as सर्वनामस्थान affix. And we look forward—

मित—। सुगमा ॥

३१४ । नपुंसकस्य झलचः । ७।१।७२ ॥

दी—। झलन्तस्य अजन्तस्य च क्लीवस्य नुमागमः स्यात् सर्वनामस्थाने परे। उपधादीर्घः। ज्ञानानि। पुनस्तद्वत्। शेषं रामवत्। एवं धनवनफलादयः ॥

Of a neuter base ending in झल् letter (i. e, consonants excepting the nasals & ह य व र ल ) or अच् letter (vowel), नुम् is the augment when a सर्वनामस्थान affix follows, Thus here शि being सर्वनामस्थान, we have नुम् here. So ज्ञान+शि ( इ )=ज्ञान न् इ ; this becomes ज्ञानानि with उपधादीर्घ by the rule "सर्वनामस्थाने चासंबुद्धौ" ( ante ). Similar declension is in 2nd case, & the rest are like राम।

मित—। "इदितो नुम् धातोः" इत्यतः 'नुम्' इति, 'उगिदचां सर्वनामस्थाने" इत्यतः 'सर्वनामस्थाने' इति चानुवर्त्तते। तदाह—'झलन्तस्य अजन्तस्य च क्लीवस्य नुमागमः' इत्यादि। "मिदचोऽन्त्यात् परः" इति नुम् इत्यस्य मित्त्वात् अन्त्यात् अचः परः स्यात्। एवं ज्ञानन् शि ( इ ) इति जाते "सर्वनामस्थाने चासम्बुद्धौ" इति अत्र नान्तस्य 'ज्ञानन्' इत्यस्य उपधादीर्घे सति ज्ञानन्+इ=ज्ञानानि ; इति द्वितीयामपि ईदृशं रूपम्। अतः आह—"पुनस्तद्वत्" ॥ शिष्यते इति 'शेषम्' ( कर्मणि घञ )। "घञजवन्ताः पुंसि" इत्यस्तु प्रायिकत्वात् 'शेषम्' इति क्लीबे रूपम् इति सर्वमवदातम् ॥ अन्यत् सुगमम् ॥ अधुना सर्वादिगणान्तर्भुक्तानाम् केषाञ्चित् क्लीवे विशेषं वक्तुमुपन्यस्यति—

३१५ । अद्ड् डतरादिभ्यः पञ्चभ्यः । ७।२।२५ ॥

दी—। एभ्यः क्लीवेभ्यः स्वमोरद्ड् आदेशः स्यात्।

Eng.—Easy.

मित—। डतरादिः सर्वाद्यन्तर्गणः। डतर डतम अन्य अन्यतर इतर इति डतरादयः। अत्र डतरडतमौ प्रत्ययौ। तत्र तदन्तविधिना डतरडतमप्रत्ययान्ताः

गृह्यन्ते॥ अत्र डकार इत्। एवं कतर+सु इत्यत्र कतर+अत् इति स्थिते आह—

३१६। टेः। ६।४।१४३॥

दी—। डिति परे भस्य टेः लोपः स्यात्। "वावसाने" (इति चर्त्त्व-विकल्पः)। कतरत्—कतरद्॥ 'भस्य' इति किम्? पञ्चमः॥ टेः लुप्तत्वात् "प्रथमयोः—" (सूत्र १६४) इति पूर्वसवर्णदीर्घः "एङ्ह्रस्वात्—" इति सम्बुद्धिलोपश्च न भवति। हे कतरत्। पुनन्तद्वत्। शेषं पुंवत्॥ (? एवं) कतमत्। इतरत्। अन्यत्। अन्यतरत्। (अन्यतमशब्दः अव्युत्पन्नः इत्युक्तं प्राक् अतः)—अन्यतमशब्दस्य तु अन्यतमम् इत्येव॥ "एकतरात् प्रतिषेधो वक्तव्यः" (वार्त्तिक)—एकतरम्॥

The टि portion of a भसंज्ञक base elides when a डइत् affix follows. Thus कतर+अद्ड्=कतर+अत्=कतर्+अत्=कतरत्॥ In कतरत्, चर्त्त्व by the rule "वावसाने" (ante) is optional; so two forms are available—कतरद् and कतरत्। why do we take भस्य in the वृत्ति? Witness पञ्चमः (where when मट् in place of डट् follows पञ्चन्—पञ्चन् not being a भ, its टि portion does not elide & we get पञ्चमः)। Now the necessity of डित् in अद्ड् is being enumereted;—As टि portion elides owing to डित्त्व here, so the rules "प्रथमयोः पूर्वसवर्णः" & "एङ् ह्रस्वात्—" does not apply here, for टि—portion being elided we have no ह्रस्वान्तत्व in कतर & hence the above rules can not apply at all (अङ्गस्य ह्रस्वान्तत्वाभावात् सम्बुद्धिलोपो न)। Thus we get हे कतरत्। Similarly 'कतमत्' इतरत् &c. The base अन्यतम being a non—derivative as said before i. e, not being डतम प्रत्ययान्त we get अन्यतमम् in the neuter 1st and 2nd case singular. In the case of एकतर however अद्ड् for सु and अम् does

not come by the very Varttika "एकतरात् प्रतिषेधो वक्तव्यः"। Thus we get एकतरम् in neuter 1st case & 2nd case singular.

मित—। "अल्लोपोऽनः" (६।४।१३४) इत्यतः 'लोप' इति "तिविंशतेर्डिति" (६।४।१४२) इत्यतः 'डिति' इति अनुवर्त्तते। 'भस्य' इत्यधिकृतमस्त्येव। तदाह— 'डिति भस्य टेः लोपः स्यात्'॥ डिति अभस्यापि अनुबन्धकरणसामर्थ्यात् टिलोपो भवति यथा 'कुमुद्वान्' इत्यादौ। एवं सत्यपि कथं 'भस्य' इति वृत्तौ उक्तम्? तदाह—'पञ्चमः' इत्यत्र डटो मडागमे 'पञ्चन्' शब्दस्य अभत्वात् टिलोपो न। अतः सुष्ठु 'भस्य' इति उक्तम्॥ कतर+अदट् इत्यत्र टेः लोपात् कतर्+अत् इति जाते ह्रस्वान्तत्वाभावात् 'एङ्ह्रस्वात्' इति संबुद्धिलोपो न। 'कतरत्' इति। अतः टिलोपप्रवृत्तये 'अदड्' इति डित्करणम्॥ अविद्यमाना जरा यस्य कलस्य इति विग्रहे "नञोऽस्त्यर्थानाम् वहुव्रीहिरुत्तरपदलोपश्च वक्तव्यः" इति वहुव्रीहौ अजरशब्दः सिध्यति ; अस्य रूपमाह—

दी—। **सोरमादेशे कृते सन्निपातपरिभाषया न जरस्**—("अदन्त सन्निपाताश्रयस्य अमः अदन्तत्वविघातक—जरसादेशं प्रतिनिमित्तत्वायोगात्" इत्यर्थः)। **अजरम्**। (जरसादेशपक्षे) **अजरसी** ; (जरसादेशाभावे) **अजरे**। (जसि तु) **परत्वात् जरसिकृते झलन्तत्वात्** ("नपुंसकस्य झलचः" इति) **नुम्**।

Eng.—Easy.

मित—। अजरस अस् इति स्थिते जसः शिभावात् परत्वात् जरसि कृते झलन्तत्वात् नुम्। ततः अजरं स् इ इति स्थिते आह—

### ३१७। सान्त महतः संयोगस्य। ६।४।१०॥

दी—। **सान्त संयोगस्य महतश्चयो नकारः तस्योपधाया दीर्घः स्यात् असम्बुद्धौ सर्वनामस्थाने परे। अजरांसि।** (जरसादेशाभावपक्षे) **अजराणि। अमि लुकोपवादम् अम्भावं वाधित्वा परत्वात् जरस्। ततः सन्निपातपरिभाषया न लुक्। अजरसम्—अजरम्। अजरसी—अजरे। अजरांसि—अजराणि। शेषं पुंवत्।**

There is दीर्घ of the उपधा of नकार i. e, of letter imemediately precediug नकार provided, a case-affix entitled सर्वनामस्थान (सम्बोधन being excepted ) follows—and this नकार should of the word महत् and of a conjunct consonant ending in स्। Thus in अजरन् स्+इ, न is of a conjunct consonant ending in स्, so we get दीर्घ of the उपधा of नकार and the form is अजरांसि। In अजर+अम्, जरस् comes in being पर in supercession of अम्भाव here by the rule "अतोम्—"—this अम्भाव being an अपवाद of लुक् due by the rule "स्वमोर्नपुंसकात्"। As अम्भाव comes in connection with अ of अजर, so further लुक् can not come after जरसादेश here, then the सन्निपात maxim will be violated. Thus finally we get अजरसम् and अजरम् &c.

मित—। "सर्वनामस्थाने चासम्बुद्धौ" (६।४।८) इति वर्त्तते। "नोपधायाः" (६।४।७) इति च वर्त्तते। अत्र 'न' इति लुप्तषष्ठीकं पदम्। "ढ्रलोपे पूर्वस्य दीर्घोणः" (६।३।१११) इत्यतः दीर्घाधिकारः अत्रास्ति। सूत्रे—'सान्त' इति षष्ठ्यन्तं पृथक् पदम्। अस्य संयोगे अभेदेन अन्वयः। सान्तः यः संयोगः तस्य इत्यर्थः। सर्वमेतत् 'न' इति षष्ठ्यन्तेन अन्वेति। तदाह—'सान्तसंयोगस्य महतश्च यो नकारः तस्य उपधायाः दीर्घः स्यात्' इत्यादि। एवं अजरन् स्+इ इत्यत्र सान्तसंयोगस्य नकारस्य उपाधादीर्घे सति अजरांसि इति॥ अजर+अम् इत्यत्र "स्वमोर्नपुंसकात्" इति लुकं वाधित्वा "अतोम्" इति अम्भावः प्राप्तः, तं वाधित्वा परत्वात् जरस्। ततः अमाश्रिते जरसि कृते पुनः लुक् न स्यात्, सन्निपातपरिभाषाविरोधात्, तदाह—'अमि :लुकोपवादम् अम्भावं वाधित्वा...न लुक्' इत्यादि। ततः अजरसम्। जरसादेशाभावपक्षे तु अजरम्। अन्यत्र सुगमम्॥ हृदय—उदक—आसन्शब्दाः मुटि ज्ञानवत्। शसादौ विशेषमाह—

**दी—। "पद्दन्नो—" इति हृदयोदकासनानां हृद् उदन् आसन्॥ (ततः शसि) हृन्दि। हृदा—हृद्भ्याम् इत्यादि॥ उदानि। उद्ना—**

**उदभ्याम् इत्यादि ॥ आसानि । आस्ना—आसभ्याम् इत्यादि ॥** (मांसशब्दः ज्ञानवात् । शसादौ मांस् आदेशः । ततः आह—) **मांसि मांसा—मान्भ्याम् इत्यादि । वस्तुतस्तु प्रभृतिग्रहणं प्रकारार्थम् इत्युक्तम् । अत एव भाष्ये "मांस्पचन्याः उखायाः" इत्युदाहृतम्** ( पच्यते अस्यामिति अधिकरणे ल्युटि पचनी । मांसस्य पचनी इति समासे मांस् आदेशे 'मांस्—पचनी' इति ) ।—

( ननु 'मांसपचन्याः' इत्यत्र अन्तःस्थितं लुप्तं ङसम् आश्रित्य मांस् इत्यस्य पदत्वमस्ति इति चेत् । तदा अत्र संयोगान्तस्य अकारस्य लोपोदुर्वार एव । इत्यतोत्तरमाह— ) **अयस्मयादित्वेन** ( "अयस्मयादीनि छन्दसि" इति मांसशब्दस्य अत्र गणे पाठात्, ततः अस्य भत्वात् ) **भत्वात् संयोगलोपो न ।** ( "संयोगांतस्य लोपः" इति विहितोलोपः पदस्यैव वोधाव्यः इति ) ॥

**दी— । "पद्दन्नो—" इत्यत्र हि 'छन्दसि' इत्यनुवर्त्तितं वृत्तौ** (ततः वैदिकप्रक्रियायामेव अस्य सूत्रस्य उपन्यासो युज्यते इति काशिकामतम् । तत् न शोभनम् इत्याह— ) । **तथापि "अपोभि" ( सूत्र ४४२ ) इत्यत्र "मासश्छन्दसि" इति वार्त्तिके "छन्दोग्रहणसामर्थ्यात् लोकेपि क्वचित्" इति कैयटोक्तरीत्या प्रयोगमनुसृत्य पदादयः** (आदेशाः लोके भाषायामपि ) **प्रयोक्तव्या इति वोध्यम् ॥**

मित— । "पद्दन्नो—" इति सूत्रे छन्दोग्रहणानुवृत्तौ अपि लोकेपि पदादयः आदेशाः क्वचित् भवन्ति । कस्मात् एतत् ज्ञायते इत्याह—"अपो भि" इति सूत्रे "मासश्छन्दसि" इति वार्त्तिके—( मास् इत्यस्य तकारः स्यात् भादिप्रत्यये परे छन्दसि इत्यर्थः) छन्दोग्रहणात् ज्ञायते—एतत् सूत्रम् "पद्दन्नो" इति सूत्रम् इत्यर्थः न केवलं छन्दोमात्र विषयम् अपि तु लोकविषयमपि । केवलछन्दोविषये सति अत्र वार्त्तिके पुनश्छन्दोग्रहणं व्यर्थं स्यात् । अतः "लोकेपि क्वचित्" इति कैयटोक्तरीत्या "पद्दन्नो—" इति सूत्रस्य लोकेपि प्रवृत्तिः वोधव्या इति ॥ **इत्यदन्तप्रकरणम् ॥**

Eng.—Easy,

मित— । **श्रियं पातीति श्रीपाः ।** श्रीपाशब्दः विश्वपावत् । अस्य नपुंसके ह्रस्वविधानमाह—

३१८। ह्रस्वो नपुंसके प्रातिपदिकस्य। १।२।४७॥

दी—। क्लीबे प्रातिपदिकस्य अजन्तस्य ह्रस्वः स्यात्। श्रीपं ज्ञानवत्। श्रीपाय। अत्र सन्निपातपरिभाषया "आतोधातोः" इत्याकारलोपो न।

In neuter gender a crude form of the word ending in a vowel becomes short. Thus श्रीपा in the neuter becomes श्रीप & is declined like ज्ञान। In श्रीपाय, the प of श्रीप though of the verb 'पा' should not direct आल्लोप by the rule "आतो धातोः", for यादेश coming in connection with अकारान्त 'श्रीप', here gives दीर्घ by the rule "सुपि च"। Thus there is no cause for आकारांतता of a धातु here so the rule "आतोधातोः" can not apply. If however we say that 'प' of श्रीप though shortened is 'पा' indeed by the maxim "एकदेशविकृतमनन्यवत्", then we are to say that आकारलोप in श्रीपाय by the rule "आतोधातोः" will be stopped by सन्निपातपरिभाषा। How can यादेश come in connection with अदन्तत्व of श्रीप, be the cause of आल्लोप here at the same time ?

मित— 'अत्र सन्निपातपरिभाषया' इत्यादि॥ श्रीपाय इत्यत्र "ह्रस्वो नपुंसके—" इति ह्रस्वे सति ङेर्यादेशे च "सुपिच" इति दीर्घे सति 'श्रीपाय' इति रूपसिद्धिः॥ ननु अत्र ह्रस्वे सत्यपि 'प' इत्यस्य एकदेशविकृतन्यायेन धातुत्वाभङ्गात् दीर्घे कृते आकारान्तत्वाच्च "आतो धातोः" इति आल्लोपः कथं न स्यात् ? इत्यत्रोत्तरमाह—'सन्निपातपरिभाषया आल्लोपः न स्यात्'। प्रकृते च अदन्तत्वमुपजीव्य प्रवृत्तस्य यादेशस्य आल्लोपं प्रति कथं निमित्तत्वं स्यात् इति भावः॥ इदमपि अत्र अवधेयम्—श्रीप इत्यत्र पाधातोः ह्रस्वत्वे तु पुनः दीर्घे सति (श्रीपाय यथा) उपस्थीयमानं पास्वरूपं लाक्षणिकमेव, अतः "आतो धातोः" इत्यत्र अस्य लाक्षणिकस्य ग्रहणमनुचितमेव इत्यास्तां तावत्॥

अधुना वारिशब्दप्रक्रियां दर्शयति—

३१६ । स्वमोर्नपुंसकात् । ७।१।२३ ॥

दी—। क्लीवात् अङ्गात परयोः स्वमोर्लुक् स्यात्। वारि।

सु and अम् elide after neuter bases. Thus वारि+सु gives वारि with सु लोप।

मित—। "षड्भ्यो लुक्" इत्यतः लुक् अनुवर्त्तते। तदाह—"क्लीवात् अङ्गात् परयोः स्वमोर्लुक् स्यात्'। ततः वारि+सु इत्यत्र सुलोपे सति—'वारि' ॥ वारि औ इति स्थिते औकारस्य "नपुंसकाच्च" इति 'शी' आदेशे सति वारि+ई इति स्थिते आह—

३२० । इकोचि विभक्तौ । ७।१।७३ ॥

दी—। इगन्तस्य क्लीवस्य नुमागमः स्यादचि विभक्तौ। वारिणी। वारीणि। "न लुमता—" :इति निषेधस्य अनित्यत्वात् पक्षे सम्बुद्धि-निमित्तो गुणः। हे वारे—हे वारि। "आङोना—" (सूत्र २४४) (इति) वारिणा। "घेर्ङिति" इति गुणे प्राप्ते "वृद्ध्यौत्त्व तृजवद्भाव—गुणेभ्यो नुम् पूर्वविप्रतिषेधेन" (वार्त्तिक)। वारिणे। वारिणः। वारिणोः। "नुम-चिर—" (२५० सूत्रे द्रष्टव्यम्) इति नुट्। "नामि" इति दीर्घः—वारी-णाम्। वारिणि—वारिणोः। हलादौ हरिवत्।

Neuter bases ending in इक् vowel (i. e, ending in इ, उ, ऋ) take नुम् when an अजन्त case affix follows. The वारिन्+ई=वारिणी। Similarly वारिन्+इ=वारीणि (here इ being a सर्वनामस्थान by the rule "शि सर्वनामस्थानम्", उपधा वृद्धि comes in by the rule "सर्वनाम-स्थाने चासंबुद्धौ")। If we take the rule "न लुमताङ्गस्य" as obligatory the सु being elided in संबुद्धि, we do not get गुण by the rule "ह्रस्वस्य गुणः"; if however the rule "न लुमता—" is taken as not obligatory then even सु being elided there is प्रत्यय लक्षण by the rule "प्रत्ययलोपे प्रत्ययलक्षणम्" and the final form is हे वारे by गुण।

[ N. B.—That the rule "न लुमता" is not obligatory is proved from taking अच् here in this rule. If 'अचि' is not taken then even नुम् in हलादिविभक्ति प्रत्यय will elide by the rule 'नलोपः प्रातिपदिकान्तस्य' and in संबुद्धि the affix सु being elided, तन्निमित्तकार्य्य ceases by the rule "न लुमताङ्गस्य"। So even if we do not say 'अचि' in this rule नुम् will come in अजादि विभक्ति प्रत्यय only. Hence in order that 'अचि' be significant, we are to take "न लुमता" as non—obligatory, and thus there being occasion for नुम् in संबुद्धि even though सु elides it is prohibited by saying that नुम् comes only when अजादि प्रत्यय follows. Further भाष्यकार's use of "इह किञ्चित् त्रपो" ( ७।१।८२ ) also proves the अनित्यत्व of the rule "न लुमताङ्गस्य" ]। In वारि+ङे, गुण being due by the rule "घेर्ङिति" it is superceded by नुम् by the Varttika "वृद्धि—औत्व—तृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन" & we get वारिणे। In वारि+आम्, नुम् being पर is due over नुट्, but the Varttika "नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन" ( ante ) replaces नुट् here. Then we get दीर्घ by the rule "नामि"। Thus वारीणाम्। वारिणि in 7th case singular & so on. It is like हरि in हलादि case affixes.

मित—। "इदितो नुम्धातोः" इत्यतः 'नुम', "नपुंसकस्य झलचः" इत्यतः 'नपुंसकस्य' इति चानुवर्त्तते। अङ्गाधिकारः अस्त्येव। ततः आह—'इगन्तस्य क्लीवस्य नुमागमः' इत्यादि। ततः वारि+औ=वारिन्+ई=वारिणी। वारि+शि=वारिन्+इ=वारीणि ('शि' इत्यस्य सर्वनामस्थानत्वात् उपधावृद्धिः)॥ अत्र सूत्रे नुमो हलादिविभक्तौ सत्यां "न लोपः प्रातिपदिकान्तस्य" इति लोपः स्यात्। संबुद्धौ च सोर्लुप्ता लुप्तत्वात् "न लुमताङ्गस्य" इति तन्निमित्तकार्य्यं नास्त्येव इति नुमपि न स्यात्। अतः अस्मिन् सूत्रे 'अचि' इति ग्रहणं व्यर्थम् स्यात्; फलतः अपि तन्नाभात्। ततः केचित् आहुः—अचिग्रहणं यदि सार्थकं स्यात्,

तदा 'न लुमता—" इत्यस्य अनित्यतांम् अवधारय। "न लुमता—" इति निषेधस्य अनित्यत्वे तु संबुद्धौ प्रत्ययलक्षणेन प्राप्तं नुमं वारयितुम् अज्ग्रहणम् अर्थवत् इति भवति अज्ग्रहणं "न लुमता—" इत्यस्य अनित्यत्वे लिङ्गम्" इति बालमनोरमायां स्पष्टम्। "इह किञ्चित् त्रपो" इति भाष्यप्रयोगोप्यत्र लिङ्गम्। ततश्च हे वारे—हे वारि इति द्वयमपि संबुद्धौ साधु; "न लुमता—" इत्यस्य नित्यत्वे अनित्यत्वपक्षे च यथाक्रमं बोध्यम्॥ वारि+टा इत्यत्र "आङो नास्त्रियाम्" इति वारिणा। वारि ङे इत्यत्र "घेर्ङिति" इति गुणेप्राप्ते "वृद्ध्यौत्व—" इति वार्त्तिकं तदेव वारयति। ततः नुमि सति वारिणे [ "गुणवृद्धि—औत्व तृजवद्भावेभ्यो नुम—" इति तु भाष्ये पाठः ]॥ वृद्धेर्नुम यथा—अतिक्रान्तः सखा यैः तानि अतिसखीनि ब्राह्मणकुलानि ( अत्र वृद्धिं बाधित्वा नुमेव )॥ औत्वात् नुम् यथा—कुशक्रोष्टुने अरण्याय ( नात्र क्रोष्टुशब्दस्य तृजवद्भावः )॥ वारि आम इत्यत्र परत्वात् नुटं बाधित्वा नुमि प्राप्ते आह—"नुम अचिर तृजवद्भावेभ्यो नुट पूर्वविप्रतिषेधेन"। ततः नुटि सति "नामि" इति दीर्घे-'वारीणाम्' इति। वारि ङि इत्यत्र औत्वं बाधित्वा नुमि सति वारिणि। अधुना 'अनादि' इति अस्य विशेष्यनिघ्नस्य शब्दस्य भाषितपुंस्कत्वात् विशेषं दर्शयति—

## ३२१। तृतीयादिषु भाषितपुंस्कं पुंवद् गालवस्य। ७।१।७४॥

**टा—। प्रवृत्तिनिमित्तैक्ये—भाषितपुंस्कम् इगन्तं क्लीबं पुंवद्वा स्यात टादौ अचि। अनादये—अनादिने इत्यादि। शेषं वारिवत्। पीलुर्वृक्षस्तत् फलं पीलु, तस्मै पीलुने। अत्र न पुंवत्, प्रवृत्तिनिमित्तभेदात्॥**

इगन्त neuter bases which can be used in all the genders with same connotation are optionally declined like mesculine bases in अजादि case—affixes beginning with टा। Thus we get both अनादये+अनादिने। But when the connotation of a word differs in different gender, it not being a भाषितपुंस्क word, it will be declined as like neuter bases only. Witness पीलुने refering to fruits of

पीलु tree. Here पीलु masc. refers to a tree, whereas पीलु neuter refers to its fruit. So it is not a भाषितपुंस्क, and cannot have optional पुंवद्भाव in 3rd case singular onwards.

मित—। भाषितः पुमान् येन प्रवृत्तिनिमित्तेन तत् भाषितपुंस्कम् प्रवृत्तिनिमित्तम्, तदस्यास्तीति अर्श आद्यच्। शब्दस्वरूपं विशेष्यम्। पुंस्त्वे नपुंसकत्वे च एकप्रवृत्तिनिमित्तमितिभावः। पूर्वसूत्रात् "इकोचि" इति अनुवर्त्तते। 'नपुंसकस्य' इत्यप्यस्ति; तदाह—'प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कम् इगन्तम् क्लीवम्' इत्यादि॥ अन्यत् सुगमम्॥ अस्थि, दधि, सक्थि, अक्षि एतेषां प्रथमाद्वितीययोः वारिवत् रूपाणि। टादौ अचि विभक्तौ विशेषमाह—

**३२२। अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः। ७।१।७५॥**

**दी—। एषाम् अनङ् स्यात् टादौ अचि, स चोदात्तः। (ङित्त्वात् अन्त्यादेशः। दधन् आ इति स्थिते—) "अल्लोपोऽनः" इति दध्ना। दध्ने। दध्नः। दध्नः—दध्नोः—दध्नाम्। ("विभाषा ङिश्योः" इति अल्लोपविकल्पः) दध्नि—दधनि। दध्नोः। शेषं वारिवत्। एवम् अस्थि—सक्थि—अक्षीणि। तदन्तस्यापि अनङ्। अतिदध्ना।**

अनङ् is ordered at the end of अस्थि दधि, सक्थि and अक्षि when टादि vibhakti affixes beginning with अच् follows. And this अनङ् is उदात्त। अनङ् is ordered at the end (ङित्त्वात्)। Thus in दधन्+आ, अकार of अन् elides by the rule "अल्लोपोऽनः" and the form is दध्ना। Similarly दध्ने &c. Then in ङि, अकार elision being optional by the rule "विभाषा ङिश्योः" we get दध्नि दधनि। This अनङ् is ordered even after bases ending in दधि &c. Thus we get अतिदध्ना &c.

मित—। पूर्वसूत्रात् 'तृतीयादिषु' इति 'अचि' इति चानुवर्त्तते। तथाच वृत्तिः 'अनङ् स्यात् टादौ अचि' इत्यादि॥ सूत्रे संहितायां ङमुडभावः सौत्रः॥ अन्यत् सुगमम्॥

सुधीशब्दस्य नपुंसके "ह्रस्वो नपुंसके प्रातिपदिकस्य" इति ह्रस्वत्वे सति वारिवत् रूपम् तदाह—

दी—। **सुधि। सुधिनी—सुधीनि। हे सुधे—हे सुधि। सुधिया—सुधिना** ("तृतीयादिषु भाषितपुंस्कं पुंवत्—" सुधिया इत्यपि)। (एवं) **सुधियाम्—सुधीनाम्॥** (क्लीबे प्रधिशब्दस्य पुंवत्त्वे सति यण् तदाह—) **प्रध्या—प्रधिना॥**

**मधु—मधूनि—मधुनी। हे मधो—हे मधु। एवमम्बादयः।** ("पद्दन्नो—इति सूत्रेण"; **सानुशब्दस्य 'स्नुर्वा'। स्नूनि—सानूनि॥ प्रियक्रोष्टु—प्रियक्रोष्टुनी।** ('शि' इत्यस्य सर्वनामस्थानत्वात् तृजवद्भावे प्राप्ते आह—) **तृजवद्भावात् पूर्वविप्रतिषेधेन नुम्; प्रियक्रोष्टूनि। टादौ पुंवत् पक्षे—प्रियक्रोष्ट्रा—प्रियक्रोष्टुना। प्रियक्रोष्ट्रे—प्रियक्रोष्टवे। अन्यत्र** (पुंवत्त्वाभावपक्षे इत्यर्थः) **तृजवद्भावात् पूर्वविप्रतिषेधेन नुमेव। प्रियक्रोष्टुना। प्रियक्रोष्टुने। "नुमचिर—" इति नुट्।** ("नामि" इति दीर्घः तदाह—) **प्रियक्रोष्टूनाम्॥ इत्युदन्ताः॥** (शोभनं लुनातीति क्विप्। क्लीबे ह्रस्वत्वे सति) **सुलु—सुलुनी—सुलूनि। पुनस्तद्वत्। सुल्वा** (इति पुंवद्भावपक्षे)। (तदभावे) **सुलुना॥ इत्युदन्ताः॥**

**धातृ—धातृणी—धातॄणि। हे धातः—हे धातृ। धात्रा—धातृणा** (पुंवत्त्वे तदभावे च रूपे)। **एवं ज्ञातृ कर्त्रादयः॥ इत्युदन्ताः॥**

Eng.—Easy.

मित—। सुगमा॥ अथ ओदन्तान् निरूपयन् प्रकृष्टा द्यौः यस्य इति बहुव्रीहौ अस्य नपुंसके ह्रस्वत्वे प्राप्ते एषां ह्रस्वत्वाभावात् आह—)

**३२३। एच इग्घ्रस्वादेशे। १।१।४८॥**

दी—। **आदिश्यमानेषु ह्रस्वेषु एचः इगेव स्यात्। प्रद्यु—प्रद्युनी—प्रद्यूनि। प्रद्युना इत्यादि। इह न पुंवत्। यदिगन्तं 'प्रद्यु' इति तस्य भाषितपुंस्कत्वाभावात्। एवमग्रेपि॥ इत्योदन्ताः॥**

When in neuter &c, ह्रस्व ist o be the order for ए ओ ऐ & औ, then उ for ओ+औ and इ for ए and ऐ must be ordered. Thus प्रकृष्टा द्यौः यस्य becomes प्रद्यु in neuter with उ substituted for ओ। In 3rd case singular we get प्रद्युना & no optional पुंवत्व by the rule "तृतीयादिषु भाषितपुंस्कं पुंवत्—"। For the इगन्त word प्रद्यु here is different from original प्रद्यो in the masculine—So we are to understand in cases of ( सुनु ) औदन्त, & ( प्ररि ) ऐदन्त bases.

मित—। सुगमा॥ प्रकृष्टा धीः अस्य इति विग्रहे क्लीवे ह्रस्वादेशे 'प्ररि' इति प्रातिपदिकम्। अस्य रूपाण्याह—

**दी—। प्ररि—प्ररिणी—प्ररोणि। प्ररिणा। एकदेशविकृतस्य अनन्यत्वात् "रायो हलि" इत्यात्वम्। प्राभ्याम्—प्राभिः। "नुमचिर—" इति नुटि आत्वे ( च ) प्राणाम् इति माधवः। वस्तुतस्तु सन्निपातपरिभाषया नुड्यात्वं न** ( "ह्रस्वान्तत्वमुपजीव्य प्रवृत्तस्य नुटः तद्विघातकमात्वं प्रति निमित्तत्वासम्भवात् इति भावः। ननु तर्हि ह्रस्वान्तत्वमुपजीव्य प्रवृत्तस्य नुटः तद्विघातकं "नामि" इति दीर्घं प्रति कथं निमित्तम् इत्यत: आह"— ) **"नामि" इति दीर्घस्त्वारम्भसामर्थ्यात् सन्निपातपरिभाषां बाधते इत्युक्तम्** ( ? प्राक् )। **प्ररीणाम्। इत्यैदन्ताः॥** ( शोभना नौर्यस्य तत् इति क्लीवे ह्रस्वादेशे सुनु इति प्रातिपदिकम्। :तस्य रूपं यथा— ) **सुनु—सुनुनी—सुनूनि। सुनुना। सुनुने। इत्यादि। इत्यौदन्ताः॥**

इत्यजन्तनपुंसकलिङ्गप्रकरणम्॥

---

# अथ हलन्तपुंलिङ्गप्रकरणम् ।



( आदौ हकारान्तं निरूपयितुमाह— )

३२४ । हो ढः । ८।२।३१ ॥

दी—। हस्य ढः स्याज् झलि पदान्ते च। "हल्ङ्याप्—" इति सुलोपः। पदान्तत्वात् हस्य ढः। जश्त्वचर्त्वे। लिट्—लिड्, लिहौ—लिहः। लिहम्—लिहौ—लिहः। लिहा—लिड्भ्याम् इत्यादि। लिट्सु—लिट्त्सु।

ह at the end becomes ढ when झल् letter follows or, when at the end of a पद। Thus in लिह् सु, the सु (स्) elides by the rule "हल्ङ्याप्—"। Then in लिह्, ह् being at the end of a पद becomes ढ। Then we get जश्त्व in place of ढ by the rule "झलां जशोऽन्ते", and चर्त्व also optionally by the rule "वावसाने"। Thus we get लिट् and लिड्। लिह्+औ=लिहौ &c so on. In लिट्सु we have first ढत्व by this rule, then जश्त्व & then चर्त्व। Here सु does not become षु owing to the prohibition "न पदान्तात् टोरनाम्" (ante). In लिड्सु, the augment धुट् is optional by the rule "डः सि धुट्"। Thus लिट् धुसु=लिट्त्सु by चर्त्व। Here also टुत्व does not come owing to prohibition in the rule "न पदान्तात्—" already referred to.

मित—। 'हः' इति षष्ठ्यन्तम्। "झलो झलि" (८।२।२६) इत्यतः 'झलि' अनुवर्तते। "स्कोः संयोगाद्योरन्ते च" (८।२।२९) इत्यतः 'अन्ते' इत्यनुवर्तते। तदाह—'हस्य ढः स्यात् झलि पदान्ते च'। लेढि इति क्विपि 'लिह' इति प्रातिपदि-

कम्। अस्य सौ "हल्ङ्याप्—" इति सुलोपः। ततः लिह् इत्यस्य पदान्तत्वात् ढः—लिढ् इति। ततः "झलां जशोऽन्ते" इति 'लिड्' इति। "वावसाने" (८।४।५६) इति चर्त्वविकल्पे 'लिट्' इति॥ लिट्सु' इति धुडभावे ढत्वे ततः जश्त्वे चर्त्वे च रूपसिद्धिः। लिड्सु इत्यत्र "डः सिधुट्" इति धुट्पक्षे लिड्धसु। ततः चर्त्वे सति ~~लिड्त्सु~~। "न पदान्तात् टोरनाम्" इति ष्टुत्वनिषेधात् षत्वम् न भवति॥ झलि परे हकारस्य ढत्वं यथा 'लीढ़ि' इत्यत्र॥

दुहधातोः क्विपि दुह् इति प्रातिपदिकम्। अस्यविशेषं वक्ष्यन् आह—

## ३२५। दादेर्धातोर्घः। ८।२।३२॥

**दी—। उपदेशे दादेर्धातोर्हस्य घः स्यात् झलि पदान्ते च। उपदेशे किम्? 'अधोक्' इत्यत्र यथा स्यात्। दामलिहमात्मनः इच्छति दामलिह्यति। ततः क्विपि दामलिट्। अत्र (घत्वं) मा भूत्।**

A root beginning with द in its enunciation changes its ह into घ when झल letter follows or when at the end of a पद। Why do we say उपदेशे? उपदेश is said in the Vritti so that the change of ह into घ may be in अधोक् (here दुह being दादिधातु in its enuniacation), & that ह must not change into घ in the case of the base दामलिह् where ह is of the root लिह & not of any दादिधातु in Panini धातु पाठ।

Thus in दुह्+सु (सु elides as in the case of लिह्) and then ह is to change to घ by this rule and we look forward—

मित—। अनुवृत्तिरत्र पूर्वसूत्रवत्॥ दामलिहमात्मनः इच्छति इति दामलिह्यति। ततः क्विपि दामलिट्। अत्र उपदेशे दादिधातुत्वाभावात् घत्वं मा भूत् इत्याह 'उपदेशे' इति॥ दुह+लङ् तिप् अधोक् इत्यत्र 'दुह' इत्यस्य दादिधातुत्वात् हस्य घः। 'हलङ्याप्—' इति तिलोपः "एकाचो बशोभष्" इति अधोघ्, जश्त्वचर्त्वे। अधोक्—अधोग। अत्र दादिधातुत्वात् हस्य घः स्यादेव॥

हकारस्य घत्वम् यथा—दुग्धम् ॥ दुह्+सु इति स्थिते "हल्ङ्याप्—" इति सुलोपे दुह् इत्यत्र अनेन सूत्रेण घत्वे दुघ् इति स्थिते आह—

**३२६ । एकाचो बशो भष् झषन्तस्य स्ध्वोः । ८।२।३१ ॥**

दी—। धातोरवयवो य एकाच् झषन्तस्तदवयवस्य बशः स्थाने भष् स्यात् सकारे ध्वशब्दे पदान्ते च । "एकाचो धातोः" इति सामानाधिकरण्येनान्वये त्विह न स्यात् । गर्दभमाचष्टे गर्दभयति । ततः क्विप् ; णिलोपः—गर्धप् । 'झलि' इति निवृत्तम् । स्-ध्वोर्ग्रहणसामर्थ्यात् । तेनेह न—दुग्धम् दोग्धा । व्यपदेशिवद्भावेन धात्वयवत्वात् भष्भावः । जश्त्व—चर्त्वे । धुक्—धुग् । दुहौ—दुहः । जश्त्वचर्त्वे—धुत्सु ।

Letter determined by भष् प्रत्याहार; ( i. e, भ, घ, ढ and ध ) is the substitute of letter signified by बश् प्रत्याहार ( i. e, letters ब, ग, ड and द ) when it is a part of a verbal root—that part having one vowel and when that part end in either झ or भ or घ or ढ or ध, provided स् or the verbal affix ध्व follows or when it is at the end of a पद । The words "एकाच: धातो:" having same विभक्ति are not related by way of adjective & noun in the sutra ; if the meaning be "of a verb of one vowel", भष् will not come in place of बश् in the following case, ( for in the following case the verb is of more than one word)—गर्दभमाचष्टे इति क्विपि गर्धप् इति प्रातिपदिकम् । Then गर्दभ्+स=गर्धप् ( द becoming ध by this rule ), for दभ् the verbal portion of one vowel endes in भ् ( झषन्त ) and is एकाच् । For the fornation of गर्धप् &c the explanation here in the vritti is धातोरवयवो यएकाच् &c. Here the अनुवृत्ति of झलि is gone. This is inferred from the fact that स्+ध्व, are separately mentioned ere. Had there been अनुवृत्ति of झल् then their separate mention

becomes unnceassary. So in case of दुग्धम् & दोग्धा, though झल् follows there is no change of द into ध ( for here neither स् or ध्व follows ).

Now in दुह+क्विप्=दुह्, there being घ by the rule "दादेर्धातोर्घः" the form is दुघ् । Though this is a धातु still it not being a धात्ववयव how can द here become ध by भष्भाव by this rule ? And, the व्याख्या in vritti here is धात्ववयवो य एकाच् &c. So the author here says—recogintion of धात्ववयवत्व with regerd to a धातु is indirectly taken no doubt. Hence in case of दुघ् we have भषभाव and the form is धुघ् । Then by जश्त्व and चर्त्व ( see under "होढः" ) the froms are धुक्—धुग् । In धक्षु we have first चर्त्व by the rule "आदेशप्रत्यययोः," and then चर्त्व by the rule "खरि च" ।

मित—। स् च ध्व् च स्ध्वौ । तयोः । वश् प्रत्याहारः । स्थानषष्ठी । पूर्वसूत्रात् 'धातोः' इत्यनुवर्त्तते । 'एकाचः' इत्यवयवषष्ठी, न तु धातोः इत्यनेन सामानाधिकरण्येन अन्वयः । भष् झष इत्यपि प्रत्याहारौ । झषन्तस्य शब्दस्य इत्यर्थः । पदान्ते इत्यधिकृतमस्त्येव पूर्ववत् । तदाह—'धातोरवयवो य एकाच् झषन्तःतदवयवस्य बशः स्थाने इत्यादि । ननु 'एकाचः' इत्ययं 'धातोः' इत्यनेन सामानाधिकरण्येन अन्वये सति कः दोषः स्यात् ? इत्यत्रोत्तरमाह—'एकाचः धातोः' इति सामानाधिकरण्येन अन्वये गर्दभमाचष्टे इति क्विपि गर्दभ् इति प्रातिपदिकस्य सौ, 'दभ्' इत्यंशस्य दस्थाने धः न स्यात् । यतः गर्दभ् इति अनेकाच् एव । अतः "धात्ववयवो च एकाच" इति व्याख्यानम् ॥ अत्र सूत्रे 'झलि' इति निवृत्तम् स्ध्वोः ग्रहणात् ज्ञापकात् । यदि 'झलि' इत्यनुवर्त्तनमस्त्येव तदा 'स्' इति "ध्व्' इति अनयोः झल्त्वात् पृथक् ग्रहणं व्यर्थं स्यात् । अतः आह—'झलि' इति निवृत्तम् । स्ध्वोः ग्रहणासामर्थ्यात्" । 'झलि' इति अनुवर्त्तनम् नास्ति ; ततः 'दुग्धम्' ( दुह+क्त ) इत्यादौ झलि परे सत्यपिन भष्भावः ॥ ननु सूत्रव्याख्याने 'धात्ववयवो य एकाच' इत्युक्तम्, किन्तु प्रकृते 'दुह' इत्यस्य "दादेर्धातोर्घः" इति घत्वे सति 'दुघ्' इत्यस्य धातुत्वे सति धात्ववयवत्वाभावात् कथं दकारस्य

भष्भावेन धकारः स्यात्? अत्र समाधानमाह—धातौ धात्ववयवत्वव्यवहारः 'व्यपदेशिवत्' मुख्यवत्, गौणः एव [ व्यपदेशः मुख्यव्यवहारः। स अस्यास्तीति व्यपदेशी। तेन तुल्यम् इति व्यपदेशिवत्। मुख्यवत् इत्यर्थः ]। ततश्च धातोरेव धात्ववयवत्वव्यवहारम् पुरस्कृत्य अत्र भषभावः स्यादेव ततः धुघ् इति स्थिते जश्त्वेन, चर्त्वेन च—धुक्—धुग" इति सिद्धौ। धुघ् सु इत्यत्र जश्त्वेन गकारे सति "खरि च" इति चर्त्वस्यासिद्धत्वात् प्रथमं "आदेशप्रत्यययोः" इति षत्वे सति ततः चर्त्वम्। एवम् धुक्षु इति रूपसिद्धिः॥

'द्रुह्' इत्यस्य "दादेर्धातोः—" इत्यनेन नित्यं घत्वे प्राप्ते, 'स्नुह्' इत्यादीनाम् च घत्वे अप्राप्ते आह—

## ३२७। वा द्रुहमुहष्णुहष्णिहाम्। ८।२।३३॥

**दी—। एषां हस्य वा घः स्यात् झलि पदान्ते च। पक्षे ("होढः")। ध्रुक्—ध्रुग्—ध्रुट्—ध्रुड्। द्रुहौ—द्रुहः। ध्रुग्भ्याम्—ध्रुड्भ्याम्। ध्रुक्षु—ध्रुट्सु—ध्रुट्त्सु। एवं मुहष्णुहष्णिहाम्।**

Of these four words द्रुह्, मुह्, ष्णुह्+ष्णिह्, ह is optionally changed into घ when झल् follows or when at the end of a पद; optionally ढ also comes by the rule "होढः"। Thus घत्वपक्षे—ध्रुक्—ध्रुग्; and ढत्वपक्षे—ध्रुट्—ध्रुड् &c, as in the case of लिह्। Similarly मुह्, स्नुह्+स्निह् are declined.

मित—। सुगमा॥ 'स्नुह' इति षान्तः पाठः। व्यवहारकाले तु "धात्वादेः षः सः" (६।१।६४) इति 'षस्य' सः स्यात्। स्नुह्यतीति स्नुह्। इत्यादि। एषामपि द्रुहवत् रूपाणि॥ 'मुह—स्नुह' इत्यादीनाम् भष्भावः न स्यात्, असम्भवात्॥ विश्वं वहतीति "वहश्च" इति ण्विः। ततः "अतः उपधायाः" इति वृद्धौ 'विश्ववाह्' इति प्रातिपदिकम्। ततः स्वादिसर्वनामस्थाने लिहवत् रूपाणि। शसादौ अचि तु सम्प्रसारणं वक्ष्यन् उपन्यस्यति—

३२८ । इग्यणः सम्प्रसारणम् । १।१।४५ ॥

दी— । यणः स्थाने प्रयुज्यमानो य इक् स सम्प्रसारणसंज्ञः स्यात् ।

The substitution of इक् letter in place of यण् letter is technically known as सम्प्रसारण ।

मित— । सुगमा । आन्तरतम्यात् यस्य इकारः, वस्य उकारः, रेफस्य ऋकारः लस्य स्थाने लृकारः सम्प्रसारणसंज्ञः ज्ञेयः ॥

३२९ । वाहः ऊठ् । ६।४।१३२ ॥

दी— । भस्य वाहः सम्प्रसारणम् ऊठ् स्यात् ।

The सम्प्रसारण of वाह् which is a "भ" is ऊठ् ; the result here however is—ऊठ् a सम्प्रसारण is to come in place of यण् in वाह ; this is inferred from the अनुवृत्ति of सम्प्रसारण here.

मित— । सुगमा ॥ 'सम्प्रसारणम्' इत्यनुवृत्तौ 'वाहो' वस्य सम्प्रसारणम् ऊठ् इति ज्ञायते । न तु "अलोऽन्त्यस्य" इत्यनेन हकारस्य ऊठ् स्यात् । एवं विश्ववाह् + शस् ( अस् ) इत्यत्र विश्ववाह् इत्यस्य भत्वात्, 'वाह' इत्यस्य वकारस्य सम्प्रसारणम् ऊठ् स्यात् । ततः विश्व ऊ आह् + अस् इति स्थिते आह—

३३० । सम्प्रसारणाच्च । ६।१।१०८ ॥

दी— । सम्प्रसारणात् अचि पूर्वरूपमेकादेशः स्यात् । "एत्येधत्यूठसु" ( सूत्र ७३ )—( इति वृद्धिः ) । विश्वौहः । विश्वौहा इत्यादि ॥ 'छन्दस्येव णिवः" इति पक्षे णिजन्तात् विच् ।

When अच् follows after a सम्प्रसारण, then पूर्वरूप is the substitute for both. Thus विश्व ऊ आह् + अस् becomes by पूर्वरूप एकादेश विश्व ऊह् + अस् । Then by the rule "एत्येधत्यूठसु" वृद्धि comes in and the form is विश्वौह्+अस्=विश्वौहः । Some say that the rule "वहश्च" enjoins ण्वि after वह् in veda ( छन्दस् ) only. In that case how

can विश्ववाह् be applied in classical language? On this Bhattoji says, in that case derive विश्ववाह् as 'विश्वं वाहयतीति विश्व+वह+णिच्+विच्=विश्ववाह्। And this विश्ववाह being applicable in भाषा, we give here the declension of विश्ववाह as above.

मित—। सुगमा॥ ननु "वहश्च" इति सूत्रे केचित् "छन्दसि सहः" इति सूत्रात् 'छन्दसि' अनुवर्त्त्य 'छन्दस्येव वहेः ण्विः इत्याहुः। एतत् पक्षे तु भाषायां विश्ववाह् शब्दस्य प्रयोगश्चिन्त्यः—इति पूर्वपक्षमाशङ्क्य आह—"छन्दस्येव ण्विः" इति पक्षे णिजन्तात् विच्॥ विश्वं वाहयतीति विश्व+वाह+णिच+विच्—"अन्येभ्योपि दृश्यते" इति विच्+विश्व+वाह+विच् ("नेड्वशिकृति" इति इडभावे णिलोपः)=विश्ववाह् ('विच्' इत्यस्य लोपः)। एवमस्य लोकप्रयोगार्हत्वात् रूपप्रदर्शनम् युक्तम्॥ अनः शकटं वहतीति अनसिवहेः क्विप् ("अनसोड्श्च" इति क्विप् सम्बन्डश्च—ततः सम्प्रसारणे पूर्वरूपे सति) 'अनुडुह्' इति प्रातिपदिकम्। अस्य विशेषमाह—

## ३३१। चतुरनडुहोरामुदात्तः। ७।१।९८॥

दी—। अनयोः आम् स्यात् सर्वनामस्थाने परे। स च उदात्तः।

आम् is the substitute for the bases चतुर् & अनडुह् when a सर्वनामस्थान affix follows. आम् being मित् comes after the final vowel by the rule "मिदचोन्त्यात् परः"। Thus we get अनडु आह्+स्=अनड्वाह+स् and we look forward.

मित—। सुगमा। 'आमो' अत्र मित्त्वात् अन्त्यात् अचः परः स्यात्। एवम् 'अनडु आह+स्=अनड्वाह+स् इति जाते—

## ३३२। सावनडुहः। ७।१।८२॥

दी—। अस्य नुम् स्यात् सौपरे। 'आत्' इत्यधिकारात् अवर्णात् परोयं नुम्। अतो विशेषविहितेनापि नुमा आम् न बाध्यते। आमा च नुम् न बाध्यते। सोर्लोपः। नुम् विधिसामर्थ्यात् "वसुस्रंसु—" (सूत्र ३३४) इति दत्वं न। संयोगान्तलोपस्यासिद्धत्वात् नलोपो न। अनड्वान्।

नुम् is ordered at the end of अनडुह् when सु ( स् ) follows. This नुम् is to come after the last अवर्ण ( i. e, after आम् comes in ) for there is अनुवृत्ति and jurisdiction of आत् ( from the rule "आत् शीनद्योर्नुम्" ( ७।१।८० ) in this rule. Thus though आम् is general and नुम् is special ( विशेष विहित ) ; still नुम् does not bar आम् ; neither आम् bars नुम् ( but both come in order i. e, first आम् giving अनड्वाह्+सु=अनड्वान्ह्+स् ) । Then सु ( स् ) elides by the rule "हल्ङ्याब्भ्यो—" । Here we get अनड्वान्ह् । Now ह् at the end elides by संयोगान्तलोपः । This being treated as असिद्ध, further नलोपः by the rule "नलोपः प्रातिपदिकान्तस्य" does not take place and we get—अनड्वान्।

Again a further question arises that after सुलोप and हलोप by संयोगान्तलोपः, why should there not be द in place of final न here by the rule "वसस्रंसुध्वंसु—अनडुहां दः" (rule 334 infra)—the answer is, that final न ( in अनड्वान् ) is not replaced by द owing to the very fact that नुम् is ordered in स् ; for if दत्व is to come at all at the end by replacing न, then नुम् (न) should better be not enjoined. In अनड्वान्, if द comes & the form is to be अनड्वाद्, then rather do not enjoin नुम् here and still then in अनड्वाह् we by दत्व will get अनड्वाद् । The very fact that नुम् is enjoined here suggests that further दत्व is not to come here. So the final result is as above i. e, अनड्वान् ।

मित— । अनडुह्शब्दस्य नुम् स्यात् सौपरे । अत्र "आत्शीनद्योर्नुम्" ( ७।१।८० ) इत्यतः 'आत्' इत्यधिकारात् अनुवर्त्तनात् इत्यर्थः अवर्णात् परोयं नुम् विधीयते । ततश्च आमि कृते अवर्णे सति नुम् विधीयते इत्यर्थं लभ्यते । अतः आमनोः सत्यपि सामान्यविशेषत्वे विषयभेदात् आमो न नुमा ( विशेषभूतेन नुमा इत्यर्थः)

बाधः। तेन आमि कृते अनड्वाह् इत्यं तस्य नुमि सति ततः "हल्ङ्याब्भ्यो—" इति सुलोपे संयोगान्त—हकारलोपे च सति अनड्वान् इति रूपसिद्धिः। अत्र पुनः "नलोपः प्रातिपदिकान्तस्य" ( ८।२।७ ) इति नलोपं प्रति असिद्धः संयोगान्तलोपः, तस्य ८।२।२७ सूत्रघटितत्वात्। अतश्च संयोगान्तहकारलोपे सति पुनः नलोपो न स्यात्॥ ननु अनड्वान्ह्+सु इत्यत्र सुलोपे संयोगान्तहकारलोपे च सति अनड्वान् इत्यत्र न-कारस्य पदान्तत्वात् कथं "वसुस्रंसुध्वंसु—अनडुहां दः" ( सूत्र ३३४ ) इति दकारः न स्यात्? अत्र आह—'नुम् विधिसामर्थ्यात् "वसुस्रंसु—" इति दत्वं न स्यात्। यदि चात्र नुमो नस्य दत्वं स्यात्, तदा अनड्वाह् इत्यत्र नमभावेपि हस्य दत्वेनैव अनड्वाह् इति रूपसिद्धेः नुमविधिः अनर्थकः स्यात्। ततः यदि नुमविधिः सार्थकः स्यात्—तदा नुमो नकारस्य दत्वं न स्यात् इति नमविधिसामर्थ्यादेव विज्ञायते॥ संबुद्धौ हे अनडुह् स् इति स्थिते "चतुरनडुहोराम्"—इति आमागमे प्राप्ते आह—

## ३३१। अम् सम्बुद्धौ। ७।१।९९॥

**दी—। चतुरनडुहोरम् स्यात् सम्बुद्धौ। आमोपवादः। हे अनड्वन्। अनड्वाहौ—अनड्वाहः। ( शसि ) अनडुहः। अनडुहा॥**

अम् is the augment at the end of the bases चतुर् and अनडुह् when संबुद्धि follows. This अम् bars आम्। Thus we get हे अनड्वन्। In शस् which is not a सर्वनामस्थान affix we do not get आम् and the form is अनडुहः। Similarly अनडुहा &c. In अनडुह्+भ्याम्, अनडुह् is a पद by the rule "स्वादिषु असर्वनामस्थाने" and we look forward—

मित—। 'चतुरनडुहोः' इति "चतुरनडुहोराम् उदात्तः" इत्यतः अनुवर्त्तते। फलितञ्च यथा—चतुरनडुहोः अम् स्यात् संबुद्धौ। अयमामो अपवादभूतः, किन्तु अत्र अमि कृते पूर्वसूत्रेण नुम् स्यात्। ततः हे अनड्वन् इति। अनड्वन् इति प्रातिपदिकान्त नलोपं प्रति असिद्धः संयोगान्तलोपः॥ शसि अनडुहः; अत्र शसः सर्वनामस्थानत्वाभावात् आम् न स्यात्॥ अनडुह्+भ्याम् इति स्थिते आह—

३३४। वसुस्रंसुध्वंस्वनडुहां दः। ८।२।७२॥

दी—। सान्तवस्वन्तस्य स्रंसादेश्च दः स्यात् पदान्ते। अनडुद्भ्याम् इत्यादि। सान्तेति किम्?—विद्वान्। पदान्तेति किम्—स्रस्तम्। ध्वस्तम्।

Of bases ending in वसुप्रत्यय and having स् at the end, o the roots स्रंसु and ध्वसु, and of the base अनडुह्, द is ordered when at the end of a पद। Thus अनडुह्+भ्याम्=अनडुद्भ्याम् & so on. Why do we say 'सान्त—' in the वृत्ति?—Witness विद्वान् (with नुम् after विद्वन् in सु), where विद्वान् though ending in वसुप्रत्यय is not सान्त but is नान्त, so here द does not come. (In विद्वस्+भ्याम् however, विद्वस् is सान्त and we get द giving विद्वद्भ्याम्); why again do we say पदान्त in the वृत्ति?—Witness the क्त प्रत्ययान्त words स्रस्तम् and ध्वस्तम्, here स्रंसु &c being not पद, द does not come in.

मित—। वसु, इत्यनेन वसुप्रत्ययः गृह्यते। तदन्तविधिश्च। 'स्रंसुध्वंसु अवस्रंसने' धातू एतौ। "ससजुषोरुः" (८।२।६६) इत्यतः 'स इति लुप्तषष्ठीकम् अनुवर्तते। तच्च वसोर्विशेषणम्। 'स्रंसुध्वंसु' इत्यत्र सकारस्य अव्यभिचारात्, अनडुहशब्दे च असम्भावात् 'स' इत्यनेन वसुरेव विशेष्यते। 'पदस्य' इत्यधिकृतमस्त्येव। फलितमाह—'सान्त—वस्वन्तस्य स्रंसादेश्च दः स्यात् पदान्ते'। "अलोऽन्त्यस्य" इत्यनेन अन्त्यस्यैव दः स्यात्। ततः अनडुह्+भ्याम् इत्यत्र "स्वादिष्वसर्वनामस्थाने" इति अनडुहशब्दस्य पदत्वात् दत्वे सति अनडुद्भ्याम् इत्यादि॥ वृत्तौ 'सान्त—' ग्रहणम् किमर्थम्? विद्वन्+सु (स्) इत्यत्र नुमि सति विद्वन्+स् इति स्थिते सुलोपे उपधादीर्घे च विद्वान् इति रूपसिद्धिः। यद्यप्ययं वसुप्रत्ययान्तशब्दः, अत्र पदान्तश्च, तथापि अस्य सान्तत्वाभावात् दत्वं न स्यात्॥ पदान्ते इति कथमुक्तम्? स्रस्तम् इत्यादि यथा स्यात्। अत्र क्तप्रत्ययान्तम्। स्रंस+क्त इत्यत्र 'स्रंस' इत्यस्य पदत्वाभावात् न दत्वम्॥ विद्वंसौ—विद्वांसः, अनडुहौ इत्यादयोपि अत्र प्रत्युदाहार्याः॥

अधुना तुरासाह्शब्दे सौ "हल्ङ्यादि—" इति सलोपे हस्य ढले च कृते विशेषं वक्ष्यति—

**३३५ । सहेः षाडः सः । ८।३।५६ ॥**

**दी—। साड्रूपस्य सहेः सस्य मूर्धन्यादेशः स्यात्। तुराषाट्—तुराषाड् । तुरासाहौ—तुरासाहः। तुराषाड्भ्याम् इत्यादि ॥ तुरं सहते इत्यर्थे "छन्दसि सहः" इति ण्विः। लोके तु साहयतेः क्विप् । "अन्येषामपि दृश्यते" ( ६।३।१३७ ) इति पूर्वपदस्य दीर्घः। इति हान्ताः ॥**

The स of सह, when it is in the form of साड् becomes cerebral. Thus in तुरासाह्+स=तुरासाड्=तुराषाड् ( by cerebral ). By चर्त्वं we get तुराषाट् । Similarly तुराषाड्भ्याम् &c. The derivation of तुरासाह् is तुरं सहते इति तुर+सह+ण्वि=तुरासाह् ( with उपधावृद्धि ) । In classical language however the derivation is तुरं साहयति इति तुर+साहि+क्विप्=तुरासाह् with पूर्वपददीर्घ by the rule "अन्येषामपि दृश्यते" ।

N. B.—Remenber that the rule "नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ( ६।३।११६ ) does not apply here to give दीर्घ in 'तुर', for the rule enjoins दीर्घ of the पूर्वपद of सह and not of साहि ।

मित—। अथ तुरासाह्शब्दस्य व्युत्पत्तिं दर्शयन् आह—"तुरं सहते इत्यर्थे "छन्दसि सहः" इति ण्विः । ननु एवं व्युत्पन्नस्य तुरासाह्शब्दस्य छन्दोमात्रविषयत्वात् कथमस्य भाषायां प्रयोगः ? तदाह—"लोके तु साहयतेः क्विप्" इत्यादि ॥ भाषायाम्— तुरं साहयति इति सहेः णिचि क्विप् । "अन्येषामपि दृश्यते" इति पूर्वपदस्य 'तुरशब्दस्य' इत्यर्थः, दीर्घः इति अत्र भट्टोजेर्मतम् । तत्र ' नहिवृतिवृषिव्यधिरुचि सहितनिषु क्वौ" ( ६।३।११६ ) इति सहेरेव पूर्वपदस्यदीर्घः विहितो न तु साहेरपि । अतएव "अन्येषामपि—" इत्याह नागेशः । एवञ्च "सहेः साडः सः" इति [illegible] षत्वं न [illegible] पि इति षत्वं नात्र प्राप्नोति । वस्तुतस्तु "छान्दसः

सहेर्खिः" न तु साहेः क्विप्। तेन "तुरासाहं पुरोधाय', 'पृतनाषाड्भियो योद्धम्' "पुरुहूतः पृतनाषाड्" इति भाषायां प्रयोगाः चिन्त्याः" इति हरदत्तोक्तमेव युक्तं प्रतिभाति इत्यास्ताम् तावत्।

स्त्रीलिङ्गदिव्शब्दः अस्ति। सुशोभना द्यौः यस्य इति बहुव्रीहौ पुंसि वकारान्तः सुदिव्शब्दः जातः। अस्य रूपं वक्ष्यन् आह—

## ३३६। दिव औत्। ७।१।८४॥

**दी—। दिव् इति प्रातिपदिकस्य औत् स्यात् सौ परे। अल्विधित्वेन स्थानिवत्त्वाभावात् "हल्ङ्याप्—" इति सुलोपो न। सुद्यौः—सुदिवौ—सुदिवः। सुदिवम्—सुदिवौ—सुदिवः।**

Of the crude word ( प्रातिपदिक ) दिव्, औत् is ordered at the end when सु follows. This औत् being अलाश्रयविधि is not स्थानिवत् by the rule "स्थानिवदादेशोऽनल्विधौ", & so सु ( स् ) here does not elide by the rule "हल्ङ्याप्—"। And we get सुद्यौः।

मित—'सावनडुहः" इति सूत्रात् 'सौ' अनुवर्त्तते। 'दिवः' इति षष्ठ्यन्तम्। ननु "दिवु क्रीड़ायाम्" इत्यस्यात्र ग्रहणं स्यात् न वा? इति सन्देहे सति आह—' 'दिव् इति प्रातिपदिकस्य'। प्रातिपदिकग्रहणे किं मानम्? तदाह—"निरनुबन्धकग्रहणे न सानुबन्धकस्य" इति न्यायात् अनुबन्धरहितः 'दिवः' एव ग्रहणम्। न तु अनुबन्धयुक्तस्य 'दिवु' इति धातोः। ततः आह—'दिव् इति प्रातिपदिकस्य'। 'औत्' इत्यस्य 'व्' इति अलाश्रयविधित्वात् न स्थानिवत्त्वमस्ति। ततः 'हल्ङ्यादि—' इति सुलोपो न। ततः सुद्यौः इति॥ सुदिव्+भ्याम् इति स्थिते आह—

## ३३७। दिव उत्। ६।१।१३१॥

**दी—। दिवः अन्तादेशः उकारः स्यात् पदान्ते।** ( वकारस्य उत्वे सति सुदि+उ='सुदु'। इकारस्यात्र यण्। तदाह—) **सुद्युभ्याम्। सुद्युभिः इत्यादि।**

उकार is ordered at the end of the base दिव् when at the end of a पद—( i. e, दिव् ) being at the end of a पद changes its व् into उ and we get सुदि उ+भ्याम्=सुद्यु+भ्याम् ( by यणादेश for "इ and उ" = सुद्युभ्याम् । Similarly we get सुद्युभिः &c.

मित— । सुगमा ॥ अधुना नित्य वहुवचनान्तस्य चतुर् शब्दस्य रूपाण्याह—

दी— । **चत्वारः** ( "चतुर नडु होः—" इति आम् । जसः सर्वनामस्थानत्वात् आम् । **चतुरः** ( शसः असर्वनामस्थानत्वात् न आम् ) । **चतुर्भिः** । **चतुर्भ्यः** । **चतुर्भ्यः** ।

मित— । सुगमा ॥ चतुर्+आम इति स्थिते "ह्रस्वनद्यापो नुट्" इति ह्रस्वान्ताभावात् नुटि अप्राप्ते आह—

**३३८ । षट्चतुर्भ्यश्च । ७।१।५५ ॥**

दी— । **षट्संज्ञकेभ्यः चतुरश्च परस्य आमो नुडागमः स्यात् ।** ( "रषाभ्याम्—" इति ) **णत्वम् ।** ( "अचो रहाभ्याम् द्वे च" इति णकारस्य ) **द्वित्वम्** । **चतुर्ण्णाम्** ।

आम् after words technically known as षटसंज्ञक ( by the rules "ष्णान्ता षट्" and "डतिच" &c. ) and after the base चतुर्, takes the augment नुट् । Thus चतुर्+आम्=चतुर्+नाम्=चतुर्णाम् । णत्व here coming by the rule "रषाभ्याम्—" । Then द्वित्व here of ण is optional by the rule "अचो रहाभ्यां" । Thus both चतुर्णाम् and चतुर्ण्णाम् ।

मित— । 'षट्' इत्यनेन "ष्णान्ता षट्" इति "डतिच" इति षटसंज्ञकाः शब्दाः गृह्यन्ते, न तु केवलः षटशब्दः ; तथाचवृत्तिः—'षठसंज्ञकेभ्यः' इति । अत्र "आमि सर्वनाम्नः सुट्" इत्यतः 'आमः' इति षष्ठ्यन्तम् अनुवर्त्तते ॥ 'चतुर्णाम्' इत्यत्र "रषाभ्याम् नोणः समानपदे" इति णत्वम् । पाक्षिकश्च णकारस्य द्वित्वम् "अचो रहाभ्याम्" इत्यनेन । चतुर्+सु इति स्थिते "खरवसानयोर्विसर्जनीयः" इति रेफस्य विसर्गे प्राप्ते आह—

३३६ । रोः सुपि । ८।३।१६ ॥

दी—। सप्तमी बहुवचने रोरेव विसर्जनीयः नान्य रेफस्य। षत्वम्। षस्य द्वित्वे प्राप्ते—

Eng.—Easy,

मित—। 'सुप्' इति सप्तमी बहुवचनम्। तदाह "सप्तमी बहुवचने" इति। एवं यशस्+सु इत्यत्र "ससजुषोरुः" इति रुत्वे सति अनेन विसर्जनीये कृते यशःसु इति सिध्यति॥ प्रकृते चतुर्+सु इत्यत्र रेफस्य रुत्वाभावात् न विसर्जनीयः इति फलितम्। सिद्धे सति आरम्भो नियमार्थः इत्याह—'रोरेव' न तु अन्यस्य 'रस्य' इति; चतुर्+सुप् इत्यत्र "आदेश प्रत्यययोः" इति षत्वं प्राप्तम्। षस्य तु "अचो रहाभ्याम्" इति पाक्षिके द्वित्वे प्राप्ते आह—

३४० । शरोऽचि । ८।४।४६ ॥

दी—। अचि परे शरो न द्वे स्तः। चतुर्षु॥ प्रियचत्वाः। हे प्रियचत्वः। प्रियचत्वारौ—प्रियचत्वारः। गौणत्वे तु नुट् नेष्यते—प्रियचतुराम्। प्राधान्ये तु स्यादेव—परमचतुर्णाम्। इति रेफान्ताः।

A शर् letter does not become duplicated when अच् (i. e, a vowel ) follows. Thus we get चतुर्षु without द्वित्व of षकार। The base प्रियचतुर् formed by the बहुव्रीहि समास—प्रियाः चत्वारः यस्य इति is thus declined—प्रियचत्वाः ( with आम here & in सर्वनामस्थान affixes ). प्रियचत्वारौ—प्रियचत्वारः—प्रियचत्वारम्—प्रियचत्वारौ—प्रियचतुरः। In संबुद्धि the form is प्रियचत्वः with अम् by the rule "अम् संबुद्धौ"। There will be no नुट् in आम् of this base, for it is subordineted here. Thus we get प्रियचतुराम् without नुट्। But when चतुर् is the प्रधान though in a compound, then नुट् must come as in the case of परमचतुर्णाम् ( which is a कर्मधारय compound of परम and चतुर् )।

मित—। एवं चतुर्षु इति एकषकारमेव रूपम् ॥ प्रियाः चत्वारः यस्य इति बहुव्रीहौ प्रियचतुर् शब्दः विशेष्यनिघ्नः सर्ववचनयुक्त... ...ादि। अस्य सर्वनामस्थाने "चतुरनडुहोराम्" इति आम् स्यात्। शसो सर्वनामस्थानत्वाभावात् न आम्—प्रियचतुरः इति स्यात्। प्रियचतुर् इत्यत्र चतुर् शब्दस्य गौणत्वात् "षट्चतुर्भ्यश्च" इति सूत्रे प्रधानस्य चतुर्शब्दस्य ग्रहणात्, नुट् न; अतः आह—'गौणत्वे न नुट्'। ततः प्रियचतुराम् इति। चतुर्शब्दस्य प्राधान्ये सति तु नुट् स्यादेव यथा परमचतुर्णाम् इत्यत्र। 'परमचतुर्णाम्' इति कर्मधारयसमासे चतुर्शब्दस्य न गौणत्वम्—"उत्तरपदार्थ प्रधानस्तत्पुरुषः" इति ॥ अथ लकारान्तं निरूपयन् आह—

दी—। **कमलं कमलां वा आचष्टे** (इति "तत्करोति तदाचष्टे" इति णिचि कमलयतेः क्विपि कमल् इति प्रातिपदिकम्। अस्य सौ "हलङ्याब्भ्यो—" इति सुलोपात् आह—) **कमल्—कमलौ—कमलः।** (कमल् सु इत्यत्र ल्कारस्य इण्त्वात् "आदेशप्रत्यययोः" इति) **षत्वम्। कमल्षु। इति लान्ताः॥**

Eng.—Easy.

मित—। सुगमा ॥ अधुना मकारान्तं निरूपयति। प्रशाम्यतीति क्विपि "अनुनासिकस्य क्विझलोः क्ङिति" (६।४।१५) इति दीर्घः। ततः प्रशाम् इति शब्दे जाते सति आह—

## ३४१। मो नो धातोः। ८।२।६४ ॥

दी—। **मान्तस्य धातोः नः स्यात् पदान्ते। नत्वस्य असिद्धत्वात् लोपो न। प्रशाम्यति इति प्रशान्। प्रशामौ—प्रशामः। प्रशान्भ्याम् इत्यादि।**

A root ending in म takes न (in place of म) when at the end of a पद। Thus प्रशाम+क्विप्=प्रशान् when at the end of a पद। Now न being at the end of a पद and प्रातिपदिक here, there should be elision of it by the rule "नलोपः प्रातिपदिकान्तस्य" (८।२।७)। But

the rule "मोनो धातो" being later in the order of Astadhyayi is to be regarded as असद्धि [ by the rule "पूर्वत्रासिद्धम् ( ante ) ] with regard to the operation of the rule "नलोपः—" । Thus प्रशान्+स्= प्रशान् ( with ( सु ) लोप by "हल्ङ्याप्भ्यो—" ) ।

मित—। "अलोऽन्त्यस्य" इति सूत्रेण अन्त्यमकारस्य एव नकारः स्यात् पदान्ते। ततः प्रशान्+सु इत्यत्र 'हल्ङ्याब्—' इति सुलोपे 'प्रशान्' इति रूपसिद्धिः ॥ ननु 'प्रशान्' इत्यत्र नकारस्य पदान्तत्वात् ततः प्रातिपदिकान्तत्वाच्च "न-लोपः प्रातिपदिकान्तस्य" इति नलोपः कथं न स्यात् ?—अत्रोत्तरमाह—"मोनोधातोः" इति विहितः नकारः परत्वात् "नलोपः—" इति सूत्रं प्रति असिद्ध एव, "पूर्वत्रासिद्धम्" इति सूत्रेण। ततः नात्र नलोपः ॥ भ्यामादौ हलि "स्वादिष्वसर्वनामस्थाने" इति पदत्वात् 'नत्वम् अस्त्येव तदाह—प्रशान्भ्याम् इत्यादि ॥ अधुना किम्—शब्दस्य विशेषं निरूपयति—

## ३४२ । किमः कः । ७।२।१०३ ॥

दी—। किमः कः स्याद्विभक्तौ। अकच्-सहितस्याप्ययमादेशः। कः—कौ—के। कम्—कौ—कान् इत्यादि सर्ववत् ॥

Eng.—Easy.

मित—। "अष्टनः आ विभक्तौ" इत्यतः विभक्तौ इति अनुवर्त्तते, तदाह—किमः कः विभक्तौ इत्यादि। "त्यदादीनाम् :अः" ( ७।२।१०२ ) इति पूर्वसूत्रात् अकारः यथा नानुवर्त्यते तदाह सूत्रम् "किमः कः" इति। एवं विभक्तौ किमः कादेशे सति "साकच्कस्य अप्ययमादेशो भवति", तदाह—"अकच् सहितस्य अपि अयमादेशः"। इदमप्यत्रावसेयम्—"त्यदादीनाम्" इत्यनुवर्त्तनमस्त्येव। वचन-विपरिणामेन'—तदादेः किमः कः इति व्याख्येयम् ॥ अथ इदम्शब्दो निरूप्यते—

## ३४३ । इदमो मः । ७।२।१०८ ॥

दी—। इदमो मः स्यात् सौ परे। त्यदाद्यत्वापवादः।

म is ordered in place of the final म् of इदम् when सु ( 1 st case

singular विभक्ति ) follows. This order of म in place of म is to bar अकार at the end due by the rule "त्यदादीनामः" ( ७।२।१०२ )।

मित—। "तदोः सः सौ अनन्त्ययोः" इत्यतः 'सौ' अनुवर्त्तते ॥ अलोऽन्त्य-परिभाषया अन्त्यस्य मस्य मः स्यात्। न च मस्यमविधिः निरर्थकः एव। तथा च काशिका—"इदमो मकारस्य मकारवचनं त्यदाद्यत्वबाधनार्थम्"। ततः इदम्+स् इति स्थिते आह—

## ३४४। इदोऽय् पुंसि। ७।२।१११॥

दी—। इदमो इदोऽय् स्यात् सौ पुंसि। सोर्लोपः,—अयम्॥ त्यदाद्यत्वं पररूपत्वं च।

When सु of the masculine follows इदम्, then अय् is ordered in place of the इद् of इदम्। Thus in इदम्+सु=अयम् ( सु also eliding by the rule "हलङ्याब्भ्यो—")। Now in इदम्+औ, अकार is ordered at the end by the rule "त्यदादीनामः", so the author says "त्यदाद्यत्वम्"। Then we get इद+अऔ=इद+औ ( the two अ combiding into पररूप आदेश by the rule "अतो गुणे" ), and we look forward—

मित—। सुगमा॥ इदमो इद्-रूपस्य अय्—आदेशे सति, हल्ङ्यादिलोपे च 'अयम्' इति॥ इदम्+औ इति स्थिते "त्यदादीनामः", इति अत्वे इद अ औ इति जायते—अतः आह "त्यदाद्यत्वं पररूपत्वम् च"। ततः निरूपयति—

## ३४५। दश्च। ७।२।१०९॥

दी—। इदमो दस्य मः स्यात् विभक्तौ। इमौ—इमे (इत्यपि सर्ववत्)। "त्यदादेः सम्बोधनं नास्ति" इत्युत्सर्गः।

Eng.—Easy.

मित—। सुगमा॥ अपवादलक्षणव्यभिचारवान् उत्सर्गः। त्यदादीनाम् प्रायेण सम्बोधनं नास्ति क्वचिदस्ति इति तदर्थः। हे स इति वदन्नाप्यमेवावमानम्॥ इदम् शब्दस्य टादौ अस्ति विशेषमाह—

३४६ । अनाप्यकः । ७।२। ११२ ॥

**दी—। अककारस्य इदम इदः अन् स्यादापि विभक्तौ। 'आप्' इति 'टा' इत्यारभ्य सुपः पकारेण प्रत्याहारः। अनेन।**

इदम् not ending in ककार takes अन् in place of its इद् portion when a विभक्ति प्रत्यय beginning with टा & ending in सुप् follows. The word 'आपि' in the vritti being a प्रत्याहार beginning with आ & ending in प् of सुप्, we have got the above explanation. Thus इदम्+आ=इद+आ (by त्यदाद्यत्व)=अन् अ+आ = अन+आ=अन+इन (as is राम)=अनेन।

मित—। "अन् आपि अकः" इति सूत्राङ्गानि। न विद्यते क् यस्य सः अक्, तस्य 'अकः' ककाररहितस्य इत्यर्थः। अनुवृत्तिस्तु "इदमो मः" "इदोय् पुंसि" इत्यत्र द्रष्टव्या॥ एवम् इदम्+आ=इद+आ (त्यदाद्यत्वेन)=अन् अ+आ (अनेन सूत्रेण—अनादेशः)=अन+इन (रामादिशब्दवत् इनादेशः)=अनेन॥ 'अकः' इति किम्? इमकेन। अत्र ककारसहितस्य इदमो आपि अनादेशो न)॥ इदम्+भ्याम् इत्यत्र त्यदाद्यत्वे पररूपत्वे च सति इद+भ्याम् इत्यत्र "अनाप्यकः" इति प्राप्ते आह—

३४७ । हलि लोपः । ७।२।११३ ॥

**दी—। अककारस्य इदम इदो लोपः स्यात् आपि हलादौ।**

The इद portion of इदम् not ending in ककार, elides when an आप् विभक्ति beginning with हल् follows. Thus इदम्+भ्याम्=इद+भ्याम्=अभ्याम्=आभ्याम् (see next).

But the question here arises that the elision (लोप) should be due of the final letter of इद् by the rule "अलोऽन्त्यस्य" and then there can be no इष्टसिद्धि in आभ्याम्, so we look forward—

मित—। सुगमा॥ ननु "अलोन्त्यस्य" इति सूत्रेण "इदोलोपः" इति, वचने अन्त्यस्य 'द्' इत्यस्य लोपे प्राप्ते आह—

दी—। "नानर्थके अलोन्त्यविधिरनभ्यासविकारे" ( वार्त्तिक )।

"अलोन्त्यविधि" is not to extend to a portion which in itself is अनर्थक ( having no meaning at all ), excepting अभ्यासविकार when अलोऽन्त्यविधि is to extend no doubt." So here 'इट्' in itself being अनर्थक there is no application of अलोन्त्यपरिभाषा here. But the whole of इट् here elides.

मित—। अनर्थकस्य आदेशो लोपो वा विकारो वा अन्त्यस्य अलो न भवति अपि तु सर्वस्य। अत एव अनर्थकस्य इटः सर्वस्यैव लोपः वा विकारो वा। क्ते लोपे अकारमात्रः शेषः॥ 'अनभ्यासविकारे' इति उक्तत्वात् अभ्यासस्य तु विकारे कर्त्तव्ये अन्त्यस्य एव अलो भवति। केवलस्य धातोरर्थवत्त्वेपि द्विर्वेक्रते समुदायस्यार्थवत्त्वात् अभ्यासमात्रस्य नार्थवत्त्वम् इति अत्र सर्वलोपे अनिष्टापत्तिः। ततः "अनभ्यासविकारे" इत्यनेन अभ्यासविकारे सर्वादेशः निषिद्धः॥

३४८। आद्यन्तवदेकस्मिन्। १।१।२१॥

दी—। एकस्मिन् क्रियमाणं कार्य्यम् आदाविव अन्त इव स्यात्।

[ तेन अ.भ्याम् इति स्थिते अस्य सूत्रस्य प्रवृत्तौ सत्याम्—"सुपि च" इति दीर्घः। ततः आह— ] आभ्याम्।

When an operation is to come in a single letter then that one is to be regarded as both आदि वा अन्त as the case may be. Thus in अ + भ्याम् we can apply the rule "सुपिच" and by दीर्घ we get आभ्याम्। Here 'अ' इत्यस्य अन्तवत्त्वात् दीर्घत्वम्।

मित—। सुगमा। 'आद्यन्तवत्' इत्यत्र 'वति' द्वन्द्वान्ते श्रूयमाणत्वात् प्रत्येकमभिसम्बध्यते। तदाह वृत्तौ—'एकस्मिन् क्रियमाणं...आदाविव अन्ते इव स्यात्' इत्यादि॥ भाष्ये तु "व्यपदेशिवद् एकस्मिन्" इति सूत्रशिक्षा विहिता॥

[ मन्ये "व्यपदेशिवदेकस्मिन्" इत्यपठित्वा सूत्रकारेण "आद्यन्तवदेकस्मिन्" इति उच्चार्य्य 'एकस्मिन्' वक्तुमपि 'आद्यन्तवत्' सर्वद्रव्यं वर्त्तते इति इङ्गितम्, विहितम् इत्यास्तां

तावत् ] ॥ इदम् भिस् इति स्थिते त्यदाद्यत्वे पररूपे च सति "हलिलोपः" इति इद् लोपे अ भिस् इति जाते "अतो भिस् एस्" इति भिसः स्थाने ऐसि प्राप्ते सति आह—

३४६ । नेदमदसोरकोः । ७।१।११ ॥

दी— । अककारयोः इदमदसोर्भिस ऐस् न स्यात् । ( बहुवचने झलि परे ) एत्वम्=एभिः ॥ ( "त्यदादीनामः" इति ) अत्वम् । नित्यत्वात् ङेः स्मै, पश्चाद्धलि लोपः । अस्मै—आभ्याम्—एभ्यः । अस्मात्—आभ्याम्—एभ्यः । अस्य—अनयोः—एषाम् । अस्मिन्—अनयोः—एषु । ककारयोगे तु—अयकम्—इमकौ—इमके । इमकम्—इमकौ—इमकान् । इमकेन-इमकाभ्याम् इत्यादि ।

ऐस् is not to come in place of भिस् after the bases इदम् and अदस् not ending in ककार । Then इदम्+भिस्=इद+भिस् ( by त्यदाद्यत्वम् )=अ भिस्, ( "by हलिलोप" )=एभिः Here एत्व coming by the rule "बहुवचने झल्येत्" । In इदम्+ङे ( ए ) =इद+ए ( by त्यदाद्यत्व ), we do not get यादेशः as in रामाय, but स्मै comes by the rule "सर्वनाम्नः स्मै", for इदम् being सर्वनाम, स्मै is नित्य and comes in supercession of यादेश । Then we get इद+स्मै which become अ+स्मै=अस्मै by हलिलोपः । Hence the author here says "अत्वम् । नित्यत्वात् ङेः स्मै पश्चात् "हलिलोपः" &c. Similarly आभ्याम् एभ्यः, अस्मात्, अस्य, अस्मिन् &c. In आम् also there is त्यदाद्यत्व, पररूपत्व, सुट् ( as in सर्वेषाम् ), then "हलिलोप; and lastly एत्व and षत्व and the form is एषाम् । Similarly एषु is formed. Declension of इदम् when ककार ( अकच् ) comes differs, for then the rules "अनाप्यकः" "हलिलोपः" and "नेदमदसोरकोः" &c donot apply, these being disallowed from operation owing to the prohibition 'अककारस्य' &c. Thus we get अयकम्—इमकौ—इमकान् &c.

मित—। "अतो भिस ऐस्" इत्यतः 'भिस ऐस्' अनुवर्त्तते। 'अकोः' इति षष्ठ्यन्तम्; अविद्यमानः कः ककारः ययोः तयोः इत्यर्थः। तदाह— 'अककारयोः इदमदसोः इत्यादि। इद+भिस्=अ भिस्=एभिः। "बहुवचने झल्येत्" इत्यत्र एत्वम्। इदम्+ङे इत्यत्र प्रथमं तावत् त्यदाद्यत्वम् ततः अस्य सर्वनामत्वात् स्मै नित्यः। अतः नित्यत्वात् यादेशं बाधित्वा स्मै स्यादेव, पश्चात् "हलिलोपः" इति इदलोपः ततः अस्मै इति॥ अन्यत् सुगमम्॥ ककारयोगे विशेषम् दर्शयति, यतः ककारयोगे "अनाप्यकः", "हलिलोपः", "नेदमदसोरकोः" इति सूत्राणां प्रवृत्तिर्नस्यात् ककारयोगे तन्निषेधात्।

## ३५० । इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ । २।४।३२ ॥

**दी—अन्वादेशविषयस्य इदमोऽनुदात्तः अशादेशः स्यात् तृतीयादौ। अश्—वचनं साकच्कार्थम्।**

When अन्वादेश ( i. e, a subsequent assertion of one already mentioned ) is to be made for the word इदम्, then अश् is to be substituted for it in तृतीया &c, and this is pronounced as अनुदात्त। The forms अस्मै with अशादेश are same as अस्मै without अशादेश, so the sutra should rather assert अनुदात्तत्व only & not अशादेश also; अशादेश having no significance here. So to remove this ambiguity now the author says that अश् is to come in place of इदम् along with अकच्, so अशादेश is significant here; compare the example (though not given here ) "इमकाभ्यां छात्राभ्यां रात्रिरधीता, अथो आभ्याम् अहरप्यधीतम्"।

मित—। अन्वादेशे अश्वचनविधानाभावेपि अस्मै आभ्याम् इत्यादि लभ्यते "द्वितीयाटौस्स्वेनः" इति द्वितीयादौ विशिष्यविधानात्। तद् अनुदात्तत्वमेव विधीयताम्, अश्वचनं च निरर्थकमिति चेत्? अत्र समाधत्ते—अशवचनं साकच्कस्य इदमो विहितम् ततो न निरर्थकम्। उदाहरणं यथा—इमकाभ्यां छात्राभ्यां रात्रि-

रधीता, अथो आभ्याम् अहरप्यधीतम्" ॥ आदेशः कथनम्, अन्वादेशः अनुकथनम्। कथनमत्र विधानं न तु वस्तुनिर्देशमात्रम्। तेन इह न "ईषदर्थे मर्य्यादाभिविधौ यः। एतमातं ङितं विद्यात्" पूर्वार्धस्य च शब्देन अनुवादत्वात्। अन्वादेशस्तु इदमेतदो-रसद्भावेपि बुद्ध्या सन्निधापितस्य अन्यतरस्य विधानमपि भवति "तस्मै शशंस···शैलसुता-मुपेताम्। कथयामास च भर्त्तुरेनाम्" ॥ तथा च काशिका—नेह पश्चादुच्चारण-मात्रम् अन्वादेशः। किं तर्हि? एकस्यैवाभिधेयस्य पूर्वं शब्देन प्रतिपादितस्य द्वितीयं प्रतिपादनमन्वादेशः"। परसूत्रेपि अन्वादेशार्थः द्रष्टव्यः ॥

**३५१। द्वितीया टौस्स्वेनः। २।४।३४ ॥**

**दी—। द्वितीयायां टौसोश्च परतः इदमेतदोरेनादेशः स्यात् अन्वादेशे। (अन्वादेशशब्दं व्याख्यायते—) किञ्चित् कार्य्यं विधातुमुपात्तस्य कार्य्या-न्तरं विधातुं पुनरुपादानमन्वादेशः"। यथा—'अनेन व्याकरणम् अधीतम्' 'एनं छन्दोऽध्यापय' इति 'अनयोः पवित्रं कुलम्' 'एनयोः प्रभूतं स्वम्' इति। एनम्—एनौ—एनान्। एनेन। एनयोः। इति मान्ताः ॥**

Eng.—Easy.

मित—। पूर्वसूत्रव्याख्यावसरे च द्रष्टव्या ॥ अधुना णकारन्तान् निरूपयन् आह-'गणसंख्याने' इति अदन्तचरादिः धातुः। ततः सुपूर्वात् स्वार्थे णिचि सति विचि सुगणि+विच=सुगण्+विच् ("अन्येभ्योपि दृश्यते" इति णिलोपः)=सुगण् (विचौ इत्संज्ञावितौ; ततः वेरपृक्तलोपः) इति प्रातिपदिकम्। अस्य सौ हल्ङ्यादिलोपे 'सुगण्' इति रूपसिद्धिः। तदेवाह दीक्षितः—

**दी—। गणयते विच्। सुगण्—सुगणौ—सुगणः।** (सुगण्+सु इत्यत्र "ङ्णोः कुक्टुक् शरि" इति टुग् विकल्पः। टुकि सति "चयो द्वितीया—" इति वार्त्तिकेन टस्य ठः स्यात्। अतः टुक्पक्षे द्वे रूपे तदाह—) **सुगण्ट् सु—सुगण्ठ्सु** (टुगभावपक्षे रूपं यथा) **सुगण्सु ॥** (गणयतेः क्विपि विशेषमाह—) **क्विप्। "अनुनासिकस्य क्विझलोः" (६।४।१५) इति दीर्घः** (सुगाण् इति प्रातिपदि-

कम्)। (ततः) सुगाणु—सुगाणौ—सुगाणः। (पूर्ववत्) सुगाण्ट्सु—सुगाण्ठ्सु—सुगाण्सु। इति णान्ताः॥

Eng.—Easy.

(अथ नकारान्ताः कथ्यन्ते—) राजन्+सु इति स्थिते आह—

दी—। परत्वात् उपधादीर्घः; हल्ङ्यादिलोपः। ततो नलोपः। राजा।

मित—। राजन् सु इति "हल्ङ्याप्—" सूत्रेण सुलोपे सति प्रथमं तावत् परत्वात् "सर्वनामस्थाने चासंबुद्धौ" इति प्राप्तौ—उपधा वृद्धिः। ततश्च प्रातिपदिकान्त—नलोपः, तथा च सूत्रम् "नलोपः प्रातिपदिकान्तस्य"। एवं 'राजा' इति सिद्धम्॥ हे राजन् स् इत्यत्र हल्ङ्यादिना सुलोपे सति नकारस्य पदान्तत्वात्, प्रातिपदिकान्तत्वाच्च लोपे प्राप्ते आह—

३५२। न ङिसम्बुद्ध्योः। ८।२।८॥

दी—। नस्य लोपो न स्यात् ङौ सम्बुद्धौ च। हे राजन्॥ ङौतु छन्दस्युदाहरणम्। "सुपां सुलुक्—" इति ङेर्लुक्। निषेधसामर्थ्यात् प्रत्ययलक्षणम्। "परमे व्योमन्"। "ङावुत्तरपदे प्रतिषेधो वक्तव्यः" (वार्त्तिक)। ङौ विषये उत्तरपदे परे "न ङिसम्बुद्ध्योः" इत्यस्य निषेधो वाच्यः इत्यर्थः। चर्मणि तिलाः अस्य चर्मतिलः; ब्रह्मनिष्ठः॥ राजानौ—राजानः। राजानम्—राजानौ—राजानः। 'अल्लोपोऽनः' (इत्यकारलोपः); श्चुत्त्वम्; न च अल्लोपः स्थानिवत्। 'पूर्वत्रासिद्धे' तन्निषेधात्। नापिवहिरङ्गतया असिद्धः। यथोद्देशपक्षे षाष्ठीं परिभाषां प्रति श्चुत्त्वस्य असिद्धतया अन्तरङ्गाभावे परिभाषायाः अप्रवृत्तेः। राज्ञा—राज्ञः। राज्ञा॥

The न at the end does not elide when ङि or संबुद्धि follows. Thus हे राजन् स् gives हे राजन् (with सुलोपः)। In राजन् ङि, राजन् is a "भ" and not a "पद"। So how can the question of नलोपः which is to

come at the end of a पद arise here at ङि ? Hence the author says that the example of ङि ( i. e, न not elided in ङि ) is in Vedic languge. In vedic language the ङि elides by the rule "सुपां सुलुक्—" ( vedic rule), and then in राजन् ङि, ( ङि being elided ) we get राजन्, here न् at the end being about to elide this Sutra bars elision and we finally get राजन् &c ( in ङि in Vedic uses ), witness the example here परमे व्योमन् । In राजन् ङि though ङि elides by लुक् and question of प्रत्ययलक्षण seems to cease by न लुमताङ्गस्य", still here is प्रत्ययलक्षणम् ( being a vadic case ), for otherwise the निषेध in this sutra with be useless. Hence the very fact of prohibition suggests प्रत्ययलक्षण here. If there is प्रत्ययलक्षण in vedic usages as परमे व्योमन् though ङि elides by the word लुक् (see above ), why then should not प्रत्ययलक्षण exist in examples of compounds like चर्मतिलः ( compounded from चर्मणि तिला अस्य ) and ब्रह्मनिष्ठ ( compounded from ब्रह्मणि निष्ठा अस्य ) and why thus ङिलुक् in समास be not by प्रत्ययलक्षण come under the operation of the rule yielding non-elision of न ? Against this the Varttika "ङी उत्तरपदे—" bars the operation of this rule "ङि संबुद्ध्योः" in case of ङि if उत्तरपद—follows ( as in चर्मतिल &c ). Thus चर्मतिलः । ब्रह्मनिष्ठः &c are got with नलोपः । Similarly राजानौ—राजानः &c with उपधावृद्धि in सर्वनामस्थान affix. In राजन्+शस् ( शस् not being a सर्वनामस्थान affix, we donot get उपधावृद्धि ) । The rule "अल्लोपोऽनः" ( Sutra 234 ) provides अलोप in अन् portion here. Thus we get राजन्+अस् which by श्चुत्व ( the rule being "स्तोः श्चुना श्चुः" becomes राज्न्+अस्=राज्ञः We here need not apprehend स्थानिवत्त्व of अल्लोप here by the rule "अचः परस्मिन् पूर्वविधौ" for its स्थानिवत्त्व will be prohibited when श्चुत्व

is to come in by the rule "पूर्वत्रासिद्धम्" । Again अल्लोपः which with respect to भसंज्ञा and स्वादिप्रत्ययः is वहिरङ्ग in comparison with श्चुत्व which is अन्तरंग being dependent on श्चु योग only, should rather be regarded as असिद्ध by the maxim "असिद्धं वहिरङ्गमन्तरङ्गे" with respect to श्चुत्व and thus श्चुत्व is not to operate here. Against this the author says that though वहिरङ्ग still अल्लोप is not असिद्ध with respect to श्चुत्व । The reason is—this maxim being mentioned by भाष्यकार in the 6th chapter of Astadhyayi under the rule "वाहः ऊठ्" is called a षाष्ठी परिभाषा and it is regarded as to operate only in its own sphere by the maxim "यथोद्देशं संज्ञापरिभाषाम् । But श्चुत्व rule is in the 8th chapter and is असिद्ध by the rule "पूर्वत्रासिद्धम्" no matter whether अल्लोप is अन्तरङ्ग । And thus in fact this षष्ठीपरिभाषा can not thus operate in matter of श्चुत्व it being असिद्ध respect to this परिभाषा । So in the from राज्ञः, श्चुत्व must come in after अल्लोप । Similarly राज्ञा is tormed. In राजन्+भ्याम्, न being elided नात्व &c by the rule "सुपि च" is apprehended and we look forward—

मित— । "न लोपः प्रातिपदिकान्तस्य" इत्यतः 'नलोपः' ( नस्य लोपः इत्यर्थः ) अनुवर्त्तते । तदाह— 'नस्य लोपो न—' इत्यादि । ततः हे राजन् इति सिद्धम् ॥ राजन् ङि इत्यत्र 'राजन्' इत्यस्य भत्वात् पदत्वाभावात् नलोपस्य प्राप्तिरेव नास्ति, तत् कथमत्र ङौ नलोपो निषिद्धः ? इत्यत्रोत्तरमाह—'ङौ तु छन्दस्येव' इत्यत्र उदाहरणम् । उदाहरणं यथा—'परमे व्योमन्' । 'व्योमन्' इत्यत्र "सुपां सुलुक्—" इति छान्दस सूत्रेण ङिलुकि सति प्रत्ययलक्षणमाश्रित्य नलोपे प्राप्ते तन्निषिध्यते । अत्र ङेर्लुका लुप्तत्वात् "न लुमताङ्गस्य" इति सूत्रेण प्रत्ययलक्षणाभावः युक्तः ; किन्तु "निषेधसामर्थ्यात्" ज्ञायते यदत्र प्रत्ययलक्षणमस्त्येव अन्यथा निषेधः व्यर्थः स्यात् । अतः आह—"निषेधसामर्थ्यात् प्रत्ययलक्षणम्" एतदपि छन्दसि सम्भवत्येव ॥ ननु यदि परमे व्योमन् इत्यादौ ङेर्लुका लुप्तत्वेपि प्रत्ययलक्षणं स्यात् तदा—चर्मणि तिला अस्य

चर्मतिलः, ब्रह्मणि निष्ठा-अस्य ब्रह्मनिष्ठः इत्यादि समासेपि ङिलुकः प्रत्ययलक्षणमाश्रित्य "न ङिसंबुद्ध्योः" इत्यस्य सूत्रस्य प्राप्तौ नकारस्य लोपनिषेधः कथं न स्यात्? अतः वार्त्तिकमाह—"ङावुत्तरपदे प्रतिषेधो वक्तव्यः"। ब्रह्मनिष्ट इत्यादौ उत्तरपदे परे ङिविषये "न ङिसंबुद्ध्योः" इति सूत्रस्य प्रवृत्तिर्प्रतिषिध्यते। तेन ब्रह्मनिष्ठ इत्यादौ नलोपः स्यादेव इत्यादि॥ राजन्+शस् इत्यत्र शसो सर्वनामस्थानत्वाभावात् उपधादीर्घे असति, "अल्लोपोऽनः" इति सूत्रेण 'राजन्' इत्यत्र 'अन्' इत्यस्य अल्लोपे च सति राज्न्+अस् इति जाते श्चुत्वेन राज्ञः इत्यत्र "अचः परस्मिन् पूर्वविधौ" इति सूत्रेण अल्लोपस्य स्थानिवत्वं न शङ्क्यम्? श्चुत्वं कर्त्तव्ये "पूर्वत्रासिद्धम्" इति सूत्रेण अल्लोपस्य स्थानिवत्त्वं न स्यात्। अन्यदपि अत्र द्रष्टव्यम्—अल्लोपस्तु भसंज्ञापेक्षः स्वादिप्रत्ययापेक्षः वहिरङ्ग एव, श्चुत्त्वं तु श्चुयोगमात्रापेक्षः सन् अन्तरङ्ग एव। ततः "असिद्धं वहिरङ्गमन्तरङ्गे" इति परिभाषया कथं अल्लोपः श्चुत्वविषये असिद्धः न स्यात्? इत्यत्र समाधानमाह—"असिद्धं वहिरङ्गमन्तरङ्गे" इति परिभाषा तु षष्ठाध्याये "वाहः ऊठ" इति सूत्रभाष्ये उक्तम्। अतः इयं 'षाष्ठी परिभाषा'। "यथोद्देशं संज्ञापरिभाषम्" इति पक्षाश्रयणेन इयं परिभाषा निजस्थानमेव व्याप्रियते। एवं अष्टाध्याय्याः अष्टमाध्यास्य चतुर्थपदेस्थितस्य श्चुत्वस्य विधाने सति "पूर्वत्रासिद्धम्" इति चुत्वस्यासिद्धत्वात् अन्तरङ्गापि इयं परिभाषा षष्ठाध्यायगता षाष्ठी सती न प्रवर्त्तते अतः आह—"यथोद्देशपक्षे षाष्ठीं परिभाषां प्रति श्चुत्वस्य असिद्धत्वम्" इत्यादि। एवमपि राज्ञः इत्यत्र श्चुत्वनिर्बाधः एव। ततः श्चुत्वेन जञोः संयोगात् 'राज्ञः' इति रूपसिद्धिः। एवम् राज्ञा इत्यादि॥ राजन्+भ्याम् इत्यादौ पदत्वात् नलोपे सति "सुपिच" इति आत्वादि कथं न स्यात् इत्याशङ्क्य आह—

**३५३। नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति। ८।२।२॥**

**दी—। सुप्विधौ स्वरविधौ संज्ञाविधौ कृतितुक्विधौ च नलोपोऽसिद्धः, नान्यत्र—'राजाश्व इत्यादौ। इत्यसिद्धत्वात् आत्वमेत्वं ऐस्त्वं च न। राजभिः। राज्ञे—राजभ्याम्—राजभ्यः। राज्ञः—राज्ञोः—राज्ञाम्। राज्ञि—राजनि। प्रतिदिव्यतीति (प्रतिदिव+कनिन्) प्रतिदिवा—प्रतिदिवानौ—प्रतिदिवानः** (इत्यादि राजवत्)। अस्य भविषये अल्लोपे कृते—

In सुप्विधि ( i. e, as regards rules on case-affixes ) in स्वरविधि (i. e, when स्वर is to be enjoined ), in संज्ञाविधि ( i. e, when संज्ञा is being enjoined ), in तुग्विधि of कृत् affixes, नलोप is to be regarded as if it has not taken place at all. But in other place नलोप is to be deemed as taken place ; thus in समासविधि &c, नलोप is taken as accomplished, so we have राजाश्व। Hence in राजन्+भ्याम् and राजन्+भिस्, नलोप being असिद्ध we do not get दीर्घ ( आत्व ) by "सुपि-च" and ऐस्त्व by the rule "अतो भिस ऐस्" respectively. So in राजन्+भ्यस् we do not get एत्व by the rule "बहुवचने झल्येत्"। The base प्रतिदिवन् is also like राजन् ; but in प्रतिदिवन्+शस् there being अल्लोप we look forward—

मित—। विधानं विधिः। सुप्च स्वरश्च संज्ञा च तुक्च, द्वन्द्वः। तेषां विधयः। तेषु। 'कृति' इति तुका सम्बध्यते ; अन्यत्र असम्भवात्। फलितं यथा—सुपोविधौ, स्वरविधौ' संज्ञायां विधेयायाम् ; कृतिपरे यः तुक्, तस्य च विधौ नलोपः असिद्धः। अत्र "पूर्वत्रासिद्धम्" इत्येव नलोपे असिद्धे सति आरम्भो नियमार्थः। "एतेष्वेव नलोपोऽसिद्धोभवति नान्यत्र"। तथा च वृत्तौ—नान्यत्र 'राजाश्व' इति। अत्र नलोपः सिद्धः एव। अत्र विस्तरव्याख्या च काशिकायां द्रष्टव्या॥ प्रतिदीव्यतीति प्रति+दिवु ( क्रीडायाम् )+कनिन्=प्रतिदिवन् इति प्रातिपदिकम्। अस्य राजवत् रूपम्। किन्तु शसि भत्वात् राजवत् अल्लोपे कृते विशेषमाह—

**३५४। हलिच। ८।२।७७॥**

**दी—। रेफवान्तस्य धातोरुपधाया इको दीर्घः स्यात् हलि। न चाल्लोपस्य स्थानिवत्त्वम्। ( न पदान्त—इति सूत्रे ) दीर्घविधौ तन्निषेधात्। बहिरङ्गपरिभाषा तुक्न्यायेन न प्रवर्त्तते। प्रतिदीव्नः। प्रतिदीव्ना इत्यादि॥ यज्वा—यज्वानौ—यज्वानः।**

The उपधा इक् vowel of a verb ending in र or व becomes दीर्घ when a हल् letter follows. Thus प्रतिदिवन्+अस् becomes प्रतिदीव्: with

the penultimate vowel being lengthened. Here अल्लोप is not to be treated as स्थानिवत्, for its स्थानिवत्त्व is prohibited in connection with दीर्घविधि in the rule "न पदान्त—" (ante.). And वहिरङ्गपरिभाषा also to make अल्लोप असिद्ध does not operate here for reasons discussed under the rule 352 in connection with the formation of the word राज्ञः ॥ (Rest Easy).

मित—। "वोरुपधाया दीर्घ इकः" इति अनुवर्त्तते। "सिपिधातोः" इत्यतः "धातोः" च। 'धातोः' इति 'वोः' इत्यस्य विशेष्यम्; तदाह—"रेफवान्तस्य धातोः" इत्यादि ॥ ननु "अचः" परस्मिन्—" इति सूत्रेण अल्लोपस्य स्थानिवत्त्वमाश्रित्य अकारेण व्यवधाने सति हल्परत्वाभावात् कथमिह दीर्घः स्यात् इत्याकाङ्क्षायामाह—'अत्र अल्लोपस्य स्थानिवत्त्वं नास्ति। दीर्घविधौ "न पदान्त—" इति सूत्रे तन्निषेधात् ॥ वहिरङ्गपरिभाषाया अप्राप्तिश्चात्र, 'राज्ञः' इति रूपसाधनावसरे व्याख्याता ॥ यज्वन्-शब्दः सुटि राजवत्। शसि तु अल्लोपे प्राप्ते आह—

## ३५५। न संयोगाद्वमन्तात्। ६।४।१३७।

**दी—। वकार-मकारान्तसंयोगात् परस्य अनोऽकारस्य लोपो न स्यात्। यज्वनः। यज्वना—यज्वभ्याम् इत्यादि।** (ब्रह्मन्शब्दस्य शसि अनेन सूत्रेण अल्लोपे असति—) **ब्रह्मणः। ब्रह्मणा—ब्रह्मभ्याम् इत्यादि।**

The अकार of अन् portion of words having वकार or मकार as conjuntcs preceding does not elide, when it is a "भ"। Thus यज्वन् + शस्=यज्वनः without अल्लोप, for here अन् portion comes after वान्त-संयोग। Similarly ब्रह्मन् + शस् gives ब्रह्मणः without अल्लोप, for अन् here is preceded by मान्तसंयोग।

मित—। वश्च मश्च वमौ, द्वन्द्वः; तौ अन्तौ यस्य। तस्मात् संयोगात्। वान्त-संयोगात् मान्तसंयोगाच्च इत्यर्थः। "अल्लोपोऽनः" इति वर्त्तते ॥ अन्यत् सुगमम् ॥

'वृत्र' तन्नामकम् असुरं हतवान् इति वृत्र+हन्+क्विप् ("ब्रह्मभ्रूण वृत्रेषु क्विप्" इति)=वृत्रहन्। अस्य सौ विशेषं दर्शयति—

**३५६। इन्-हन्-पूषार्यम्णां शौ। ६।४।१२॥**

**दी—। एषां शावेव उपधाया दीर्घः नान्यत्र। इति** (वृत्रहन् सु इत्यत्र दीर्घस्य) **निषेधे प्राप्ते—**

Eng.—Easy.

मित—। 'इन्' इति इन्नन्ताः गृह्यन्ते। इन्, हन्, पूषन्, अर्यमन् इत्यन्तानां शौ दीर्घः स्यात्। "जस्शसोः शिः" "शिः सर्वनाम स्थानम्" इति तदेव 'शि' अत्र गृह्यते। "नोपधायाः" (६।४।७) "सर्वनामस्थाने चासंबुद्धौ" इति सिद्धे नियमार्थोयमारम्भः। अतः आह—"शावेव...नान्यत्र"। ततः वृत्रहन्+सु इत्यत्र उपधायाः दीर्घस्य निषेधे प्राप्ते आह—

**३५७। सौ च। ६।४।१३॥**

**दी—। इन्नादीनाम् उपधायाः दीर्घः स्यात् असम्बुद्धौ सौ परे। वृत्रहा। हे वृत्रहन्।**

The उपधा of इन्नन्त words, of words ending in हन्, of पूषन्+अर्यमन्, becomes lengthened when सु not of संबुद्धि follows. Thus वृत्रहन्+सु=वृत्रहन् (with सुलोप by "हल्ङ्याप्भ्यो—")=वृत्रहान् (with उपधादीर्घ)=वृत्रहा (by "नलोपः प्रातिपदिकान्तस्य")। But in सम्बोधन, न does not elide as in the case of राजन् by the rule "न ङिसंबुद्ध्योः" and there is no उपाधादीर्घ also, and the result is हे वृत्रहन्।

मित—। पूर्वसूत्रमत्रानुवर्त्तते। तदाह—"इन्नादीनाम्" इत्यादि। 'असंबुद्धौ' इति उक्तत्वात् 'हे वृत्रहन्' इत्यत्र दीर्घः न स्यात्॥

**दी—। "एकाजुत्तरपदे णः"** (सूत्र) ३०७) इति (? **अत्र णत्वम्। वृत्रहणौ—वृत्रहणः। वृत्रहणम्—वृत्रहणौ।**

मित—। "एकाजुत्तरपदे णः" इति सूत्रेण वृत्रघ्णौ इत्यादि स्थाने णत्वम्। 'हन्' इति एकाजुत्तरपदम्। नकारस्य णत्वनिमित्तं तु 'वृत्र' इत्यत्र 'र' इति। 'हन्' इत्यत्र 'नः' प्रातिपदिकान्तस्थः। अतः "एकाजुत्तर—" सूत्रस्य प्रवृत्त्या वृत्रघ्णौ इत्यादि सिध्यति॥ वृत्रहण्+अस् इत्यत्र अल्लोपे सति वृत्रह्न्+अस् इति स्थिते आह—

**३५८। हो हन्तेर्ञ्णिन्नेषु। ७।३।५४॥**

**दी—। ञिति णिति च प्रत्यये, नकारे च परे, हन्तेः हकारस्य कुत्वं स्यात्।**

Eng.—Easy

मित—। सुगमा। एवं वृत्रहन्+अस् इत्यत्र नकारे परे हन्तेः हकारस्य कुत्वे सति वृत्रघ्न्+अस् इति जातम्। महाप्राणस्य हकारस्य कुत्वेन महाप्राणः कवर्गस्थः घकारः एव स्यात्। अत्र पुनः "एकाजुत्तरपदेणः" इति णत्वे प्राप्ते वदति—"हन्तेरत्पूर्वस्य" (८।४।२२) 'वृत्रघ्नः' इत्यत्र अत्पूर्वत्वाभावात् न णत्वम्। इति तदेव सूत्रं विभज्य व्याख्यायते—

**३५९ हन्तेः—**

**दी—। उपसर्गस्थान्निमित्तात् परस्य हन्तेर्नस्य णत्वं स्यात्। प्रहणयात्।**

मित—। अत्र 'प्र' इत्यत्र णत्वनिमित्तस्य रकारस्य भिन्नपदस्थत्वात् अप्राप्ते णत्वे वचनम्। अधुना प्रकृतमनुस्रियते—

**३५०। अत्पूर्वस्य। ८।४।२२॥**

**दी—। हन्तेः अत्पूर्वस्यैव नस्य णत्वम् नान्यस्य। प्रघ्नन्ति।**

Eng.—Easy.

मित—। अत्र सूत्रे "रषाभ्यां नोणः समानपदे" इत्यनुवर्त्तते। "उपसर्गादसमासेपि णोपदेशस्य" इत्यतः 'उपसर्गात्' इत्यस्ति। तच्च "तत्स्थे" लक्षणा। ततः

—उपसर्गस्थात् इति लभ्यते। अतः पूर्वसूत्रे आह—उपसर्गस्थात् निमित्तात् परस्य इत्यादि। किन्तु योगविभागसामर्थ्यात्—"अतपूर्वस्य" इत्यंशे उपसर्गात् इत्यनुवृत्तिर्नास्ति। किन्तु 'हन्तेः' इत्यनुवर्त्तते। "रषाभ्यां नोणः" इति च। ततः फलितमाह—हन्तेरतपूर्वस्य नस्य णः स्यात्। सिद्धे सति नियमारम्भः। तथा च वृत्तिः—'नान्यस्य' इति। एवं प्र+हन+लट अन्ति=प्रघ्नन्ति इत्यत्र "हन्तेः" इति प्राप्तं णत्वं, 'अतपूर्वस्य' इति नियमात् न भवति॥ "प्रातिपदिकान्त नुम् विभक्तिषु च" (८।४।११) "एकाजुत्तरपदे णः" (८।४।१२) "कुमति च" (८।४।१३) "हन्तेरतपूर्वस्य" (८।४।२२) इति हि अष्टाध्याय्यां सूत्रपादक्रमः। ततः वृत्रघ्नः इत्यत्र "प्रातिपदिकान्त—" इति निवर्त्तते, परत्वात् प्रकृतोपयोगित्वाच्च "एकाजुत्तरपदे णः" इति च प्राप्नोति। तदपि "हन्तेरतपूर्वस्य" इति सूत्रेण प्रतिषिध्यते। इदं च सूत्रम् "अनन्तरस्य विधिर्वा भवति—" इत्यादि परिभाषया विधिरपि भवतु प्रतिषेधोपि भवतु। तथा च 'अतपूर्वस्य' इति विधिमाश्रित्य प्रघ्नन्ति इत्यत्र एव हन्तेः अव्यवहित—णत्वं वारयतु, "हन्तेः" इति च अनन्तरं सूत्रं निषेधयतु, न तु "एकाजुत्तरपदेणः" इत्यादि—पूर्वगतानि सूत्राणि। इति आशङ्क्य दीक्षित उवाच—

**दी—। योगविभागसामर्थ्यात् "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" (परिभाषा) इति न्यायं वाधित्वा "एकाजुत्तरपदे—" इति णत्वमपि निवर्त्तते। नकारे परे कुत्वविधिसामर्थ्यात् अल्लोपो न स्थानिवत्। वृत्रघ्नः। वृत्रघ्ना इत्यादि। यत्तु 'वृत्रघ्नः' इत्यादौ वैकल्पिकं णत्वम् माधवेनोक्तं तत्-भाष्यवार्त्तिकविरुद्धम्। एवं शार्ङ्गिन्, यशस्विन्, अर्य्यमन्, पूषन्। यशस्विन्निति विन्प्रत्यये इनोनर्थकत्वेपि 'इन्हन्—' इत्यत्र ग्रहणं भवत्येव। "अन्-इन्-अस्-मन् ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति" (प-) इति वचनात्। अर्यम्णि अर्यमणि। पूष्णि—पूषणि।**

Owing to the force of योगविभाग (i. e., splitting up of the Sutra into two) the maxim "अनन्तरस्य विधिर्वाभवति" &c. is superceded here, and the rules "एकाजुत्तरपदे णः", "कुमति च", "प्रातिपदिकान्त—" are all barred by the rule "हन्तेरतपूर्वस्य"। So no णत्व in वृत्रघ्नः।

In वृत्रघ्नः, अल्लोप is not to be regarded as स्थानिवत्, and thus should not stand in the way of कुत्व here, for the very fact that कुत्व is enjoined when नकार follows suggests that here अल्लोप is not to be regarded as स्थानिवत्, thus वृत्रहन्+अस् =वृत्रघ्न्+अस्=वृत्रघ्नः ( without cerebral ). Madhava however makes णत्व optional in वृत्रघ्नः by the rule "प्रातिपदिकान्त—" and he says that "हन्तेरत्पूर्वस्य" bars "एकाजुत्तरपदे णः" &c. and not prior rules. But this being against भाष्य and Katyayana the author of Varttikas, is rejected. Thus the भाष्य writes "कुव्यवाये हादेशेष प्रतिषेधो वक्तव्यः" । किं प्रयोजनम् ? वृत्रघ्नः, स्रुघ्नः" । Similarly शार्ङ्गिन्,-यशस्विन् पूषन् &c. are declined. In यशस्विन् &c., इन् portion of विन् is not significant ( अर्थवान् ), so how can it come under the operation of the rule "इन्हन्—" &c. and the परिभाषा "अर्थवत् ग्रहणे नानर्थकस्य ग्रहणम्" standing in the way ? On this the परिभाषा is that "अन्, इन्, अस्, मस् etc. signify तदन्तविधि both significantly and not significantly as well" and it thus says that इन् of विन् &c. is to be regarded as significant. In ङि, the form is both अर्यम्नि and अर्यमणि owing to optionality of अल्लोप in ङि by the rule "विभाषा ङिश्योः" । Similarly both पूषणि and पूष्णि are correct in ङि ।

मित— । अत्र बालमनोरमा द्रष्टव्या यथा—"यदि अत्पूर्वस्य इत्यनेन 'हन्तेः' इति नत्वमेव व्यावर्त्तेत, तर्हि "हन्तेरत्पूर्वस्य" इत्येकमेव सूत्रं स्यात् । उपसर्गस्थात् निमित्तात् परस्य हन्तेरत्पूर्वस्य णत्वं इत्येतावतैव प्रघ्नन्तीत्यत्र नत्वनिवृत्तिसम्भवात् । अतो योगविभागसामर्थ्यात् णत्वमात्रस्या नियम इति विज्ञायते" । "एकाजुत्तरपदे—" इति णत्वं निवर्त्तते इत्यनेन "कुमति च", "प्रातिपदिकान्त—" इति सूत्रद्वयस्यापि व्यावर्त्तनग्रहणम् अत्र सिद्धम्, अस्य अत्रोपलक्षणत्वात् ॥ न चात्र "अचः परस्मिन् पूर्वविधौ" इति अल्लोपस्य पूर्वस्मादपि णत्वविधौ सति, अल्लोपस्य स्थानिवत्त्वसांनिध्य

वृतघ्नः इत्यत्र कुत्वं न इति वाच्यम्। "हो हन्तेः—" इति सूत्रेण नकारे परे कुत्व-विधिसामर्थ्यात् इदं ज्ञायते यदत्र अल्लोपः न स्थानिवत्; तदा सूत्रारम्भ एव व्यर्थः स्यात्, तदाह—"नकारे परे कुत्वविधिसामर्थ्यात्" इत्यादि। अतः वृत्रघ्नः इति नत्वाभावे कुत्वेन सिद्धम्॥ माधवस्तु 'वृत्रघ्न' इत्यादि "प्रातिपदिकान्त" इति सूत्रेण अत्र णत्वमपि साधयति। तन्मते "हन्तेरत्पूर्वस्य" सूत्रं, "एकाजुत्तरपदेणः" "कुमति च" इतिसूत्रद्वयस्य व्यावर्त्तकम्, नतु पूर्वगतस्य "प्रातिपदिकान्त—" इति सूत्रस्य। अतः वृत्रघ्नः इत्यत्र णत्वमपि साधुत्वेन द्रढ़यति। किन्तु भाष्यवार्त्तिकविरोधात् एतदुपेक्ष्यम्। तथा च भाष्ये—"कुव्यवाये हादेशेषु प्रतिषेधो वक्तव्यः"। किं प्रयोजनम्? वृत्रघ्नः स्रुघ्नः इत्यादि"। हन्तेरत्पूर्वस्य" इति सूत्रे "कुव्यवाये—" इतिवार्त्तिकात् अत्पूर्व-ग्रहणं न कर्त्तव्यम् इति हि भाष्यमतम् एवमत्र णत्वप्रकरणे हादेशकुव्यवाये सति प्रति-षेधवचनात् "प्रातिपदिकान्त—" इति णत्वमपि हादेशकुव्यवाये न भवति इति ज्ञायते। अतश्च माधवमतमग्राह्यम्। "अर्यम्णि अर्यमणि" इति "विभाषाङिश्योः" इति विकल्पात्॥ अन्यत्सुगमम्॥ अधुना मघवन्शब्दे विशेषंवक्तुमाह—

### ३६० । मघवा बहुलम् । ६।४।१२८ ॥

दी—। 'मघवन्' शब्दस्य वा 'तृ' इत्यन्तादेशः स्यात्। [ 'ऋ' इत्यस्य ] ऋ इत्।

Eng.—Easy.

मित—। "अर्वणः तृ असौ" (६।४।१२७) इत्यतः 'तृ' अनुवर्त्तते। 'मघवा इति षष्ठ्यर्थे प्रथमा। ततः आह—'मघवन्शब्दस्य' इत्यादि। एवम् मघवत् इति जाते सौ च परे आह—

### ३६१ । उगिदचां सर्वनामस्थानेऽधातोः । ७।१।७०॥

दी—। अधातोरुगितः नलोपिनोऽञ्चतेश्च नुमागमः स्यात् सर्वनाम-स्थाने परे। उपधादीर्घः। मघवान्। इह दीर्घे कर्त्तव्ये संयोगान्तलोपस्य असिद्धत्वं न भवति। बहुलग्रहणात्। तथा च "श्वन्नुक्षन्—" (उनादि-

सूत्र ) इति निपातनात्, ( धनपर्यायात् ) मघशब्दात् मतुपा च भाषायामपि शब्दद्वयसिद्धिम् आश्रित्य एतत्सूत्रं प्रत्याख्यातमाकरे। ( मघवान् इति दीर्घः। तदाह ) "हविर्जक्षिति निःशङ्को मखेषु मघवानसौ" इति भट्टिः। मघवन्तौ मघवन्तः। हे मघवन्। मघवन्तम्—मघवन्तौ—मघवतः। मघवता—मघवद्भ्याम् इत्यादि। तृत्वाभावे—मघवा। "छन्दसि ईवनिपौ" इति वनिबन्तं मध्योदात्तम् छन्दस्येव अन्तोदात्तं तु लोकेपि इति विशेषः। मघवानौ—मघवानः ( इत्यादि ) सुटिराजवत्।

नुम् is the augment of bases having उक् इत् (elision) at the end, of bases having the root अञ्चु with न elided from it at the end, when सर्वनामस्थान affixes follow. Thus in मघवन्त्+सु, सु elides by the rule "हल्ङ्याप् भ्यो—", then there is संयोगान्त लोप and the form is मघवन् which by उपधादीर्घ by the rule "सर्वनामस्थाने चासम्बुद्धौ" ( ६।४।८ ) becomes मघवान्। Owing to the force of बहुल in the dictum "क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव। विधेर्विधानं बहुधा समीक्ष्य चातुर्विधं :बाहुलकं वदन्ति"—here संयोगान्तलोप is not regarded as असिद्ध when उपधादीर्घ is to be made. If it be argued that let the form be मघवन् here, by adopting असिद्धत्व of संयोगान्तलोप, the author says that मघवान् with दीर्घ is adoptedby writers, thus Bhatti has "हविर्जक्षिति मखेषुमघवान्"। And Kaiyyata also in his भाष्यप्रदीप says that मघवान् is the form—it is got as मघवन् by निपातन् in the *unadi* Sutra "श्वन्नुक्षन्—" and as मघवत् by adding मतुप् after मघ meaning 'wealth'. And the base मघवत् with मतुप् becomes मघवान् (as दीर्घ) here ; उपधादीर्घ coming by the rule "अत्वसन्तस्य चाधातोः" ( infra ६।४।१४ )। So दीर्घ use as मघवान् is legitimate. Thus both मघवत् and मघवन् being got Kaiyyata rejects the sutra "मघवाबहुलम्" both in Vedic and classical languages there are seen, though

differing in स्वर only. In सुट् affixes i. e., in first विभक्तिप्रत्यय मघवन् without 'तृ' is like राजन् &c. Now as regards the form of मघवन् in शस् ( अस् ) we look forward—

मित—। उगिदचाम् सर्वनामस्थाने अधातोः इति छेदः। उक् इति प्रत्याहारः। उक् इत् येषां ते 'उगितः'। 'अचः' इति नलोपयुक्तस्य अञ्चु धातोः ग्रहणम्। 'अधातोः' इति 'उगित्' विशेषणम्। न तु अञ्चतेः, तस्य स्वभावादेव धातुत्वमात्रग्रहणात्। "इदितो नुम् धातोः" (७।१।५८) इत्यतः 'नुमः' अधिकारोऽत्र वर्त्तते; तदाह—"अधातोरुगितोः नलोपिनो अञ्चतेः" इत्यादि। एवम् 'मघवन्' इत्यस्य 'तृ' इत्यस्य ऋदित्वात् उगित्। ततः नुम्। ततश्च मघवन्त सु इति स्थिते हल्ङ्यादिना सुलोपः, संयोगान्त लोपः। मघवन् इति। ततः "सर्वनामस्थाने—" इति उपधादीर्घे कर्त्तव्ये असिद्धोपि संयोगान्तलोपो—"क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिधिकक्वः क्वचिदन्यदेव। विधेर्विधानं वहुधा समीक्ष्य चातुर्विधं वाहुलकं वदन्ति—" इति वहुलग्रहणात् अत्र नित्यो भवति। ततः मघवान् इति रूपसिद्धिः। न चात्र संयोगान्तलोपस्य असिद्धत्वमाश्रित्य मघवन् इति रूपं साधु इति वक्तुं शक्यम्। यतः दीर्घ प्रयोगः एव शिष्टसम्मतः, तथा च भट्टिः—"हविर्जक्षिति......मघवानसौ" इत्यादि। कैयटोपि भाष्यप्रदीपे मघवान् इति रूपं समर्थयामास; अपि चाह—मघवन् इति "श्वन्उक्षन्—" इति ऊणादि सूत्रेण सिध्यति, मघवत् इति तु धनपर्य्यायात् मघशब्दात् मतुपि भवति। मघवत्शब्दस्य सौ तु मघवान् इति रूपम् "अत्वसन्तस्य चाधातोः" इति दीर्घः। अनेन च "मघवन् मघवत्" इति शब्दद्वयस्य लाभे सति "मघवा वहुलम्" इति सूत्रं व्यर्थमेव इति कैयटस्य मतम्। किन्तु "मघवन् मघवत्" इत्यत्र स्वरादिभेदसत्त्वात् तावत् कैयटमतं चिन्त्यं॥ 'तृ' आदेशाभावे तु मघवा—मघवानौ इति राजवत्। सुटिति स्वादिपञ्चानां प्रत्याहारेणनिर्देशः अपि च मघवत्शब्दे यद्यपि स्वरविशेषः अस्ति न केवलं छन्दोगत एव किन्तु लोकेपि तदाह "छन्दसीवनिपौच" इति वनिवन्तं मध्योदात्तं छन्दस्येव। अन्तोदात्तं लोकेपि अस्ति" इत्यादि॥ शसि मघवन् अस् इति स्थिते "अल्लोपोनः" इति अल्लोपे च प्राप्ते आह—

३६२ । श्वयुवमघोनामतद्धिते । ६।४।१३३ ॥

दी—। अन्नन्तानां भसंज्ञकानामेषाम् अतद्धिते परे सम्प्रसारणं स्यात्। "सम्प्रसारणाच्च" ( सूत्र ३३० ) [ इति पूर्वरूपम् ] । ( ततः ) "आद्गुणः" । मघोनः । 'अन्नन्तानाम्' किम् ? मघवतः, मघवता । स्त्रियां मघवती ( अन्नन्ताभावात् न सम्प्रसारणम् ) । अतद्धिते किम् ? माघवनम् । मघोना-मघवभ्याम् इत्यादि ॥ शुनः । शुना—श्वभ्याम् इत्यादि ॥ 'युवन्' इति शब्दे वस्य उत्वे कृते—

The words श्वन्, युवन् and मघवन् ending in अन् and becoming a "भ" take सम्प्रसारण but not when तद्धित affixes follow. Thus मघवन् + अस् = मघ उ अन् + अस् । And by पूर्वरूप by the rule "सम्प्रसारणाच्च" the form is मघ उन् + अस् which by गुण by the rule "आद्गुणः" becomes मघोन् + अस् = मघोनः । Similarly we get मघोना । Why do we say अन्नन्तानाम् in the वृत्ति here ? Witness मघवतः &c, where मघवन् being not ending in अन्, सम्प्रसारण does not come in. Similarly in मघवती meaning मघवतः स्त्री, ङीष् comes by the rule "पुंयोगात् आख्यायाम्" । Here also मघवत् being not ending in अन् does not take सम्प्रसारण । Again why do we say अतद्धिते in the Sutra । Witness the form माघवनम् without सम्प्रसारण । मघवा देवता अस्य इति मघवन्+अण् = माघवन ( Here अण् coming by the rule "सास्य देवता" ) । Here in मघवन्+अण् though मघवन् is a "भ" and ends in अन् still we do not get सम्प्रसारण, for अण् is a तद्धित affix, and the Vritti says "अतद्धिते परे सम्प्रसारणम्" । The sentence "न वनी माघवनौ विनोदहेतुः" is also an instance on the point. So also—श्वन् + अस् becomes शुनः by सम्प्रसारण । And युवन् + अस् becomes यु उ अन् + अस् = यु उ न् + अस् ( by पूर्वरूप ) ; then we are to look forward—

मिध—। श्वा च युवा च मघवा च इति द्वन्द्वः। तेषाम्। "वसोः सम्प्रसारणम्" (६।४।१३१) इत्यतः सम्प्रसारणम् अनुवर्त्तते। 'भस्य' (६।४।१२९) इत्यधिकृतमन्त्यैव। "अल्लोपोऽनः" इत्युत्तरसूत्रात् अनः अपकृष्यते। [उत्तरसूत्रात् आनयनं नाम अपकर्षः]। तदपि श्वयुवमघोनाम् प्रत्येकं विशिषयति। ततः आह— 'अन्नन्तानां भसंज्ञकानाम्' इत्यादि। मघवन्+अस्=मघ उ अन्+अस् इत्यत्र पूर्वरूपार्थं वदति "सम्प्रसारणाच्च"। ततः मघउन् इत्यत्र "आद्गुणः" इति गुणः। एवं मघोनः, मघोना इत्यादि सिध्यति॥ सूत्रे अन्नन्तानां श्वादीनां इति व्याख्यानात् मघवतः इत्यत्र अन्नन्तत्वाभावात् सम्प्रसारणं न स्यात्। एवं मघवतः स्त्री मघवती ("पुंयोगादाख्यायाम्" इति ङीष्) इत्यत्रापि अन्नन्तत्वाभावात् सम्प्रसारणं न प्रवर्त्तते। तदाह—"अन्नन्तानां किम्। मघवतः"। इत्यादि॥ सूत्रे 'अतद्धिते' कथम् उक्तम्? मघवा देवता अस्य इति "सास्य देवता" इत्यणि कृते माघवनम्। अत्र मघवन् इति अन्नन्तत्वेऽपि तद्धितप्रत्ययसत्त्वात् न सम्प्रसारणम्॥ एवं श्वन्शब्दस्य सम्प्रसारणे सति शुनः शुना इत्यादि। युवन् शब्दस्य शसि वकारस्य सम्प्रसारणे, ततः पूर्वरूपे सति युउन्+अस् इति जाते पुनः यकारस्य सम्प्रसारणमाशङ्क्य आह—

**३६३। न सम्प्रसारणे सम्प्रसारणम्। ६।१।३७॥**

**दी—। सम्प्रसारणे परतः पूर्वस्य यणः सम्प्रसारणं न स्यात्। इति यकारस्य (सम्प्रसारणेन) न इत्वम्। अत एव ज्ञापकात् अन्त्यस्य यणः पूर्वं सम्प्रसारणम् (अन्यथा सम्प्रसारणनिषेधः व्यर्थः स्यात्)। यूनः। यूना—युवभ्याम् इत्यादि॥ अर्वा। हे अर्वन्।**

When a सम्प्रसारण follows then a prior यण् letter does not further take सम्प्रसारण। Thus here in युउन्+अस् there is no further सम्प्रसारण of यकार, and so य here does not become इकार। This very sutra thus suggests that we are first to make सम्प्रसारण of the last यण् letter. Hence युउन्+अस् becomes यूनः॥ The base अर्वन् in सु becomes अर्वा like the base राजन्। Its सम्बोधन thus is हे अर्वन्, as in राजन्। Then we look forward—

मित—। सुगमा ॥ ऋधातोः वनिपि अर्वन् शब्दः अश्वे योगारूढः। तथाच नैषधः "वाहैरलुप्यत सहस्रहृगर्वगर्वः"। अस्य सौ, संबुद्धौ च राजवत् रूपम्। तदाह—'अर्वा। हे अर्वन्'॥ अस्य अन्यत्र विशेषं दर्शयति—

**३६४। अर्वणस्त्रसावनञः। ६।४।१२७॥**

**दी—। नञारहितस्य 'अर्वन्' इत्यस्य अङ्गस्य 'तृ' इत्यन्त्यादेशः स्यात् न तु सौ। उगित्वान्नुम्। अर्वन्तौ—अर्वन्तः। अर्वन्तम्—अर्वन्तौ—अर्वतः ( शसो सर्वनामस्थानत्वाभावात् न नुम् )। अर्वता—अर्वद्भ्याम् इत्यादि। 'अनञः' किम्? 'अनर्वा' यज्ववत्।**

Of the base अर्वन् not preceded by नञ्, 'तृ' is ordered at the end when विभक्तिप्रत्यय other than सु ( 1st singular ) follows. This तृ being उगित् allows नुमागम when सर्वनामस्थान affixes follow ( as in the case of मघवा—see ante ). Thus अर्वन्तौ—अर्वन्तः &c. But शस् not being a सर्वनामस्थान affix, नुम does not come in and the form is अर्वतः—so on. Why do we say अनञः in the Sutra? Witness 'अनर्वन्' which does not thus being preceded by नञ् take 'तृ' and is declined like the base यज्वन्।

मित—। अर्वणः तृ असौ अनञः इति सूत्रच्छेदः। अविद्यमानः नञ् यस्य तस्य 'अनञः' नञरहितस्य इत्यर्थः। 'अनञः अर्वनः' इत्यन्वयः। न सु इति असु। तस्मिन्। अङ्गस्य इत्यधिकृतमस्ति। फलितमाह—'नञारहितस्य अर्वन् इति अङ्गस्य' इत्यादि॥ अन्यत् सुगमम्॥

[ "अलोन्त्यस्य" इति सूत्रे विहितः अन्त्यादेशः। स च अन्त्यस्य आदेशः इति व्याख्यायते। अतः 'अन्त्यादेशः इति यकारयुक्तः पाठः समीचीनः॥ पथिन्, मथिन् ऋभुक्षिन् इति नकारान्तानां विशेषं वक्ष्यन् आह—

**३६५। पथिमथ्यृभुक्षामात्। ७।१।८५॥**

**दी—। एषामाकारो अन्त्यादेशः स्यात् सौपरे। 'आ आत्' इति प्रश्लेषेण शुद्धाया एव व्यक्तेर्विधानात् नानुनासिकः।**

आकार is ordered at the end of the bases पथिन् मथिन् and ऋभुक्षिन् when सु follows. This आकार being in place of नकार, the अनुनासिक, should naturally be अनुनासिक by आन्तरतम्यता। But this is not the case here. For the explanation here is 'आ आत्।' So pure आ being enjoined it is not अनुनासिक by आन्तरतम्यता। Then we look forward—

मित—। "अलोऽन्त्यस्य" इत्यनेन अन्त्यस्य नकारस्य आकारः स्यात्। न च नकारस्य आन्तरतम्यात् अनुनासिक आकारः इह प्राप्नोति। यतः अत्र सूत्रे 'आ आत्' इति प्रश्लिष्यते शुद्धस्य आकारः विधीयते न तु अनुनासिक आकारः; एवं व्यक्तिनिर्देशोयम् न तु आकृतिनिर्देशः। अतः आह—"आ आत्" इति प्रश्लेषेण शुद्धाया एव "इत्यादि। अधुना अनेन सूत्रेण पथि आ ऋभुक्षि आ इति स्थिते आह—

### ३६६। इतोऽत्सर्वनामस्थाने। ७।१।८६॥

दी—। पथ्यादेरिकारस्य अकारः स्यात्सर्वनामस्थाने परे।

Eng.—Easy.

मित। सुगमा। एवं पथ आ मथ आ ऋभुक्ष आ इति जाते आह—

### ३६७। थो न्थः। ७।१।८७॥

दी—। पथिमथोस्थस्य न्थादेशः स्यात् सर्वनामस्थाने परे। पन्थाः—पन्थानौ—पन्थानः। पन्थानम्—पन्थानौ।

The थ of the base पथिन् and मथिन् becomes न्थ when सर्वनामस्थान affix follows. Thus we get the forms पन्थाः पन्थानौ &c.

मित—। थः न्थः इति छेदः। 'थः' थकारस्य इत्यर्थः। 'ऋतुक्षिन्' इत्यत्र थकारस्य असत्त्वात् तद्ग्रहणम् निवृत्तम्। पथिमथिग्रहणम् तु अनुवर्त्तते। आदेशे अकारः उच्चारणार्थः बोध्यः। ततः आह—पथिमथोः थस्य न्थादेशः स्यात् इत्यादि। एवं पथ आ इत्यादौ पन्थ आ = पन्थाः॥ "इतोत्—" इति पथन् मथन् ऋतुक्षन्।

"थोन्थः" इति पन्थन् मन्थन् ऋतुचन् "सर्वनामस्थाने चा—" इति उपधादीर्घ पन्थानौ मन्थानौ ऋतुचाणौ इत्यादि बोध्यम् ॥ अधुना भसि विशेषमाह—

३६८। तस्य टेर्लोपः। ७।१।८८ ॥

दी—। भसंज्ञकस्य पथ्यादेः टेर्लोपः स्यात्। पथः। पथा—पथिभ्याम् इत्यादि। एवं मन्थोः। ऋभुक्षः॥ स्त्रियां नान्तलक्षणे ङीपि भत्वात् टिलोपः—सुपथी नगरी। अमृभुक्षी सेना॥ आत्वं नपुंसके न भवति "न लुमता—" इति प्रत्ययलक्षणनिषेधात्। सुपथिवनम्। "सम्बुद्धौ नपुंसकानां नलोपो वा वाच्यः" (वार्त्तिक) हे सुपथिन्—हे सुपथि। "नलोपः सुप्स्वर—" इति नलोपस्य असिद्धत्वात् ह्रस्वस्य गुणो न॥ (नपुंसके) द्विवचने भत्वात् टिलोपः—सुपथि। शौ सर्वनामस्थानत्वात् सुपन्थानि। पुनरपि—सुपथि, सुपथी—सुपन्थानि। सुपथा। सुपथे—सुपथिभ्याम् इत्यादि।

Eng.—Easy.

मित—। "पथिमथ्यृभुक्षाम्" इति अनुवर्त्तते। तदाह—"भसंज्ञकस्य पथ्यादेः" इत्यादि॥ मन्थदण्डवाचि-मथिन्शब्दस्तु पथिन्शब्दवत्॥ ऋभुक्षिन् इन्द्रवाची। सौ आत्वं ततः इकारस्य अकारे च ऋभुक्षाः। अन्यत्र सर्वनामस्थाने इकारस्य आकारः उपधादीर्घश्च ऋभुक्षाणौ—ऋभुक्षाणः। ऋभुक्षाणम्—ऋभुक्षाणौ—ऋभुक्षः इत्यादि॥ सुशोभनः पन्थाः अस्याः इति बहुव्रीहौ "ऋन्नेभ्यः" इति नान्तलक्षणे ङीपि सति भत्वात् अनेन सूत्रेण टिलोपः। ततः सुपथी इति रूपसिद्धिः। एवमनृभुक्षी सेना॥ सु शोभनः पन्थाः अस्य वनस्य इति बहुव्रीहौ—सुपथि वनम्। अत्र नपुंसके स्वमोर्लुका लुप्तत्वात् "न लुमताङ्गस्य" इति प्रत्ययलक्षणं न स्यात्। ततः सौ विहितम् आत्वमपि न भवति, तदाह "नपुंसके आत्वं न भवति" इत्यादि॥ संबुद्धौ—हे सुपथि इति रूपे सति "एङ्ह्रस्वात्—" इति ह्रस्वलक्षणो गुणो न। यतः "नलोपः सुप्स्वर—" इति सूत्रेण अत्र नलोपः असिद्धः एव॥ नपुंसके द्विवचने 'शी' विहितः। तद्योगे भत्वात्—सुपथी। नपुंसकबहुवचने तु 'शि' सर्वनामस्थानमिति प्रागुक्तम्। ततः सर्वनामस्थानत्वात् थकारस्य न्थादेशे सति—सुपन्थानि। एवं नपुंसकद्वितीया-

यामपि ॥ सुपथा—सुपथिभ्याम् इत्यादि अन्यत्र पुंलिङ्गवत् ॥ इदमपि अत्र स्मर्त्तव्यम् —पथिन्शब्दस्य समासान्ते "तोयाधारपथाः" इति। बहुव्रीहौ समासान्ते "बहुपथा नगरी", तदभावे "सुपथी नगरी"। एवं बहुपथो जनपदः समासान्ताभावे तु सुपन्थाः जनपदः। नपुंसके समासान्ते बहुपथं वनम्। तदभावे—सुपथि वनम् ॥

अधुना नित्यबहुवचनान्तस्य पञ्चन् शब्दस्य रूपम् वक्तु मुपन्यस्यति—

**३६६। ष्णान्ता षट्। १।१।२४ ॥**

**वृ—। षान्ता नान्ता च संख्या षट्संज्ञा स्यात्। "षड्भ्यो लुक्"। पञ्च। पञ्च। संख्या किम्? विप्रुषः; पामानः॥ "शतानि, सहस्राणि"—इत्यत्र सन्निपातपरिभाषया न लुक्। सर्वनामस्थानसन्निपातेन कृतस्य नुमः तदविघातकत्वात्॥ पञ्चभिः। पञ्चभ्यः। पञ्चभ्यः। 'षट् चतुर्भ्यश्च' (सूत्र ३३८) इति नुट।**

Numeral bases ending in ष् and न are technically called as षट्। Thus the नान्त base पञ्चन् is a षट्। Then by the rule "षड्भ्यो लुक्" the विभक्ति प्रत्यय elide after षट्संज्ञक word. Thus पञ्चन्+जस्=पञ्चन्—(लुका लुप्तत्वात् प्रत्ययलक्षणाभावे उपधावृद्धिः न)। Then प्रातिपदिकान्त न elides and we get पञ्च। Why do we take संख्या in the vritti? Witness विप्रुषः (from the base विप्रुष्) and पामानः (from the base पामन्)। Here though the bases are षान्त and नान्त still these being not संख्यावाचक are not षट्संज्ञक, so विभक्ति प्रत्यय after these does not elide. Neuter bases शत and सहस्र take नुम् when शि follows (by the rules "जसशसोः शिः", "शि सर्वनामस्थानम्" and "नपुंसकस्य झलचः")। Thuswe get शतन् ई and सहस्रन् ई। Then by दीर्घ by the rule "सर्वनामस्थाने चासंबुद्धौ" we get शतानि and सहस्राणि। Here in the form शतन् इ and सहस्रन् इ the bases are नान्तसंख्या, and so विभक्तिप्रत्ययलोप (i. e, लोप of इ of शि) is to come. But that elision

does not come in owing to the सन्निपातपरिभाषा standing in the way. Thus the न् ( नुम् ) coming in connection with सर्वनामस्थान affix इ ( शि ) is not to destory that सर्वनामस्थान affix. Then पञ्चन् + भिः=पञ्चभिः by नलोपः by the rule "नलोपः प्रातिपदिकान्तस्य"। Lastly in पञ्चन्+आम्, नुट् comes by the rule "षट्चतुर्भ्यश्च" and the form is पञ्चन् +नाम। Now there is नलोप 'and this नलोप being असिद्ध, दीर्घ here by the rule "नामि" cannot come in, and we look forward—

मित—। "बहुगणवतिडति संख्या" ( १।१।२३ ) इत्यतः केवलं 'सङ्ख्या' इति अनुवर्त्तते, 'ष्णान्ता' इति स्त्रीलिङ्गनिर्देशात्। षश्च नश्च ष्णौ ( ष्टुत्वेन णः )। तौ अन्तौ यस्याः सा। 'सङ्ख्या' इत्यस्य विशेषणम्। तदाह—'षान्ता नान्ता च सङ्ख्या' इत्यादि; एवं पञ्चन्शब्दस्य षट्संज्ञायाम् पञ्चन्+जस् इति स्थिते "षड्भ्योलुक्" इति जस् लोपे पञ्चन् इति जाते पदान्त—प्रातिपदिकान्त—नलोपः। ततः पञ्च इति; सूत्रे संख्याग्रहणात् विप्रुष् पामन् इत्यादिशब्दानां षान्त—नान्तत्वेपि संख्यापरत्वाभावात् जस् लोपो न; ततः विप्रुषः पामानः इति। अतः आह—"संख्याकिम् ? विप्रुषः पामानः"॥ शत-सहस्रशब्दौ वहुवचनान्तौ नपुंसकविधौ। ततः "जस्शसोः शिः" "शिसर्वनामस्थानम्" "नपुंसकस्य झलचः" इति नपुंसके सर्वनामस्थाने शि इत्येतमुपजीव्य नुमिप्राप्ते शतन् शि ( इ ) सहस्रन् शि ( इ ) इति जाते एतयोः नान्तसंख्यात्वमाश्रित्य शिलोपः न कार्य्यः। तदा सन्निपातपरिभाषाविरोधः स्यात्। 'शि' इति सर्वनामस्थानमुपजीव्य प्रवर्त्तितः नुम् ( न् ), शिसर्वनामस्थानं न विघातयेत्। ततः शतानि सहस्राणि इत्यादि स्यात्॥ एवं पञ्चन्+भिः इत्यादौ नलोपे पञ्चभिः इत्यादि॥ पञ्चन्+ आम् इत्यत्र 'षट्चतुर्भ्यश्च' इति नुटिसति पञ्चन्+नाम् इति स्थिते नलोपे च पञ्च नाम् इति जाते अत्र नलोपस्य असिद्धत्वात् "नामि" इति दीर्घो न स्यात्; ततः वक्ष्यति—

**२७० । नोपधायाः । ६।४।७ ॥**

दी—। नान्तस्य उपधायाः दीर्घः स्यात् नामि परे। नलोपः। पञ्चा-

नाम्। पञ्चसु ॥ परमपञ्च। परमपञ्चानाम् ॥ गौणत्वे तु न लुग्नुटौ। प्रियपञ्चा—प्रियपञ्चानः। प्रियपञ्चाम्। एवं सप्तन् नवन् दशन्।

When नाम् follows then the उपधा of a नान्त base becomes lengthened. Thus पञ्चन्+नाम् becomes first पञ्चान्+नाम् yielding पञ्चानाम् with नलोपः। पञ्चन्+सु=पञ्चसु by नलोपः। When पञ्च is प्रधान then this is the declension as परमपञ्च, परमपञ्चानाम् &c. But when पञ्चन् in subordinate in बहुव्रीहि compounds then लुक and नुट् do not come in. Thus we get प्रियपञ्चानौ—प्रियपञ्चानः &c. Similarly सप्तन् नवन् and दशन् are declined.

मित—। 'न' इति लुप्तषष्ठीकम् पदम्। नस्य इत्यर्थः। तदन्तविधिना नान्तस्य इति चार्थः। "ढ्लोपे पूर्वस्य दीर्घोऽणः" इत्यतः दीर्घः वर्त्तते। "नामि" इति चास्ति। तदाह—"नान्तस्य उपधायाः दीर्घः स्यात् नामि परे" ॥ नलोपे सति दीर्घस्य असिद्धत्वात्, प्रथमं तावत् दीर्घः ततो नलोपः इति ॥ पञ्चन् शब्दस्य प्राधान्ये तु पञ्चवत् रूपम् यथा परमास्ते पञ्च च इति विग्रहे परमपञ्चन् शब्दे ॥ प्रियाः पञ्चयस्य इति बहुव्रीहौ पञ्चन्शब्दस्य गौणत्वे तु पञ्चवत् लुग्नुटौ न। "न तिसृचतसृ" इति सूत्रव्याख्यावसारे प्रियतिसृ इत्येतस्य गौणत्वे यथा तथाप्यत्र ॥ एवं सप्तन् नवन् दशन्।

अधुना अष्टन् शब्दस्य विशेषं कथयति—

## ३७१। अष्टन आ विभक्तौ। ७।२।८४ ॥

दी—। अष्टनः आत्वं स्यात् हलादौ विभक्तौ।

Eng.—Easy.

मित—। "रायो हलि" इति उत्तरसूत्रात् 'हलि' अपकृष्यते। उत्तरसूत्रात् आनयनम् अपकर्षणं नाम अपकर्षः इति प्रागुक्तम्। ततः आह—'अष्टनः आत्वं स्यात् हलादौ विभक्तौ'। अत्रापि शुद्धः एव आकारः। एवं व्यक्तिनिर्देशोऽयम् न तु आकृतिनिर्देशः। अत्र व्याख्याने 'हलि' इति अग्रहणे सति आमि परे विभक्तिमात्रे आत्वे कृते नान्तलाभाभावात् षट् संज्ञा। ततः "षट्चतुर्भ्यश्च" इति नुडपि न। तेन

अष्टाम् इति अनिष्टं रूपम् स्यात्। अतः व्याख्याने वृत्तौ 'हलि' ग्रहष्यते॥ जस्शसोस्तु ज्ञापकात् आत्त्वम् इति अनुपदं वक्ष्यते॥ वैकल्पिकञ्चेदम् आत्त्वम्। "अष्टनो दीर्घात्" (६।१।१७२) इति सूत्रे दीर्घग्रहणात् ज्ञापकात् इत्यपि वक्ष्यते॥

**३७२। अष्टाभ्य औश्। ७।१।२१॥**

**दी—। कृताकारात् अष्टनः परयोः जस्शसोः औश् स्यात्। 'अष्टभ्यः' इति वक्तव्ये कृतात्वनिर्देशः जस्शसोर्विषये आत्त्वं ज्ञापयति। 'वैकल्पिकं चेदमष्टन आत्त्वम्। "अष्टनो दीर्घात्" इति सूत्रे दीर्घग्रहणात् ज्ञापकात्। अष्टौ। अष्टौ॥ परमाष्टौ॥ अष्टाभिः। अष्टाभ्यः। अष्टाभ्यः। अष्टानाम्। अष्टसु॥ आत्त्वाभावे अष्ट अष्ट—इत्यादि पञ्चवत्॥ गौणत्वे तु आत्त्वाभावे राजवत्। (? तेन) शसि प्रियाष्ट्नः। इह पूर्वस्मादपि विधौ अल्लोपस्य स्थानिवद्भावात् न ष्टुत्त्वम्। कार्य्यकालपक्षे वहिरङ्गस्य अल्लोपस्य असिद्धत्वात् वा (न ष्टुत्त्वम्)। प्रियाष्ट्ना इत्यादि। जस्शसोरनुमीयमानम् आत्वं प्राधान्ये एव न तु गौणतायाम्। तेन प्रियाष्ट्नः (प्रियाष्टन् शब्दस्य इत्यर्थः) हलादावेव वैकल्पिकमात्वम्। प्रियाष्टाभ्याम्—प्रियाष्टाभिः। प्रियाष्टाभ्यः। प्रियाष्टाभ्याम्। "प्रियाष्ट्नो राजवत् सर्वं हाहावच्चापरं हलि॥" इति मान्ताः॥**

Of the base अष्टन् to which आकार is added औश् comes in place of जस् and शस्। In this sutra we have अष्टाभ्यः in place of the लघुनिर्देश अष्टभ्यः ; this implies that आत्व is to be enjoined when जस् and जस् are to be added. For authority says—this आत्व of अष्टन् is optional. Nor can it be argued that अष्टाभ्यः is used in persuance of the rule "अष्टन आ विभक्तौ"। That आत्व is to come after अष्टन् optionally is proved from the use of the word दीर्घात् in the sutra "अष्टनो दीर्घात्"। If this आत्व be compulsory then the use of दीर्घात् to prohibit its ह्रस्वान्त use of अष्टन् becomes unnecessary. So we

say that दीर्घग्रहण in the above sutra proves the optionality of आत्व in the matter of the base अष्टन्। Thus we get अष्टौ &c. अष्ट &c, is the form like those of पञ्चन् when आत्व does not come in. The base अष्टन् when subordinate in बहुव्रीहि समास as प्रियाष्टन्, is declined like the base राजन्। Thus in शस् we get प्रियाष्ट्नः। Here we do not get णत्व by ष्टुत्व in सन्धि, for अल्लोप here is असिद्ध i.e., is regarded as not taken place at all. Or—taking the view of कार्यकालत्व of संज्ञा and परिभाषा i.e., these are to be applied with reference to लक्ष्य, then also बहिरङ्ग अल्लोप is असिद्ध। So we get प्रियाष्ट्ना &c., without णत्व। The आत्व that is inferred in the matter of जस् is also to come when अष्टन् is प्रधान and not गौण (subordinate). So the base प्रियाष्टन् takes optional आत्व in हलादि विभक्ति only. Thus प्रियाष्टाभ्याम्—प्रियाष्टाभिः &c. So the final result is that the base प्रियाष्टन् is like राजन् when आत्व does not come and is like हाहा when आत्व comes. Here end नान्त bases.

मित—। "जस्शसो शिः" इत्यतः 'जश्शसोः' अनुवर्त्तते। 'अष्टा' इति गुरुनिर्देशः कृतात्वं ज्ञापयति। आत्वस्य वैकल्पिकत्वात् लघुनिर्देशे सम्भवत्यपि गुरुनिर्देशात् इदं ज्ञाप्यते। अतः आह—'अष्टभ्यः' इति वक्तव्ये कृतात्वनिर्देशः जस्शसोर्विषये आत्वं ज्ञापयति। "अष्टनः आ विभक्तौ" इति सूत्रसत्त्वात् प्रमाणिकगौरवस्य अदोषत्वाच्च गुरुनिर्देशः कृतः इति चेत्? मैवम्। यतः इदम् आत्वं वैकल्पिकमेव। अस्य वैकल्पिकत्वञ्च "अष्टनो दीर्घात्" (६।१।१७२) इति सूत्रे ह्रस्वव्यावृत्तये दीर्घग्रहणात् ज्ञाप्यते। तस्य सूत्रस्यायमर्थः:—दीर्घात् अष्टन्शब्दात् असर्वनामस्थान-विभक्तिरुदात्ता। यदि आत्वं नित्यं स्यात् तर्हि अष्टभिः इति ह्रस्वनिवारणाय दीर्घग्रहणमनर्थकं स्यात्। आत्वस्य विकल्पितत्वे तदभावपक्षे अष्टभिरिति ह्रस्वयुक्तव्यावर्त्त्यप्रसक्तत्वात् दीर्घग्रहणमर्थवत्। एवं दीर्घग्रहणात् अष्टन आत्वस्य वैकल्पिकत्वं ज्ञाप्यते एव। आत्वपक्षे—अष्टौ इत्यादि। तदभावपक्षे अष्ट इत्यादि पञ्चवत्॥ अष्टन् शब्दस्य बहुव्रीहौ गौणत्वे

सति आत्वाभावे राजवत्। प्राधान्ये तु आत्वम्॥ कार्य्यकालपक्षे इत्यादि वैकल्पिकम्। "यथोद्देशं संज्ञापरिभाषम्; कार्य्यकालं संज्ञापरिभाषम्" इति द्वौ पक्षौ। क्वचित् लक्ष्यानुरोधात् संज्ञापरिभाषे स्वोद्देशं परित्यज्य अन्यत्रापि आश्रीयेते। इति पक्षमाश्रित्य 'प्रियाष्ट्न:' इत्यत्र अल्लोपस्य वहिरङ्गस्यापि असिद्धत्वम् स्यात् ततः ष्टुत्वेन णत्वमेव न स्यात्। अल्लोपस्य स्थानिवत्त्वात् ष्टुत्वमपि न इति उक्तम्। अतः 'प्रियाष्ट्नः' इत्यत्र ष्टुत्वेन णत्वं न। संज्ञापरिभाषयोः यथोद्देशपक्षत्वं तु "न ङिसम्बुद्ध्योः" इति सूत्रावसरे राज्ञः इति रूपसिद्धिविषये व्याख्यातम्। तदपि द्रष्टव्यम्॥ प्रियाष्टन् शब्दस्य हलादिविभक्तौ आत्वम् वैकल्पिकम्। आत्वपक्षे हाहावत्। अनात्वपक्षे राजवत् रूपम्। तदाह—"प्रियाष्ट्नो राजवत् सर्वं हाहावच्चापरं हलि" इति। इति नान्ताः॥

अधुना धकारान्ताः निरूप्यन्ते। बुध + क्विप्=बुध् इति धकारान्तः शब्दः। अस्य सौ विशेषं दर्शयति—

**दी—। भष्भावः। जश्त्वचर्त्वे। भुत्—भुद्—बुधौ—बुधः। बुधा। भुद्भ्याम्। भुत्सु। इति धान्ताः।**

मित—। "एकाचो बशो भष्—" इति पदान्ते भष्भावः। ततः जश्त्वचर्त्वे। भुत्—भुद् इत्यादि॥

अधुना युज्शब्दस्य रूपदर्शनप्रसङ्गात् तद्व्युत्पत्तिं दर्शयति—

## ३७३। ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चाञ्च। ३।२।५९॥

**दी—। एभ्यः क्विन् स्यात्। अलाक्षणिकमपि किञ्चित् कार्य्यं निपातनात् लभ्यते। निरुपपदात् युजेः क्विन्। ['क्विन्' इत्यत्र] कनावितौ।**

These words are formed irregularly with क्विन्। कुत्व etc. though not regular in ऋत्विक्, दधृक etc. comes here owing to निपातन। निपातन allows some operation though not specifically mentioned in the sutra. युज् ( क्रुञ्च् also ) takes क्विन् though not preceded by any

उपपद। क and न in क्विन् are इत्। वि only remains which also will elide being अपृक्त। Thus युज्+क्विन् gives the प्रातिपादिक—युज्; and we look forward for declension.

मित—। अञ्चेः सुपि उपपदे, युजिक्रुञ्चोः, केवलयोः क्रुञ्चेर्न लोपाभावश्च निपात्यते। निपातनवशाच्च 'अलाक्षणिकम्' सूत्रे अविहितम् अपि [ लक्षणानि सूत्राणि इत्यर्थात् ] किञ्चित्कार्य्यं लभ्यते यथा 'ऋत्विज' इत्यादौ "व्रश्च—" इति षत्वापवादः कुत्वम् इत्यादि॥ इदमपि अत्र द्रष्टव्यम् ऋतुं यजति इत्येवमादिषु वाक्येषु क्विन्। सकर्मकत्वेऽपि उपपदस्य नियमो निपात्यते। धृष्णोतीति क्विन् दधृक्। द्विर्वचनादिकं निपात्यते। स्रजन्तितामिति क्विन्; क्विनि प्रत्ययेऽमागमश्च निपात्यते—स्रक्। दिशन्तितामिति कर्मणि क्विन् निपात्यते—दिक्। उत्स्निह्यतीति क्विन्। तिलोपषत्वादिकं निपात्यते—उष्णिक्। प्राञ्चति इति सुम्भावे क्विन् निपात्यते—प्राङ्; एवं प्रत्यङुदङ्ङादयः। युनक्तीति केवलात् क्विन् निपात्यते युङ्। क्रुञ्चतेः इति केवलात् क्विन् नलोपाभावश्च निपात्यते क्रुङ्॥

## ३७४। कृदतिङ्। ३।१।९३॥

**दी—। सन्निहिते धात्वधिकारे तिङ्भिन्नः प्रत्ययः कृत्संज्ञः स्यात्।**

In the jurisdiction of धातु, affixes other than तिङ् are called कृत्। Thus क्विन् is a कृत् affix; and then क्विन्नन्त words are प्रातिपदिक by the rule "कृत्तद्धितसमासाश्च"।

मित—। 'क्विन' इत्यत्र ककारनकारौ इतौ। ततः वि इतिस्थिते इकारः उच्चारणार्थः। एवं तस्य लोपे जाते 'व्' इतिस्थिते आह—

## ३७५। वेरपृक्तस्य। ६।१।६७॥

**दी—। अपृक्तस्य वस्य लोपः स्यात्॥ "कृत्तद्धित—" इति (युज् इत्यस्य) प्रातिपदिकत्वात् स्वादयः।**

An अपृक्त-व elides. Th[illegible] the remainder of वि after इकार लोप,

elides by this rule and we get युज् only which as already said is a प्रातिपदिक by the rule "कृत्तद्धित—" ।

मित—। एवं युज् व् इत्यत्र वलोपे युज् इति जातम्। तच्च क्वदन्तत्वात् "कृत्तद्धित—" इति प्रातिपदिकः। ततः युज्+सु इति जाते आह—

**३७६ । युजेरसमासे । ७।१।७१ ॥**

**दी—। युजेः सर्वनामस्थाने नुम् स्यादसमासे। सुलोपः। संयोगान्त लोपः ( सूत्र ५४ )।**

नुम् is ordered in the base युज् when not compounded and when सर्वनामस्थान affixes follow. Thus in युज् सु we have नुम् yielding युन् ज् सु, and सु elides by "हल्ङ्याब्भ्यो—" । Then by संयोगान्तलोप 'ज' also elides and the result is युन्।

मित—। "उगिदचाम् सर्वनामस्थाने चाधातोः" इत्यतः सर्वनामस्थाने वर्त्तते; "इदितो नुम् धातोः" इति सूत्रात् नुम् वर्त्तते च। अतः आह—"युजेः सर्वनामस्थाने" इत्यादि॥ असमासे कथमुक्तम्? सुष्टु युनक्ति इति क्विपि उपपदे समासे सुयुज्सु इति स्थिते न नुम्। क्विन् अत्र न भवति केवलस्य युजेः क्विन् विधानात्, किन्तु क्विप् एव भवति। ततः "चोः कुः" इति कुत्वे सुलोपे सुयुक्—सुयुग् इति जायते इति सर्वमेतत् उत्तरत्र वक्ष्यते॥ प्रकृते तु युज् सु इत्यत्र नुमि युन्ज् सु इति जाते, हल्-ङ्यादि सुलोपे संयोगान्तलोपे च 'युन्' इति स्थिते आह—

**३७७ । क्विन्प्रत्ययस्य कुः । ८।२।६२ ॥**

**दी—। क्विन् प्रत्ययो यस्मात् तस्य कवर्गोऽन्त्यादेशः स्यात् पदान्ते। नस्य कुत्वेन अनुनासिको ङकारः। युङ्। "नश्चापदान्तस्य झलि" इति नुमोऽनुस्वारः। परसवर्णः। तस्यासिद्धत्वात् "चोः कुः" (सूत्र ३७८) इति कुत्व न। युञ्जौ—युञ्जः। युञ्जम्—युञ्जौ—युजः। युजा—युग्भ्याम् इत्यादि॥ (पूर्वसूत्रे) असमासे किम्?** सुयुज् इति क्विपि उपपदसमासे 'सुयुज्' इति जाते सौ—नुम् न स्यात्। ततः क्विमित्याह—

When final in a पद, a base to which the affix क्विन् is added takes कवर्ग at the end. Thus in युन् which is क्विन् प्रत्ययान्त takes कवर्ग at the end giving युङ्। Here nasal ङ comes by कुत्व, for 'न्' of युन् in nasal. Then in युन्ज् औ the 'न्' becomes अनुस्वार by the rule "नश्चापदान्तस्य झलि" ( ante ) and this अनुस्वार becomes nasal ञ् by परसवर्ण by the rule "अनुस्वारस्य ययि परसवर्णः" ( ८।४।५८ ) । Now this परसवर्ण is असिद्ध being later with regard to the operation of the rule "चोः कुः ( ७।२।३० ) which is earlier in the order of अष्टाध्यायी, so we do not get कुत्व here, and the result is युञ्जौ ; युञ्जः &c. Why do we say असमासे in the prior rule "युजेरसमासे" ? Witness the base सुयुज् ( with क्विप् and उपपदतत् ) where नुम् does not come (in सु) । And for the form in सुयुज्+सु ( which is क्विबन्त, क्विन् being after युज—not preceded by any उपपद ) we look forward—

मित—। "झलां जशाऽन्ते" इत्यतः अन्ते अनुवर्त्तते । 'क्विन्प्रत्ययस्य' इति व्याख्यायते—'क्विन् प्रत्ययोयस्मात् तस्य' इति ॥ एवं युन् इति अनुनासिक 'न्' इत्यस्य कुत्वेन अनुनासिक ङकारः एव स्यात्, ततः 'युङ्' इति रूपसिद्धिः । युज्+औ इत्यत्र नुमा युन्ज्+औ इति जाते 'न्' इत्यस्य "नश्चापदान्तस्य—" इति सूत्रेण अनुस्वारे सति युंज औ इति जाते, ततः "अनुस्वारस्य ययि परसवर्णः" ( ८।४।५८ ) इति परसवर्णेन युञ्ज् औ इति स्थितम् । अस्य परसवर्णस्य परत्वात् "चोः कुः" ( ८।२।३० ) इति कुत्वं प्रति असिद्धः एव । "त्रिपद्यामपिपूर्वं प्रति परं शास्त्रमसिद्धम्" इति "पूर्वत्रासिद्धम्" ( ८।२।१ ) इति सूत्रे व्याख्यानसत्वात् । ततः यञ्जौ इत्यादि भवति ॥ पूर्वसूत्रे असमासे कथं कथितम् ? समासे सुयुज् शब्दे नुम् यथा न स्यात् इत्यर्थम् इति प्रागुक्तम् ॥ सुयज्+सु इत्यत्र क्विन्प्रत्ययाभावात् कुत्वे अप्राप्ते अन्यसूत्रेण तदेव कुत्वं विधीयते—

**३७८ । चोः कुः । ८।२।३० ।**

**दी—। चवर्गस्य कवर्गः स्यात् झलि पदान्ते च । इति कुत्वम् ; "क्विन् प्रत्ययस्य—" इति कुत्वस्यासिद्धत्वात् । सुयुक्—सुयुग्, सुयुजौ—सुयुजः ।**

("यूजेरसमासे' इत्यादि सूत्रे ) युजेः इति धातुपठितेकारविशिष्ट—स्यानुकरणम् न तु इका निर्देशः तेनेह न (युजिग्रहणात् इकशून्यस्य युज-धातोः नुम् न)। युज्यते समाधत्ते इति युक्। "युजसमाधौ" दैवादिके आत्मनेपदी॥ (खजि इति धातोः इदित्वान्नुमि खञ्ज इति धातोः क्विपि खञ्ज् इति प्रातिपदिकम्। अस्य सौ सुलोपे ततः—) संयोगान्तलोपः। खन्—खञ्जौ—खञ्जः इत्यादि। (राजधातोः क्विपि राज्शब्दः तस्य रूपाण्याह—) "व्रश्च—" इति षत्वम्। जश्त्वचर्त्वे। राट्-राड, राजौ, राजः। राट्त्सु—राट्सु। एवं विभ्राट्॥ (देवेज्शब्दमाह—) देवेट्—देवेजौ—देवेजः॥ विश्वसृट्—विश्वसृजौ—विश्वसृजः। इह 'सृजियुज्योः कुत्वं न' (भाष्य प्रयोगात्) इति क्लीवे वक्ष्यते॥ परिमृट् (परिमृज्शब्दे व्रश्चादिना षत्वम्)॥ षत्व-विधौ राजिसाहचर्य्यात् "टुभ्राजि दीप्तौ" इति फणादिरेव गृह्यते। यस्तु एजृ भ्रेजृ भ्राजृ दीप्तौ' इति तस्य कुत्वमेव। विभ्राक्—विभ्राग्। विभ्राग्-भ्याम् इत्यादि॥ "परौ व्रजेः षः पदान्ते"—पराबुपपदे व्रजेः क्विप् स्यात् दीर्घश्च पदान्तविषये षत्वं च। परित्यज्य सर्वं व्रजतीति परिव्राट्—परिव्राजौ—परिव्राजः।

कवर्ग is ordered in place of चवर्ग when झल् letter follows or when at the end of a पद। Thus सुयुज्+स् with elision of सु by "हल्ङ्याब्भ्यो—" gives सुयुक् and सुयुग् by कुत्व। The rule "क्विन्प्रत्ययस्य कुः" is explained as क्विन्प्रत्ययो यस्मात्, and now if in सुयुज् we say that युज् has elsewhere क्विन् after it in युज्, so it should take कुत्व by the rule—"क्विन्प्रत्ययस्य कुः"; on this the author says that the rule—"क्विनप्रत्ययस्य—' is regarded as असिद्ध when कुत्व by the present rule is being done. So कुत्व after सुयज् is by the rule "चोः कुः"। युजि in the rule "युजे रसमासे" &c. is इकारयुक्त युजि of the धातुपाठ and not mere enumeration by इ here. So the root युज् without इ does not come under the purview of the rule "युजेरसमासे" &c. Hence युज

समाधौ with क्विप् gives युज् without नुम् by the rule "युजेरसमासे"। The root खञ्ज (from खजि+इदित्वात् नुम्) with क्विप् gives खञ्ज्; by संयोगान्तलोप after सुलोप gives खन् in 1st case singular. The base राज् (from राजृदीप्तौ+क्विप्) is declined as राट्-राड्, &c.—here षत्व coming by the rule "व्रश्च—" &c. (rule 294). Similarly विभ्राज् and देवेज् (देवान् यजते इति क्विपि सम्प्रसारणे सति देवेज्-शब्दः) are declined as विभ्राट्, देवेट् &c.—(व्रश्चादिना षत्वम्)। Similarly विश्वसृट from विश्वसृज् is declined. Here कुत्व by the rule "क्विन्प्रत्ययस्य कुः" cannot come, for भाष्यकार uses रज्जुसृट् &c. and this will be said in declension of neuter consonant bases. The base परिसृज् also has षत्व by व्रश्चादिसूत्र, भाज् of the फणादि class in taken owing to its connection with the root राज् of that class. भ्राज् from the root "एजृ भ्रेजृ भ्राजृ दीप्तौ" however takes कुत्व by the rule "चोः कुः"। Thus विभ्राक् &c. is got. The root व्रज् with पर as its उपपद takes क्विप् and the base then becomes lengthened, and in पदान्त the base takes षत्व as well by the Varttika "परौ व्रजेः षः पदान्ते"। Thus the base परिव्राड् is declined as परिव्राड् &c., with षत्व and जश्चत्व। By षत्व परिव्राड् is also got as in राट् and राड् above. Hence here "चोः कुः" does not operate.

मित—। सुगमा—॥ विश्वसृट इत्यादि षत्वमेतत् "क्विनप्रत्ययस्य कुः" "चोः कुः" इत्युभयोरपवादः रज्जसृड्भ्याम् इति भाष्यप्रयोगात्। अन्यथा "चोः कुः" इति; क्विन् प्रत्ययेति वा कुत्वं स्यात्; विधाता विश्वसृग्विधिः इति कैषाश्चिदमरे अपपाठः॥ विश्वस्मिन् राजते इति। विश्व+राज्+क्विप् ("सत्सुद्विष—" इति सूत्रेण क्विप्)= विश्वराज्। अथ रूपविषये विशेषमाह—

## ३७६। विश्वस्य वसुराटोः। ६।३।१२८॥

दी—। विश्वशब्दस्य दीर्घोऽन्त्यादेशः स्यात् वसौ राट्शब्दे च परे।

विश्वं वसुः यस्य स विश्वावसुः। 'राडिति' पदान्तोपलक्षणार्थम्। चर्त्त्वम-विवक्षितम्। विश्वाराट्—विश्वाराड्, विश्वराजौ—विश्वराजः। विश्वा-राड्भ्याम् इत्यादि।

दीर्घ is ordered at the end of the base विश्व when वसु or राट् follows. Thus विश्वं वसुः यस्य gives विश्वावसुः। The word 'राट्' here in the sutra is taken as the पदान्त of the word राज् in विश्व-राज्। And by taking राट् only चर्त्त्वयुक्त is not meant, but जश्त्वयक्त—'राड्' is also taken, so the auther says "चर्त्त्वमविवक्षितम्" (i. e. चर्त्त्व only is not intemded here). Thus we get विश्वाराट् and विश्वाराड् and विश्वाराड्भ्याम् &c.

मित—। चर्त्त्वमिति सूत्रे; 'वसुराटोः' इत्यत्र 'राट्' ग्रहणम् न केवलम् चर्त्त्व-युक्तस्य उपलक्षणम्, किन्तु जश्त्वयुक्तस्य 'राड्' इत्यस्यापि। व्याख्यानात् एवं ज्ञायते॥ विश्वाराट् इत्यादि। अत्र व्रश्चादिसूत्रेण षत्वम्। ततः जश्त्वचर्त्त्वे। इमदप्यत्र द्रष्टव्यम्—"यद्यपि वं मादिक" व्रश्च—" इति षत्वं "चोः कुः" इति कुत्वात् परम्। तथापि चवर्गान्त व्रश्चादि—विषये षत्वमपवादत्वात् नासिद्धम्"— इति बालमनोरमा॥ भ्रज्जतीति क्विपि "ग्रहिज्या—" (६।१।१६) इति सम्प्रसारणाच्च" इति रेफस्य ऋकारः इत्यर्थः। पूर्वरूपे चुत्वे च भृज् इति प्रातिपदिकम्। अस्य सौ विशेषमाह—

३८० । स्कोः संयोगाद्योरन्ते च । ८।२।२९ ॥

दी—। पदान्ते झलि च परे यः संयोगः तदाद्योः सकार—ककारयोः लोपः स्यात्। भृट्—भृड्। सस्य श्चुत्त्वेन शः। तस्य जश्त्वेन जः—भृजौ—भृजः॥ "ऋत्विग्—" इत्यादिना ऋतावुपपदे यजेः क्विन्। क्विन्नन्तत्वात् कुत्वम्। ऋत्विक्—ऋत्विग्, ऋत्विजौ—ऋत्विजः॥ "रात्सस्य" (सूत्र २८०) इति नियमात् न संयोगान्तलोपः। ऊर्क्—ऊर्ग्, ऊर्जौ, ऊर्जः॥ इति जान्ताः॥

At the end of a पद or when a झल् letter follows, then स् or क् elides if these are leading letters of a final compound consonant ( संयुक्तवर्ण )। Thus in भ्रस्ज् स् leads in the final संयुक्तवर्ण and it elides leaving भ्रज् ( "ग्रहिज्या—" इति रेफस्य ऋकारः सम्प्रसारणेन ) which become भृष् by व्रश्चादिसूत्र yielding finally भृड् by जश्त्व and भृट् by चर्त्व। In भ्रस्ज् औ the स् by श्चुत्व becomes श्, and the श् becomes ज् by the rule "झलां जश् झशि" ( ८।४।५३ ) yielding finally भृज्जौ ; similarly भृज्जः is got. Now the base ऋत्विज् is being enumerated. It is derived as ऋतौ यजते इति ऋतु + यज + क्विन् ; here क्विन् coming by the rule "ऋत्विग्दधृक्—" &c ( ante ). Then in ऋत्विज् सु ( स् ), स् elides by the rule "हल्ङ्याब्भ्यो—" and final ज् becomes क् by the rule "क्विन्प्रत्ययस्य कुः"। Thus the form is ऋत्विक्। Now the base ऊर्ज् is being declined. Here संयोगान्तलोप does not take place owing to the prohibion in the rule "रात्सस्य" ( see and rule 240 ) so we get ऊर्क् ऊर्ग् &c.

मित—। "झलो झलि" ( ८।२।२६ ) इत्यतः 'झलि' अनुवर्तते "संयोगान्तस्य-लोपः" ( ८।२।२३ ) इत्यतः लोपः वर्त्तते। 'पदस्य' इत्यधिकृतमस्त्येव। स् च क् च स्कौ ; तयोः। 'संयोग' इति लुप्तषष्ठीकं पृथक् पदम्। "सः संयोगः तदाद्योः इति व्याख्यानात् अवगम्यते। फलितमाह—"पदान्ते झलि च परे य संयोगः तदाद्योः सकारककारयोः लोपः स्यात्"। स्कोर्लोपः संयोगान्तलोपं बाधते, अन्यथा तद्वैयर्थापत्तेः। भृज्जतीति क्विपि "ग्रहिज्या—" इति सम्प्रसारणम्। "स्कोः—" इति सलोपः। "व्रश्च—" इति जस्य षः। जश्त्वेन डः। "वावसाने" इति चर्त्व-विकल्पे—भृट्॥ भृसज् औ इत्यत्र सस्य श्चुत्वेन शः। "झलां जश् झशि" इति शस्य जः— भृज्जौ इति॥ "ऋत्विग्दधृक्—" इति सूत्रेण ऋतौ उपपदे यजधातोः क्विनि ऋत्विज् इति प्रातिपदिकम्। अस्य सौ 'क्विन्प्रत्ययस्य कुः" इति कुत्वे सति ऋत्विग्—ऋत्विक् इत्यादि॥ "ऊर्ज् बलप्राणनयोः इति प्रातिपदिकम्। अस्य संयो-

गान्तलोपः न स्यात् "रात्सस्य" ( सूत्र २८० ) इति निषेधात्। ततः "चोः कुः" इति कुत्वेन ऊर्क्—ऊर्ग् इत्यादि सिध्यति। इति जान्ताः॥

अधुना दकारान्ताः निरूप्यन्ते—त्यद्शब्दः तत्शब्दपर्यायः। अस्य सौ—"त्यदादीनामः" इति अकारे अन्त्यादेशे सति त्य अ इति जाते "अतो गुणे" इति पररूपादेशे च त्य+सु ( स् ) इति जातम्, अतः आह—

दी—। त्यदाद्यत्वं पररूपत्वं च।

**३८१। तदोः सः सावनन्त्ययोः। ७।२।१०६॥**

**दी—। त्यदादीनां तकारदकारयोः अनन्त्ययोः सः स्यात् सौ परे। स्यः। त्यौ—त्ये। त्यम्—त्यौ—त्यान्॥ सः—तौ—ते। परमसः—** ( प्राधान्ये अपि आदेशः भवति ) **परमसः परमतौ—परमते॥** ( "त्यदादीनामः" इति त्यदादिना द्विपर्य्यन्तानामेवेष्टिः इति प्रागुक्तम्। तदपि "तदोः सः—" इत्यत्र अनुवर्त्तते तदाह— ) **द्विपर्य्यन्तानामित्येव। नेह—त्वम्॥ न च** ( "त्वाहौसौ" इत्यत्र ) **तकारोच्चारणसामर्थ्यात् नेति वाच्यम्** ( **द्विपर्य्यन्तानाम् इति अत्र न वर्त्तते इति वाच्यम् इत्यर्थः** )। ( **'त्वाहौसौ इत्यस्य इत्यर्थः'** ) **अतित्वम् इति गौणे** ( **तकारोच्चारणस्य** ) **चरितार्थत्वात्** ( द्विपर्य्यन्तानाम् इत्यननुवृत्तौ 'त्वम्' इत्यत्र सत्वं स्यात्। "त्वाहौसौ" इति सूत्रे तकारोच्चारणम् गौणे अतित्वम् इत्यत्र सार्थकञ्च भवेत्। सञ्ज्ञायां गौणत्वे सत्त्वस्य सर्वाद्यन्तगणकार्य्यत्वेन अप्रवृत्तेः "त्वाहौसौ" इति सूत्रे तकारोच्चारणस्य अतित्वम् इति गौणत्वे लब्धप्रयोजनत्वाच्च 'द्विपर्य्यन्तानाम्' इत्यग्रहणे त्वम् इत्यत्र सत्वं तु स्यादेव। तदाह "अतित्वम् इति गौणे चरितार्थत्वात्। ततः आह— )। **संज्ञायां गौणत्वे चास्त्वसत्त्वे न।** (संज्ञयामुदाहरयति—) **त्यद्—त्यदौ—तदः। अतित्यद्—अतित्यदौ—अतित्यदः॥ य—यौ—ये॥ एषः—एतौ—एते॥ अन्वादेशे तु एनम्—एनौ—एनान्। एनेन। एनयोः। एनयोः॥**

Of words of त्यदादि class तकार+दकार not at the end changes into सः। Thus त्य+सु becomes स्यः ( by तकार being replaced by

स )। Similarly तद्+सु=सः this replacenent holds also when त्यद् or तद् &c. is prominent though in compounds, so we get परमसः &c. In the sutra "त्यदादीनामः", the counting is up to the word द्वि by the वार्त्तिक "द्विपर्य्यन्तानामवेष्टिः", and this comes down in this present rule also. So in त्वम् which is read after द्वि, त does not change into स। Nor can it be argued that owing to the force of तकारोच्चारण in the सूत्र "त्वाहौ सौ" सत्व does not take place by the present rule in the case of त्वम्, and the taking of द्विपर्य्यन्तानाम् in the rule "त्वाहौसौ" being significant in the cases of अतित्वम् where 'त्वम्' being subordinate ( गौण ) can not take सत्व by the rule ; we hold that सत्व will take place in the case of त्वम् if द्विपर्य्यन्तानाम् is not taken into account in the present sutra. When words of the त्यदादिगण denotes designation or when these words are गौण ( subordinate ) in compounds then अत्व by the rule "त्यदादीनामः" or सत्व by the present rule will not take place. Thus decline त्यद्—त्यदौ &c. when त्यद् denotes संज्ञा ; so also decline :अतित्यद्—अतित्यदौ &e when त्यद् is गौण ॥ ...to denote अन्वादेश ( subsequent assertion ) एन is ordered in place of एतद् in द्वितीया, तृतीया singular etc by "द्वितीया टौस्स्वेनः" ।

मित—। "त्यदादीनामः" इत्यतः 'त्यदादीनाम्' वर्त्तते। तदाह—"त्यदादीनाम् तकारदकारयोः" इत्यादि ॥ अत्रसूत्रे अनन्त्ययोरिति उक्तत्वात् "त्यदादीनामः" इत्यनेन , विप्रतिषेधपरिहारः, भिन्नविषयताप्रतिपादनात्। अकृते अनन्त्यग्रहणे संबुद्धौ तदसु इत्यत्र विप्रतिषेधे तस्सु इति जाते सस्स इति सुलोपे हेसः इति च प्रसज्यते। भाष्ये तु हेस इति दृश्यते इत्यास्तां तावत् ॥ द्विपर्य्यन्तानाम् इत्यादि—व्याख्यानं तु दीक्षितलिखनावसरे प्रुद्राचरेण उक्तम् ॥

अधुना दान्तयोः युषद्—अस्मद् शब्दयो :विशेषं वदति—

३८२ । ङे प्रथमयोरम् । ७।१।२८ ॥

दी—। युष्मदस्मद्भ्यां परस्य ङे इत्येतस्य प्रथमाद्वितीययोश्च अमादेशः स्यात् ।

अम् is ordered after the bases युष्मद् and अस्मद् in the 1st and 2nd cases and in ङे ( i. e, fourth case singular affix ).

मित—। "युष्मदस्मद्भ्यां ङसोऽश्" (७।१।२७) इत्यतः 'युष्मदस्मद्भ्याम्' वर्त्तते। 'ङे' इत्यविभक्तिको निर्द्देशः; व्याख्यानात् 'ङे' इति लुप्तषष्ठीकम् इति बोध्यम्। प्रथमयोः इति प्रथमाद्वितीयाविभक्त्योर्लक्षणा। तदाह—"युष्मदस्मद्भ्यां परस्य ङे इत्येतस्य" इत्यादि। ततः युष्मद् अम् अस्मद् अम् इति स्थिते आह—

३८३ । मपर्य्यन्तस्य । ७।२।९१ ।

दी—। इत्यधिकृत्य ।

This is an अधिकार सूत्र ।

मित—। सुगमा ।

३८४ । त्वाहौ सौ । ७।२।९४ ॥

दी—। युष्मदस्मदोर्मपर्य्यन्तस्य त्व अह इत्येतावादेशौ स्तः सौपरे ।

त्व and अह are respectively ordered in place of the bases युष्मद् und अस्मत् including up to its मकार, when सु follows.

मित—। युष्मदस्मदोः यथाक्रमं मपर्य्यन्तस्य 'त्व अह' आदेशौ भवतः सौ परे इति वचनात् 'युष्म' इत्येतस्य त्व, 'अस्म' इत्येतस्य अह आदेशः। अन्त्योऽकारः उच्चारणार्थः। स्थान्यादेशौ द्वावपि हलन्तौ। तेन त्वद् अहद् इति जाते, 'अम्' इति स्थिते च आह—

३८५ । शेषे लोपः । ७।२।९० ॥

दी—। आत्वयत्वनिमित्तेतरविभक्तौ परतः युष्मदस्मदोरन्त्यस्य लोपः स्यात्। "अतो गुणे"। "अमि पूर्वः" (सूत्र १९४)। त्वम्। अहम् ॥

ननु 'त्वं स्त्री' 'अहम् स्त्री' इत्यत्र 'त्वअम्' 'अह अम्' इति स्थिते अमि पूर्वरूपं परमपि बाधित्वा अन्तरङ्गत्वात् टाप् प्राप्नोति। सत्यम्। "अलिङ्गे युष्मदस्मदी"। तेन स्त्रीत्वाभावात् न टाप्। यद्वा शेषे इति सप्तमी स्थानिनोऽधिकरणत्वविवक्षया। तेन मपर्य्यन्तात् शेषस्य 'त्वद्' इत्यस्य लोपः स्यात्। स च ("शेषेलोपः" इति च इत्यर्थः) परोऽपि अन्तरङ्गे अतो गुणे कृते प्रवर्त्तते। अदन्तत्वाभावात् न टाप्॥ परमत्वम्। परमाहम्। अतित्वम्। अत्यहम्।

The final portion of युष्मद् and अस्मद् elides when विभक्तिप्रत्ययस other than which direct आत्व and यत्व follows. Thus in त्वद् अम and अहद् अम् we get त्व अम् and अह अम् by अन्त्यलोप by this rule. Then the rules "अतोगुणे" directs पररूप here & no दीर्घ also can come in by the rule "अमिपूर्वः" ( No. 194 ante ). And finally we get त्वम् and अहम्। Now a question arises here:—In the case of त्वं स्त्री and 'अहं स्त्री', त्वम् and अहम् are feminines, so in the formation of त्वम् and अहम् i.e, in त्व अम् and अह अम्, पूर्वरूपादेश by the rule "अमिपूर्वः" though later in the order of अष्टाध्यायी can not come in, for टाप् the feminine affix is अन्तरङ्ग here, and being अन्तरङ्ग it prevails over even परसूत्र। This is a reasonable argument indeed. But भाष्यकार under the rule "साम आकम्" says that युष्मद् and अस्मद् have no separate genders i. e, they are same in all genders. So युष्मद् and अस्मद् not being feminine bases टाप् must not come in here. Or—take सप्तमी in शेषे of this rule in the sense of षष्ठी, then the meaning is शेषस्य i. e, मपर्य्यन्तस्य here. Thus the अद् protion of युष्मद् and अस्मद् elides according to this view. Thus in त्व अद् अम् and in अह अद् अम्, this मपर्य्यन्तात् शेषलोप follows even if the अन्तरङ्गगुण by the rule "अतोगुणे" is done. So the form

acc to this view—is त्व् अम and अह् + अम्। Now in this stage त्व and अह् being not ending in अकार, टाप् can not come in. So in both ways युष्मद् and अस्मद् take no genders. This rule applies even when words end in युष्मद् and अस्मद् no matter they are subordinate or not. Thus परमत्वम् अतित्वम् &c are got.

मित—। "अष्टनः आ विभक्तौ" इत्यतः 'आ' वर्त्तते "योचि" (७।२।८३) इत्यतः 'य' अस्ति। 'शेषे' इति विभक्तिविशेषणमेतत्। शेषे विभक्तौ इत्यर्थः। कश्च शेषः? यत्राकारः यकारश्च न विहितः स शेषः। "युष्मदस्मदोरनादेशे"—(७।२।८६) इत्यादिभिश्चतुर्भिः सूत्रैर्यत्रात्त्वं यत्त्वं च न विहितं स शेषः इति च फलितम्। तस्मिन् परे युष्मदस्मदोः अन्त्यस्यलोपः स्यात्। तथा चोक्तं काशिकायाम्—"पञ्चम्याश्च चतुर्थ्याश्च षष्ठीप्रथमयोरपि यान्यद्विवचनान्यत्र तेषुलोपो विधीयते"॥ तेन त्वद् सु अहद् सु इत्यत्र त्व अम् अह अम् इति जाते पररूपे च त्वम् अहम् इति॥ अत्र व्याख्यानान्तरम् यथा—आदेशो :मपर्य्यन्तस्य विधीयते। मपर्य्यन्तात् योन्यः स शेषः। शेषे इति षष्ठ्यर्थे सप्तमी। शेषस्य मात् परस्यलोपः। अङ्गागष्टिलोप इत्यर्थः। एतदेव व्याख्यानान्तरम् दीक्षितः उल्लिखति युष्मदस्मदोः स्त्रीत्वनिषेधावसरे। भाष्यकारवचनात् ("अलिङ्गे युष्मदस्मदी" इति) अत्र स्त्रीत्वसूचकटाप् निषिद्धः; व्याख्यानान्तरे अङ्लोपः टापं निवर्त्तयति॥ व्याख्यानान्तरपक्षेपि अदन्तत्वाभावात् न टाप्—त्व अद्, अह अद् इत्यत्र पररूपे सति त्वद् अहद् इति स्थिते अदोलोपे त्व् अह् इत्यं तयोः अदन्तत्वाभावात् न टाप् इति फलितम्॥ युष्मदस्मदोः त्वाहादेशे तदन्तविधिरस्ति। अतः "ङे प्रथमयोरम्" इति गौणेपि अम् प्रवर्त्तते तदाह 'परमत्वम् अतित्वम्' इत्यादि॥

अधुना युष्मद् औ अस्मद् औ इत्यत्र "ङेप्रथमयोरम्" इति अमि सति युष्मद् अम् अस्मद् अम् इति जाते आह—

### ३८३। युवावौ द्विवचने। ७।२।९२॥

दी— द्वयाक्त्यौ युष्मदस्मदोर्मपर्य्यन्तस्य युवावौ स्तो विभक्तौ।

If duality is spoken of then युव and आव are ordered for युष्मद् and अस्मद् respectively up to its म, when case-affix follows.

मित—। "युष्मदस्मदोरनादेशे—" इत्यतः युष्मदस्मदोः वर्त्तते। "मपर्य्यन्तस्य" इत्यधिकारोऽपि अस्ति। तदाह—"द्वयोरुक्तौ युष्मदस्मदोः" इत्यादि। तेन युवद् औ आवद् औ इति स्थिते "शेषेलोपः" प्राप्नोति; (पूर्वसूत्रे व्याख्यानान्तरं द्रष्टव्यम्)। आत्वयत्वेतरनिमित्तविभक्तौ इति व्याख्याने तु न दोषः।

## ३८७। प्रथमायाश्च द्विवचने भाषायाम्। ७।२।८८॥

दी—। इह युष्मदस्मदोराकारोऽन्त्यादेशः स्यात्। युवाम्। आवाम्। "औङि" इत्येव सुवचम्। भाषायाम् किम्? युवं वस्त्राणि। मपर्य्यन्तस्य किम्?—साकच्कस्य मा भूत्। युवकाम्। आवकाम्। 'त्वया' 'मया' इत्यत्र 'त्व्या' 'म्या' इति मा भूत्। 'युवकाभ्याम्' आवकाभ्याम्' इति च न सिध्येत्।

In classical language आकार is ordered at the end of युष्मद् and अस्मद् in 1st and 2nd dual. Thus in युवद् औ and आवद् औ we get युवा औ and आवा औ by आकारादेश by this rule, then अम् coming by the rule "ङेप्रथमयोः अम्" we get युवाम् and आवाम्। Here "शेषेलोपः" does not apply, for the विभक्ति here causes आत्व। As this आकार is ordered both in 1st and 2nd dual, so the reading 'औङि' for 'प्रथमायाश्च द्विवचने' should have been better here. Why do we say भाषायाम् in the sutra? Witness युवं वस्त्राणि in vedic language without आत्व। Why do we say मपर्य्यन्तस्य here? Even if the आदेश be-for the whole of युष्मद् and अस्मद् then also युवाम् and आवाम् are got. But then if युव and आव be ordered for the whole of युष्मद् and अस्मद्, then in अकच् too युव and आव being for the whole of युष्मकद् and अस्मकद् we get युवाम् and आवाम् without hearing of ककार।

So we say मपर्य्यन्तस्य in the prior rule, so that युव and आव are not ordered along with अकच् after युष्मद् and अस्मद् । Further if मपर्य्यन्तस्य in not said here then in this अधिकार on thestrength of the maxim "ओकार सकार भकारादौ सुपि सर्वनाम्नष्टेः प्रागकच, अन्यत्र सुपन्तस्य टेः प्राक्" wehave युवकाम् + आवकाम्, but then we say that त्व्‌या and म्या should come for त्वया and मया if मपर्य्यन्तस्य is not taken here, in the following way :—If "त्वमावेकवचने" be for the whole of युष्मद् and अस्मद् and not up to its म, then in 3rd singular in युष्मद् आ and अस्मद् आ we get त्व आ and म आ, and lastly यत्व coming by the rule "योचि" we get त्व्‌या and म्या । So for the formation of त्वया and मया, मपर्य्यन्तस्य is to be said in this jurisdiction. If again it be argued that त्वया and मया may be got thus without taking मपर्य्यन्तस्य here :—let एत्व come for अकार in त्व आ and म आ by changing the rule योचि into "अर्च्यंत्" yielding त्वया and मया,—then we are to say that मपर्य्यन्तस्य is taken here so that युवकाभ्याम् and आवकाभ्याम are formed with ककार heard here भकारादि सुप् following अकच् must come before सर्वनाम्नष्टेः and not after..

मित—। एवम् आत्वनिमित्तमत्र विभक्तिः। तेन "शेषेलोपो" न भवति। युवा औ आव औ इति स्थिते "ङेप्रथमयोरम्" इति युवाम्, आवाम् इति। द्वितीया द्विवचनेपि आत्वस्य विधानात् आह—'औङि इत्येव सुवचम्'॥ सूत्रे भाषायाम् कथमुक्तम् ?—वेदे युष्मद औ इत्यत्र मपर्य्यन्तस्य युवादेशे सति आत्वाभावे शेषेलोपे च सति रूपम्॥ अत्राधिकारे मपर्य्यन्तस्य किमर्थं गृहीतम् ?—समस्तस्य युवावौ आदेशौ यथा न स्याताम्। असतिमपर्य्यन्तस्य' ग्रहणे समस्तादेशे सति युष्मकद् औ इत्यादौ युवावौ आदेशौ भवतः। ततः अकचः ककारः न श्रूयेत। एवं अत्रवकस्य युवावौ यथा न स्याताम्, तदर्थम् मपर्य्यन्तस्य ग्रहणम्; अतः आह—'साकट्कस्य मा भूत्—युवकाम्, आवकाम्। "औकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्राग-

कच, अन्यत्र सुवन्तस्य टेः प्राक्" इति वचनात् असत्यपि—मपर्य्यन्तस्य ग्रहणे युवकाम्, आवकाम् यदि सिध्यति तथापि मपर्य्यन्तस्य ग्रहणे असति दोषः स्यात्—तथा च अत्राधिकारे मपर्य्यन्तस्य ग्रहणे असति त्वया मया इत्यत्र त्वा्या म्या च स्यात्। "त्वमावेकवचने" इति युष्मदस्मदोः, समस्तयोः 'त्व म' इति आदेशे सति त्व आ म आ इति जाते "योचि" इति, यत्वे च त्व्या म्या इति स्यात्। इत्येतदर्थम् मपर्य्यन्तस्य ग्रहणम्। ननु त्व आ म आ इत्यत्र अकारस्य यत्वं च 'योऽचि' सूत्रेण विहितम्। इदं सूत्रं यदि "अचेत्" इति भवेत् तदा त्व आ म आ इत्यत्र अकारस्य एत्वे सति 'त्वया मया' सिध्यति। ततश्च मपर्य्यन्तस्य ग्रहणं व्यर्थं स्यात्। अतः आह—युवकाभ्याम् आवकाभ्याम्' इति न सिध्यति, यदि मपर्य्यन्तस्य ग्रहणं न स्यात्; यतः अत्र भकारादिसुप्, अकाच सर्वनाम्नः टेः प्राक् न तु सुवन्तस्यटेः प्राक्। अतः मपर्य्यन्तस्य ग्रहणमत्राधिकारे युक्तमेव॥

अधुना युष्मदस्मदोः जसि विशेषविधिमाह—

## ३८८। यूयवयौ जसि। ७।२।९३॥

**दी—स्पष्टम्। यूयम्। वयम्॥ (यूयवयविधेरङ्गत्वात् तदन्तविधिरत आह)—परमयूयम्। अतियूयम्। अतिवयम्॥ इह शेषेलोपः अन्त्यलोपः इति पक्षेजसः शी प्राप्तः। "अङ्गकार्य्ये—पुनर्नाङ्गकार्य्यम्" इति न भवति। "ङेप्रथमयोरम्" इत्यत्र मकारान्तरं प्रश्लिष्य 'अम् मान्त एवावशिष्यते न तु विक्रियते' इति व्याख्यानाद्वा (जसः शी न भवति)।**

यूय and वय are respectively ordered in place of युष्मद् and अस्मद् up to their म only, when जस् follows. Then in युष्मद् जस्, अस्मद् जस् by मपर्य्यन्तात् शेषेलोपः we get यूय जस्, वयजस् and then "ङेप्रथमयोः—" ordering अम्, we get यूयम् and वयम्। This यूय and वयादेश being in अङ्गाधिकार we get तदन्तविधि here. This यूय and वय come even when युष्मद् &c. are गौण। So we get परमयूयम्। परमवयम्। अतिवयम् &c. If शेषलोप is explained as अन्त्यलोपः then in युष्मद् जस

and वयद् जस् we get यूय जस् and वयजस् ; now these being अकारान्त and being सर्वनाम as well शी is to come for जस् as in सर्वे &c. But this शी cannot come for when one अङ्गकार्य्य is already done, a second अङ्गकार्य्य ( as जसः शी after अवर्णान्त सर्वनाम bases ) is not to come in ; or this शी in place of जस् cannot come if we take अम् in the sutra "ङे प्रथमयोरम्" as अम् मान्त, explaining अम् च म् च इति अम्म् = अम् by संयोगान्तलोप ।

मित—। इह इत्यादि। "शेषेलोपः" इत्यत्र अन्त्यलोपः इति व्याख्यानं यदि गृह्यते तदा यूयद् जस् वयद् जस् इत्यत्र अन्त्यलोपे यूय जस् वयजस् इति स्थिते 'यूय' इत्यादीनां अवर्णान्तत्वात् सर्वनामत्वाच्च जसः शीभावः प्राप्नोति सत्यम्। किन्तु अङ्गकार्य्ये सति पुनः अङ्गकार्य्यं न स्यात् इति परिभाषया तु अत्र अङ्गाधिकारे यूयाद्या-देशे सति पुनः अवर्णान्तत्वमाश्रित्य जसः शीभावो भवितुं न युक्तः अतः जसः शी अत्र न भवेत्। अथवा एवं व्याख्यानादपि जसः शीभावोऽत्र न भवति। "ङे प्रथम-योरम्" इत्यत्र अम् च म् च इति द्वन्द्वेन अम्म्, तस्य संयोगान्तलोपेन 'अम्' इति लभ्यते। किन्तु तच्च 'अम् मान्त' एव इति मकारान्तरप्रश्लेषात् अत्र मान्त अम एव भवति ततः जसः शीभावो न स्यात्। वस्तुतस्तु व्याख्यानमेतत् भाष्ये न दृश्यते अतः उपेक्ष्यम्। सन्निपातपरिभाषया एव अत्र शीभावो न स्यात्। अम् अत्र आलयत्वेतर—निमित्तात्मक—शेषविभक्तिरूपम् आश्रित्य अन्त्यलोपं घटयति। तत् कथमत्रान्त्यलोपः अमं विघातयेत्? इत्यस्तां तावत्॥ अधुना द्वितीयैकवचने "ङे प्रथमयोरम्" इति अमि कृते युष्मद् अम् अस्मद् अम् इति स्थिते माह—

३८६। त्वमावेकवचने। ७।२।९७॥

दी—। एकार्थयोक्तौ युष्मदस्मदोर्मपर्य्यन्तस्य त्वमौस्तः विभक्तौ।

Eng.—Easy.

सित—। "युवावौ द्विवचने" इतिवत् अत्रानुवृत्तिर्बोद्धव्या। मपर्य्यन्तादेशे सति त्वद् अम् मद् अम् इति जाते आह—

२६० । द्वितीयायाञ्च । ७।२।८७ ॥

दी—। युष्मदस्मदोराकारः स्यात्। ("अलोन्त्यस्य" इति दकारस्य आत्वम्)। त्वाम्। माम्। युवाम्। आवाम्।

In द्वितीया too आकार is ordered at the end of युष्मद् and अस्मद्। Thus त्वद् अम् = त्वा अम्=त्वाम्। Here "शेषेलोपः" does not come for here विभक्ति causes आत्व to come in. Similarly माम &c.

मित—। त्व अम् मा अम् इति स्थिते अत्वानिमित्तत्वात् शेषेलोपो न प्राप्नोति। ततः त्वाम्। माम् इति॥ पूर्ववत् युवाम् अवाम् इति॥ अधुना शसि विशेषमाह—

२६१ । शसो न । ७।१।२६ ॥

दी—। 'न' इत्यविभक्तिकं पदम्। युष्मदस्मद्भ्यां परस्य शसो नकारः स्यात्। अमोपवादः। "आदेः परस्य" (सूत्र ४४) (इति शकारस्य नकारः)। ततः "संयोगान्तस्यलोपः" (सूत्र ५४) (इति अन्त्य सकारलोपे) युष्मान्—अस्मान्।

Here 'न' in the rule is stated without adding any विभक्ति। The meaning of the rule is—नकार comes in places of शस् after युष्मद् and अस्मद्। This नकार thus bars coming of अम् here by the rule "ङेप्रथमयोरम्"। Again this नकार is for the first letter of श स् i. e., for श here by the rule "आदेः परस्य" (see ante). Thus युष्मद् न्स् = युष्मान्स् by आत्व by the rule "द्वितीयायाञ्च"। This becomes युष्मान् by संयोगान्तलोप by the rule "संयोगान्तस्यलोपः"। Similarly we get अस्मान्।

मित—। 'न' इत्यविभक्तिको निर्देशः। अकार उच्चारणार्थः। एतच्च न्—विधानं "ङेप्रथमयोरम्" इति अमोपवादार्थम्। अतः आह—"अमोपवादः"।

शसो न-विधानेन पूर्वस्य च शकारस्य नकारः इति लभ्यते। "आदेः परस्य" इति सूत्रं यतल्लभ्यते। ततः युष्मद्नस् अस्मद्नस् इति जाते "द्वितीयायाञ्च" इति "दकारस्य आत्त्वे" सति युष्मान्स् इति स्थिते संयोगान्तस्य सकारस्य लोपे स युष्मान् अस्मान् इति॥

अधुना युष्मद् अस्मद् आ इति स्थिते "त्वमावेकवचने" इति यथाक्रमं त्वमादेशे सति त्वद् आ मद् आ इति जाते विशेषमाह—

## ३६२। योऽचि। ७।२।८६॥

**दी—। अनयोर्यकारादेशः स्यात् अनादेशेऽजादौ परतः। त्वया—मया।**

य is ordered after युष्मद् and अस्मद् when अजादि विभक्ति where no order has been made, follows. Thus त्व् आ मद् आ becomes त्वय् आ and मय् आ i. e., त्वया and मया with यादेश for द् here by "अलोऽन्त्यस्य"।

मित—। 'योऽचि' इत्यत्र यकारात् अकारः उच्चारणार्थः। "अष्टन आ विभक्तौ" इत्यतः 'आ विभक्तौ' वर्त्तते। अचि इत्येतत् विभक्तिविशेषणम्। "युष्मदस्मदोरनादेशे" इत्येतदपि सूत्रमत्र अनुवर्त्तते। ततः आह—"अनयोर्यकारादेशः" इत्यादि। अनादेशे किम्? 'त्वत् मत्' इत्यत्र "पञ्चम्या अत्" इत्यादेशे सति यत्वम् न स्यात्॥ त्वद् मद् इत्येतयोरलोऽन्त्यस्य यादेशः॥

## ३६३। युष्मदस्मदोरनादेशे। ७।२।८६॥

**दी—। अनयोराकारः स्यादनादेशे हलादौ परे। युवाभ्याम्। आवाभ्याम्। युष्माभिः। अस्माभिः।**

आकार is ordered at the end of युष्मद् and अस्मद् when हलादि विभक्ति having no further order therein follows. Thus by "युवावौ द्विवचने" we get युवद्भ्याम् and आवद्भ्याम् which by आकारादेश at the end be-

comes युवाभ्याम् and आवाभ्याम्। And in बहुवचन we get युष्मद्भिः and अस्मद्भिः=युष्माभि and अस्माभिः by आत्त्व।

मित—। अनुवृत्तिस्तु 'आविभक्तौ' इति पूर्वसूत्रवत्। "रायो हलि" इत्यतः 'हलि' इति विभक्तौ अन्वेति, ततः आह—'अनयोः आकारः स्यादनोदेशे हलादौ परे'॥ युष्मद् ए अस्मद् ए इत्यत्र "त्वमावेकवचने" इति प्राप्ते आह—

## ३६४। तुभ्यमह्यौ ङयि। ७।२।९५॥

**दी—। अनयोर्मपर्यन्तस्य तुभ्यमह्यौ स्तः ङयि। अमादेशः। "शेषे लोपः"। तुभ्यम्। मह्यम्॥ (आङ्गत्वात् तदन्तविधिः ततः आह—) परमतुभ्यम्। परममह्यम्। अतितुभ्यम्। अतिमह्यम्॥ युवाभ्याम्। आवाभ्याम्।**

तुभ्य and मह्य are ordered up to म of युष्मद् and अस्मद् when the विभक्तिप्रत्यय ङे follows. So in युष्मद् ए and अस्मद् ए we get तुभ्यद् ए and मह्यद् ए। Then we have अमादेश in ङि by the rule "ङेप्रथयोरम्"। Lastly by "शेषे लोपः" we get अद्भाग लोप yielding तुभ्यम् and मह्यम्॥ This order in place of युष्मद् and अस्मद् comes even if these are at the end of a word whether as प्रधान or as गौण; thus परमतुभ्यम्। अतितुभ्यम् &c.

मित—। तुभ्यद् ए मह्यद् ए इति स्थिते "ङेप्रथमयोरम्" इति अमादेशे सति "शेषे लोपः" इति सूत्रेण च टिलोपे इति तुभ्यम् मह्यम् इति रूपसिद्धिः। आङ्गत्वात् अत्र तदन्तविधिरस्ति, तेन अयमादेशः गौणत्वेपि प्रवर्त्तते। तदाह—"परमतुभ्यम्, अतितुभ्यम्" इत्यादि। युष्मद्भ्यस् अस्मद्भ्यस् इत्यत्र "युष्मदस्मदोरनादेशे" इति आकारे प्राप्ते आह—

## ३६५। भ्यसोऽभ्यम्। ७।१।३०॥

**दी—। भ्यसोभ्यम् अभ्यम् वा आदेशः स्यात्। आद्यः शेषे लोपस्य**

अन्त्यलोपत्व एव। तत्राङ्गवृत्तपरिभाषया एत्वं न। अभ्यम् तु पक्षद्वयेपि साधुः। युष्मभ्यम्। अस्मभ्यम्।

भ्यम् वा अभ्यम् is ordered in place of भ्यम् after युष्मद् and अस्मद्। If in the rule "शेषे लोपः" we take the view as अन्त्यलोपः then युष्मद्भ्यम् &c. become युष्मभ्यम्। Then the rule "बहुवचने झल्येत्" does not operate again, for the Paribhasa "अङ्गवृत्ते पुनर्वृत्तावविधिः i.e., when one अङ्गकार्य्य ( as शेषेलोप here ) is done a further अङ्गकार्य्य is not to operate. But if the order be taken as अभ्यम् here then no question arises from the point of view in the rule "शेषे लोपः"। Thus युष्मभ्यम् and अस्मभ्यम् are formed.

मित—। आद्यः इत्यादि—"शेषेलोपः" इतिसूत्रस्य आद्यव्याख्यानपक्षे अन्त्यलोपः स्यात्। 'तत् पक्षे आद्यः' भ्यम् इति आदेशः। ततः युष्मद्भ्यस् इत्यत्र भ्यमि कृते युष्मद् भ्यम् इत्यत्र अन्त्यलोपे सति युष्म भ्यम् इति जाते "बहुवचने झल्येत्" इति एत्वं प्राप्नोति। किन्तु एतत् एत्वं अङ्गवृत्तपरिभाषया ( यथा "अङ्गवृत्ते पुनर्वृत्तौ अविधिः"—अङ्गकार्य्ये प्रवृत्ते सति पुनरङ्गकार्य्यं न भवत्ति इत्यर्थः ) न प्रवर्त्तते। अत "शेषेलोपः" इति अङ्गकार्य्ये सति पुनरङ्गकार्य्यम् एत्वं न भवेत्॥ अत आदेशः यदि अभ्यम् स्यात् तदा "शेषेलोपः" इति सूत्रस्य पक्षद्वयाश्रयणेपि ( अन्त्यलोपपक्षे टिलोप पक्षे च इत्यर्थः ) युष्मभ्यम् अस्मभ्यम् इत्यत्र न क्वापि वाधा वर्त्तते॥ अधुना युष्मद् ङस् अस्मद् ङस् इत्यत्र "त्वमावेकवचने" इति त्वद् ङसि मद् ङसि इति जाते आह—

**३६६। एकवचनस्य च। ७।१।३१॥**

**दी—। आभ्यां पञ्चम्येकवचनस्य अत् स्यात्। त्वत्। मत्। 'ङसेश्च' इति सुवचम्। युवाभ्याम्। आवाभ्याम्।**

अत् comes in place of पञ्चम्येकवचन विभक्ति after युष्मद् and अस्मद्। Thus युष्मद् ङसि &c. becomes त्वद् ङसि &c. by the rule "त्वमावेकवचने"

which by "शेषे लोपः" stands as त्व ङसि, then अत् coming for ङसि we get त्व अत्=त्वत् by पररूप। So मत् is formed. The Sutra here should better be "ङसेश्च" owing to लाघव in this. In dual of पञ्चमी we get युवाभ्याम् &c. as before.

मित—। "पञ्चम्या अत्" (७।१।३२) इत्यत्र 'अत्' अपकृष्यते। उत्तरसूत्रादानयनं नाम अपकर्षः इति प्रागुक्तम्। "युष्मदस्मद्भ्याम् ङसोऽश्" इत्यतः युष्मदस्मभ्याम् वर्त्तते। एवं तद्ङसि मद्ङसि इत्यत्र "शेषेलोपः" इत्यनेन टिलोपे (अन्त्यलोपे पररूपे वा) अदादेशे च सति त्वत् मत् इति॥ अधुना पञ्चमीबहुवचने विशेषं वदति—

## ३६७। पञ्चम्या अत्। ७।१।३२॥

**दी—। आभ्यां पञ्चम्याः भ्यसोऽत्स्यात्। युष्मत्। अस्मत्।**

Eng.—Easy.

मित—। पूर्ववत् 'युष्मदस्मद्भ्याम्' इति अनुवर्त्तते। "भ्यसो भ्यम्" इति सूत्रात् 'भ्यसो' च वर्त्तते। तत्र आह—'आभ्यां पञ्चम्याः भ्यसः अत् स्यात् इति। एवं युष्मद् भ्यस् अस्मद्भ्यस् इत्यत्र भ्यसः 'अत्' आदेशे सति शेषे लोपे च सति युष्मत् अस्मत् इति॥ अधुना षष्ठीविभक्तिं विश्लेषयति—

## ३६८। तवममौ ङसि। ७।२।९६॥

**दी—। अनयोर्मपर्य्यन्तस्य तवममौ स्तः ङसि।**

मित—। 'मपर्य्यन्तस्य' इत्यधिकारसत्त्वात् आह—'अनयोर्मपर्य्यन्तस्य' इत्यादि। "त्वमावेकवचने" इत्यस्यायमपवादः एव। ततः युष्मद्ङस् अस्मद् ङस् इत्यत्र तवद्ङस ममद्ङस् इति स्थितिः। ततः विशेषं वक्ष्यति—

## ३६९। युष्मदस्मद्भ्याम् ङसोऽश्॥ ७।१।२७॥

**स्पष्टम्। तव। मम। युवयोः। आवयोः।**

Eng.—Easy.

मित—। षित्वात् सर्वादेशः। तेन तवद् अश् ममद् अश् इति स्थिते "शेषे-लोपः" इति ठिलोपे तव मम इति रूपसिद्धिः। "योऽचि" इत्यत्र अनादेशे इत्यनुवृत्तेः यादेशोऽत्र न भवति। युष्मद् ओस् अस्मद् ओस् इत्यत्र द्विवचने मपर्यन्तस्य युवावौ आदेशौ ततः युवद् ओस् आवद् ओस् इति स्थिते "योऽचि" इति दस्य यत्वे युवय् ओस् आवय् ओस्=युवयोः आवयोः इति॥

४००। साम आकम् ।७।१।३३॥

दी—। आभ्यां परस्यसाम आकम् स्यात्। भाविनः सुटो निवृत्त्यर्थम् ससटक्निर्देशः। युष्माकम्। अस्माकम्। त्वयि; मयि। युवयोः। आवयोः। युष्मासु; अस्मासु।

आकम् is ordered in place of साम् coming after the bases युष्मद् and अस्मद्। The saying of 'सामः' with सुट् in the sutra suggests that सुट by the rule "आमि सर्वनाम्नः सुट्" also is to be barred. Thus युष्मद् आम् &c.,=युष्म आकम्=युष्माकम् by शेषे लोपः"। Similarly we get अस्माकम्। In युष्मद् इ अस्मद् इ we get first त्वमादेश in एकवचन (i.e., त्वद् इ मत् इ), then there is यादेश by the rule "योचि" (e.g., त्वय् इ मय् इ) and we get त्वयि and मयि॥ युवयोः आवयोः are formed as before. In युष्मद् सु अस्मद् सु we get आ for द् at the end by the rule "युष्मदस्म-दोरनादेशे" and the result is युष्मासु अस्मासु।

मित—। सकारेण सह वर्तते य 'आम्' तस्य सामः इत्यर्थः। 'ससुट्कस्य आम' इति भावः। अत्र ससुटकनिर्देशः 'भाविनः' भविष्यतः "आमि सर्वनाम्नः सुट्" इति सूत्रेण भविष्यतः सुटो निवृत्त्यर्थः। तथा च बालमनोरमा—"यदि तु आम आकम् इत्ये-वोच्यते, तदा आमः आकमादेशे कृते दकारस्य शेषलोपे सति स्थानिवत्त्वेन आकमा-देशस्य आम्त्वात् तस्य अवर्णात् परत्वात् सुडागमः स्यात्। ततः एत्वषत्वयोः युष्मेषाम् अस्मेषाम् इति स्यात्। अतः ससुटकनिर्देशः"॥ त्वयि मयि इति—युष्मद् इ अस्मद् इ इति स्थिते एकवचने त्वमादेशे सति त्वद् इ मत् इ इति जाते "योचि" इति दकारस्य

यादेशौ च त्वयि मयि इति ॥ युष्मद् सु अस्मद् सु इति "युष्मदस्मदोरनादेशे" इति दकारस्य आत्वे सवर्णदीर्घे च युष्मासु अस्मासु इति सिध्यति ॥

"त्वमावेकवचने" इति सूत्रे "युवावौ द्विवचने" इति सूत्रे च यथाक्रमम् एकवचन-द्विवचनशब्दौ यौगिकौ न तु प्रत्ययपरौ। तत्फलमेव अधुना श्लोकचतुष्टयेन स्फुटी करोति—

दी—। समस्यमाने द्व्येकत्ववाचिनी युष्मदस्मदी ।
समासार्थोऽन्यसंख्यश्चेत्तौ युवावौ त्वमावपि ॥
सुजस्ङेङस्सु परत आदेशाः स्युः सदैव ते ।
त्वाहौ यूयवयौ तुभ्यमह्यौ तवममावपि ॥
एते परत्वाद्बाधन्ते युवावौ विषये स्वके ।
त्वमावपि प्रबाधन्ते पूर्वविप्रतिषेधतः ॥
द्व्येकसंख्यः समासार्थो बह्वर्थे युष्मदस्मदी ।
तयो र्द्व्येकतार्थत्वान्न युवावौ त्वमौ न च ॥

Eng.—Easy.

मित—। अन्वयः—यदि समस्यमाने युष्मदस्मदी द्व्येकत्ववाचिनी ( भवतः ) तदा समासार्थः अन्यसंख्यश्चेत् अपि युवावौ त्वमावपि स्तः ।

व्याख्या—। युष्मदस्मद्शब्दयोः एकत्वे द्वित्वे सति यथाक्रमम् त्वमादेशौ युवावादेशौ च भवतः। एतयोः समासेपि एकत्वे द्वित्वे सति समासार्थस्य अन्यसंख्यार्थपरत्वेपि यथाक्रमं त्वमादेशौ युवावादेशौ च भवतः इति निष्कर्षार्थः। ततश्च त्वां मां वा अतिक्रान्तः अतिक्रान्तौ अतिक्रान्ताः इति "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इति प्रादिसमासे सति विग्रहवाक्ये युष्मदस्मदोः एकत्वहेतोः युष्मद् स्थाने 'त्व', अस्मद् स्थाने च 'म' आदेशौ भवतः 'अतित्व' 'अतिम' इति च प्रातिपदिकौ भवतः। एवं युवाम् आवाम् वा अति-क्रान्तः इति विग्रहे युष्मदस्मदोः द्वित्वे सति 'अतियुव' 'अत्याव' इति प्रातिपदिकौ भवतः। युष्मदस्मदोः एकत्वे त्वमादेशौ द्वित्वे च युवावौ आदेशौ किं सार्वत्रिकौ वा न वा इत्य-त्रोत्तरमाह—सुजस् इत्यनेन॥ अन्वयः—"त्वाहौ सौ" "युववयौ जसि", "तुभ्यमह्यौ ङयि" "तवममौ ङसि" इति ( अपि यथाक्रमं ) सुजस्—ङे—ङस्सु परतः ये

आदेशाः विहिताः ते सदैव स्युः (युष्मदस्मदोः एकद्विवह्वर्थवृत्तिपरत्वेपि स्युरित्यर्थः) अतश्च एते आदेशाः 'अतित्व' 'अतियुव' इत्यादि प्रातिपदिकेपि भवन्ति॥ एतदेव युक्त्या दर्शयति—एते इति। अन्वयः—एते (त्वाहादेशादयः) परत्वात् स्वके विषये (निजविषये, सुजसादौ विषये इत्यर्थः) युवावौ (आदेशौ) बाधन्ते। यद्यपि त्वमादेशौ एतेभ्यः परौ तथापि 'एते' त्वाहादेशादयः 'त्वमादेशावपि प्रबाधन्ते'। कथं बाधन्ते? इत्याह—'पूर्वविप्रतिषेधतः'—"विप्रतिषेधे परं कार्य्यम्" इति न्यायेन परशब्दस्य इष्टवाचित्वमाश्रित्य इष्टेन पूर्वसूत्रेण परसूत्रस्य विप्रतिषेधः बाधः पूर्वविप्रतिषेधः उच्यते। विप्रतिषेधे समुपस्थिते पूर्वस्य प्रवृत्तिः नाम पूर्वविप्रतिषेधः। एवं 'पूर्वविप्रतिषेधनैव त्वाहादेशादयः त्वमौ अपि प्रबाधन्ते' इति फलितम्॥ किन्तु युष्मदस्मदोः बह्वर्थत्वे सति समासार्थस्य अतथात्वे द्व्येकत्वेपि युष्मदस्मदोः युवावौ त्वमौ च आदेशौ न भवतः इति अप्यव स्मर्तव्यम्। एतदेवाह द्व्येकसंख्य इत्यनेन श्लोकेन। अन्वयः—समासार्थः द्व्येकसंख्यः चेत्, (किन्तु) युष्मदस्मदौ (एतौ शब्दौ) बह्वर्थे (बह्वर्थपरत्वे, यदि भवतः इति शेषः) तदा तयोः (युष्मदस्मदशब्दयोः) अद्व्येकतार्थत्वात् न युवावौ (स्तः)। एवं युष्मान् अस्मान् वा अतिक्रान्तः अतिक्रान्तौ वा इति विग्रहे युष्मदस्मदोः अद्व्येकार्थत्वात् युवावौ त्वमौ न आदेशौ च स्तः ततश्च अतियुष्मत् अत्यस्मत् इति च प्रातिपदिकौ भवतः॥ इति श्लोकचतुष्टयसंगृहीतमेवार्थम् अधुना उदाहरणेन विशदीकरोति प्रथमं तावत् युष्मदस्मदोः एकत्वे त्वमादेशयोः—उदाहरणमाह—

दी—। **त्वां मां अतिक्रान्त इति विग्रहे—अतित्वम्। अत्यहम्** (सौ त्वाहादेशौ त्वमादेशौ बाधेते इति उक्तत्वात्; एवमन्यत्रापि जसादौ यूयवयौ बोद्धव्यौ)। **अतित्वाम्। अतिमाम्** (इह प्रथमायाः द्विवचने आकारः)। **अतियूयम्। अतिवयम्॥ अतित्वाम्। अतिमाम्। अतित्वाम्। अतिमाम्। अतित्वान्। अतिमान्॥ अतित्वया, अतिमया। अतित्वाभ्याम्—अतिमाभ्याम्। अतित्वाभिः, अतिमाभिः। अतितुभ्यम्—अतिमह्यम्। अतित्वाभ्याम्—अतिमाभ्याम्। अतित्वभ्यम्—अतिमभ्यम्॥ ङसिभ्यसोः—अतित्वत्, अतित्वत्, अतिमत्, अतिमत्। भ्यामि प्राग्वत्॥ अतितव—अतिमम। अतित्वयोः—अतिमयोः। अतित्वाकम्—**

**अतिमाकम् ॥ अतित्वयि, अतिमयि । अतित्वयोः—अतिमयोः । अतित्वासु—अतिमासु ॥**

मित—। सु—जस्—ङे, ङसभ्योऽन्यत्र सर्व्वासु च विभक्तिषु एकद्विवहुवचनेषु त्वमावेव आदेशौ अधिकारसत्वात् मपर्य्यन्तस्य बोद्धव्यौ। प्रक्रियासु च युष्मदस्मद्शब्दवत् ज्ञेयौ ॥ सु-जस्-ङे-ङसस्‌ु यथाक्रमं त्वाहौ यूयवयौ, तुभ्यमह्यौ तवममावपि ज्ञेयौ इति फलितम् ॥ अधुना युष्मदस्मदोः द्वित्ववाचित्वे उदाहरणमाह—

**दी—। युवाम् आवाम् वा अतिक्रान्त इति विग्रहे सु—जस्—ङे—ङस-सु प्राग्वत् ॥ औ—अम्—औट्सु—अतियुवाम्। अतियुवाम्—अतियुवाम्। अत्यावाम्। अत्यावाम्। अत्यावाम् ॥ अतियुवान्—अत्यावान् ॥ अतियुवया—अत्यावया। अतियुवाभ्याम। अत्यावाभ्याम। अतियुवाभिः, अत्यावाभिः ॥ भ्यम—अतियुवभ्यम्। अत्यावभ्यम् ॥ ङसिभ्यसोः—अतियुवत्, अतियुवत्। अत्यावत्। अत्यावत् ॥ ङसि—अतियुवयोः। अतियुवयोः। अत्यावयोः—अत्यावयोः ॥ ( षष्ठीवहुवचने ) अतियुवाकम्—अत्यावाकम् ॥ ( ङौ ) अतियुवयि, अत्यावयि ॥ अतियुवासु—अत्यावासु ॥**

मित—। पूर्ववद् ज्ञेया। किन्त्वत्र द्वित्ववाचित्वे युवावौ आदेशौ मपर्य्यन्तस्य एव ॥ अधुना युष्मदस्मदोः वह्वर्थवाचित्वे उदाहरणमाह—

**दी—। युष्मान् अस्मान् वा अतिक्रान्त इति विग्रहे सु-जस्-ङे-ङस् सु प्राग्वत्। औ—अम्—औट्सु—अतियुष्माम्, अतियुष्माम्, अतियुष्माम्। अत्यस्माम्—अत्यस्माम्—अत्यस्माम् ॥ अतियुष्मान्। अतयस्मान् ॥ अतियुष्मया, अत्यस्मया। अतियुष्माभ्याम्, अत्यस्माभ्याम्। अतियुष्माभिः, अत्यस्माभिः ॥ भ्यसि—अतियुष्मभ्यम्, अत्यस्मभ्यम् ॥ ङसिभ्यसोः—अतियुष्मत्, अत्यस्मत् ॥ ङसि—अतियुष्मयोः, अत्यस्मयोः ॥ ( आमि— ) अतियुष्माकम्, अत्यस्माकम्। ( ङौ )—अतियुष्मयि, अत्यस्मयि। अतियष्मासु—अत्यस्मासु।**

## ४०१। पदस्य। ८।१।१६॥

मित—। अधिकारसूत्रमिदम्। यदित: ऊर्ध्वमनुक्रमिष्यामः 'पदस्य' इत्येवं तद् वेदितव्यम् इत्यर्थः।

## ४०२। पदात्। ८।१।१७॥

मित—। 'पदात्' इत्ययमधिकारः। यदित ऊर्ध्वमनुक्रमिष्यामः 'पदात्' इत्येवं तद्वेदितव्यम्।

## ४०३। अनुदात्तं सर्वमपदादौ। ८।१।१८॥

दी—। इत्यधिकृत्य।

मित—। त्रयमेतत् अधिकारसूत्रम्। अतः दीक्षित आह—'इत्यधिकृत्य' इति अनुदात्तमिति च सर्वमिति च अपादादौ इति च एतत् त्रयम् अधिकृतं वेदितव्यम्। यदित ऊर्ध्वं वक्ष्यामः अनुदात्तं सर्वम् अपादादौ इत्येवं तद्बोध्यम्। पादशब्देन ऋक्पादः श्लोकपादश्च गृह्यते। सर्वग्रहणं सर्वमनूद्यमानं विधीयमानं चानुदात्तं यथा स्यादिति॥

## ४०४। युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयो र्वांनावौ। ८।१।२॥

**दी—। पदात्परयोः अपादादौ स्थितयोरनयोः षष्ठ्यादि—विशिष्टयोर्वां नौ इत्यादेशौ स्तः। तौ चानुदात्तौ।**

वाम् and नौ are respectively ordered in place of whole of युष्मद् and अस्मद् in 6th, 4th and 2nd case dual, and if these are after some पद and also not at the beginning of a foot of a verse. And these are अनुदात्त।

मित—। 'पदात्' "अपदादौ" "अनुदात्तम्" इत्यस्ति। अतः आह—"पदात् परयोः" इत्यादि। एकवचन बहुवचनयोरादेशान्तरविधानात् द्विवचनान्तयोरयमादेशः। उदाहरणं यथा :—एतद्वाम्, इदश्च नौ स्वम्। ममो वां धनं नौ देहि। अर्थयावद्दे वां रक्षतं नौ भयेभ्यः॥ पदात् परयोः किम्? वाक्यादौमाभूत् आवयोः

स्यम् ॥ पादशब्देन ऋक्‌पादः श्लोकपादश्च गृह्यते इति प्रागुक्तम् । अपादादौ किम् ? "इन्द्रैरमात्यैः सह चौरवासा मामर्घपाणिर्भरतोऽभ्युपैति" ; अत्र 'मामर्घपाणिः' इत्यत्र पपदादौ अस्मदस्थाने 'मा' इत्यादेशः न स्यात् ॥

## ४०५ । बहुवचनस्य वस्नसौ । ८।१।२१ ॥

दी—। उक्तविधयोः अनयोः षष्ठ्यादिबहुवचनान्तयोः वस्नसौन्तः । वाम्-नावोरपवादः ।

वस् and नस् are ordered respectively in place of युष्मद् and अस्मद् coming after some पद (word) and not at the beginning of a foot of a verse ; and वस् and नस् come in place of बहुवचन only of षष्ठी, चतुर्थी and द्वितीया । Thus this rule bars order of वाम् and नौ in the बहुवचन ।

मित—। पूर्वसूत्रात् "युष्मदस्मदोः षष्ठीचतुर्थी द्वितीयास्थयोः" वर्त्तते । 'पदात्' 'अपादादौ' इत्याद्यप्यस्ति । तदाह—'उक्तविधयोरनयोरित्यादि' ॥

## ४०६ । तेमयावेकवचनस्य । ८।१।२२ ॥

दी—। उक्तविधयोरनयोः षष्ठीचतुर्थ्येकवचनान्तयोः 'ते मे' एतौ स्तः ।

ते and मे come for the whole of युष्मद् and अस्मद् coming after a word and not at the beginning of a foot of a verse. This order is in place of singular of षष्ठी and चतुर्थी only. The order is not in द्वितीया singular, for the next sutra makes a fresh order for द्वितीया only.

मित—। 'ते च मे च' इति तेमयौ—द्वन्द्वः । पूर्वसूत्रवत् अत्रापि अनुवृत्तिः ज्ञेया । ततः आह—'उक्तविधयोः अनयोः इत्यादि । 'षष्ठीचतुर्थ्येकवचनान्तयोः अनयोः' इति वृत्तौ उक्तम्, यतः परसूत्रेण द्वितीयैकवचनान्तस्य आदेशान्तरं विहितम् ॥

## ४०७ । त्वामौ द्वितीयायाः । ८।१।२३ ॥

दी—। द्वितीयैक वचनान्तयोरनयोः 'त्वा मा' एतौ स्तः ।

त्वा and मा are ordered respectively in place of द्वितीया (singular) of युष्मद् and अस्मद् if these are after some word and not at the beginning of a foot of a verse.

मित—। त्वाश्च माश्च त्वामौ, द्वन्द्वः। पूर्वसूत्रात् 'एकवचनस्य' इत्यत्र वर्त्तते, तत्राह—'द्वितीयैकवचनान्तयोः अनयोः' इत्यादि॥ अधुना "युष्मदस्मदोः—" इत्यादि (सूत्र ४०४-४०७) सूत्रचतुष्टयोक्तं सर्वं द्वितीयाचतुर्थीषष्ठीविभक्तिक्रमेण एक-द्वि-बहु-वचनक्रमेण चोदाहरति :—

दी—। श्रीशस्त्वावतु मापीह दत्तात्ते मेऽपि शर्म सः।
स्वामी ते मेऽपि स हरिः पातु वामपि नौ विभुः॥
सुखं वां नौ ददात्वीशः पतिर्वामपि नौ हरिः।
सोऽव्याद्वो नः शिवं वो नो दद्यात् सेव्योत्र वः स नः॥

Eng.—Easy.

मित—। अन्वयः—श्रीशः (विष्णुः) त्वा मा अपि पातु (रक्षतु) [अत्र द्वितीयैकवचने त्वा मा इत्यादेशौ भवतः]; स (श्रीशः) ते मे अपि शर्म (सुखं) दत्तात् (ददातु) [अत्र चतुर्थ्येकवचने 'ते मे इति'], स हरिः ते मे अपि स्वामी (अत्र 'ते मे' इति षष्ठ्येकवचने); विभुः (स विष्णुः) वाम् नौ अपि पातु (रक्षतु) [अत्र द्वितीयाद्विवचने 'वां नौ' इति]॥ ईशः वां नौ अपि सुखं ददातु (अत्र चतुर्थीद्विवचने 'वां नौ' इति), हरिः वाम् नौ अपि पतिः [अत्र षष्ठीद्विवचने 'वां नौ' आदेशौ भवतः], सः हरिः वः नः अपि अव्यात् (रक्षतु) [अत्र द्वितीयाबहुवचने 'वस् नस्' आदेशौ], वः नः अपि शिवं (मङ्गलं) दद्यात् [अत्र चतुर्थीबहुवचने 'वस् नस्' आदेशौ], अत्र सः वः अपिनः सेव्यः [अत्र षष्ठीबहुवचने 'वस् नस्' इत्यत्र "कृत्यानां कर्त्तरि वा" इति षष्ठी]।

दी—। पदात्परयोः किम्? वाक्यादौ मा भूत्। त्वां पातु मां पातु।

मित—। अत्र वाक्यादित्वात् युष्मदस्मच्छब्दयोः द्वितीयायाम् 'त्वा मा' इति आदेशौ यथा न स्यात् अतः 'पदात्परयोः' इति उक्तम्॥ ततश्च पूर्वमेव व्याख्यातम्॥

**अतिमाकम् ॥ अतित्वयि, अतिमयि । अतित्वयोः—अतिमयोः । अतित्वासु—अतिमासु ॥**

मित—। सु—जस्—ङे, ङसभ्योऽन्यत्र सर्व्वासु च विभक्तिषु एकद्विबहुवचनेषु त्वमावेव आदेशौ अधिकारसत्वात् मपर्य्यन्तस्य बोद्धव्यौ। प्रक्रियासु च युष्मदस्मद्शव्दवत् ज्ञेयौ ॥ सु-जस्-ङे-ङससु यथाक्रमं त्वाहौ यूयवयौ, तुभ्यमह्यौ तवममावपि ज्ञेयौ इति फलितम् ॥ अधुना युष्मदस्मदोः द्वित्ववाचित्वे उदाहरणमाह—

**दी—। युवाम् आवाम् वा अतिक्रान्त इति विग्रहे सु—जस्—ङे—ङस-सु प्राग्वत् ॥ औ—अम्—औट्सु—अतियुवाम्। अतियुवाम्—अति-युवाम्। अत्यावाम्। अत्यावाम्। अत्यावाम् ॥ अतियुवान्—अत्या-वान् ॥ अतियुवया—अत्यावया। अतियुवाभ्याम। अत्यावाभ्याम। अतियुवाभिः, अत्यावाभिः ॥ भ्यम्—अतियुवभ्यम्। अत्यावभ्यम् ॥ ङसिभ्यसोः—अतियुवत्, अतियुवत्। अत्यावत्। अत्यावत् ॥ ङसि—अतियुवयोः। अतियुवयोः। अत्यावयोः—अत्यावयोः ॥ (षष्ठीबहुवचने) अतियुवाकम्—अत्यावाकम् ॥ (ङौ) अतियुवयि, अत्यावयि ॥ अति-युवासु—अत्यावासु ॥**

मित—। पूर्ववद् ज्ञेया। किन्त्वत्र द्वित्ववाचित्वे युवावौ आदेशौ मपर्य्यन्तस्य एव ॥ अधुना युष्मदस्मदोः बह्वर्थवाचित्वे उदाहरणमाह—

**दी—। युष्मान् अस्मान् वा अतिक्रान्त इति विग्रहे सु-जस्-ङे-ङस् सु प्राग्वत्। औ—अम्—औट्सु—अतियुष्माम्, अतियुष्माम्, अतियुष्माम्। अत्यस्माम्—अत्यस्माम्—अत्यस्माम् ॥ अतियुष्मान्। अतयस्मान् ॥ अतियुष्मया, अत्यस्मया। अतियुष्माभ्याम्, अत्यस्माभ्याम्। अति-युष्माभिः, अत्यस्माभिः ॥ भ्यसि—अतियुष्मभ्यम्, अत्यस्मभ्यम् ॥ ङसि-भ्यसोः—अतियुष्मत्, अत्यस्मत् ॥ ङसि—अतियुष्मयोः, अत्यस्मयोः ॥ (आमि—) अतियुष्माकम्, अत्यस्माकम्। (ङौ)—अतियुष्मयि, अत्य-स्मयि। अतियष्मासु—अत्यस्मासु।**

stand a complete idea with one तिङन्त verb. Thus in the sentence ओदनं पच तव भविष्यति, there being two तिङन्त verbs completing the sense, we can't get short forms of युष्मद् a, ते for तव। But in the sentence—शालीनां ते ओदनं दास्यामि, the sentence is completed with one तिङन्त verb, so here the short forms of युष्मद् may come in and thus we get ते here. Again by another Varttika as said above (*e.g.*, "एते वां नावादयः आदेशाः &c.) these shorts forms of युष्मद् and अस्मद् as वां नौ &c., can be optionally made in अनन्वादेश *i.e.*, when no अन्वादेश is implied; but in अन्वादेश (*i.e.*, when a subsequent assertion is made) these short forms are compulsory indeed. Thus in अनन्वादेश, we have optionally both ते and तव as in धाता ते भक्तोस्ति and धाता त्व भक्तोस्ति, whereas in अन्वादेश we get ते the short form only as in तस्मै ते नमः &c.

मित—। समानवाक्ये एकवाक्ये इत्यर्थः, तथा च बालमनोरमा "निमित्तनिमित्तिनोरेकवाक्यस्थत्वे इत्यर्थः"। निघातशब्दः अनुदात्तार्थं बोधयति, यतः युष्मदस्मदोः वांनावादयः आदेशाः अनुदात्ताः एव "अनुदात्तम्" इत्यस्य (४०३ सूत्र) अधिकारसत्वात्। "एकवाक्ये युष्मदस्मदादेशाः वक्तव्याः" इति अर्थे लब्धे, किमत्रवाक्यमिति प्रश्ने सति आह—"एकतिङ्वाक्यम्"। एक तिङ् (तिङन्तक्रिया) यस्य इति बहुव्रीहिः। एतच्च वाक्यलक्षणं व्याकरणशास्त्रोपयोगि एव "ततः ओदनं पचतव भविष्यति" इति वाक्ये तिङन्तद्वयसत्वात् तत्स्थाने युष्मदः निघातादेशः 'ते' इति न भवेत्। 'शालीनां ते' इत्यत्र तु स्यादेव यतः अयं एकतिङन्तयुक्तं वाक्यम्॥ किञ्चित् कार्य्यं विधातुमुपात्तस्य कार्य्यान्तरं गमयितुं पुनरुपादानमन्वादेशः इति प्रागुक्तम्। अन्वादेशे युष्मदस्मदोः आदेशाः वांनावादयः सदैव स्युः, अनन्वादेशे तु विकल्पेन एते आदेशाः भवन्ति इति भावः॥

### ४०८। न च-वा-हाहैवयुक्ते। ८।१।२४॥

दी—। चादिपञ्चकयोगे नैते आदेशाः स्युः। हरिस्त्वां मां च रक्षतु।

**अतिमाकम्** ॥ **अतित्वयि, अतिमयि** । **अतित्वयोः—अतिमयोः** । **अतित्वासु—अतिमासु** ॥

मित—। सु—जस्—ङे, ङस्भ्योऽन्यत्र सर्व्वासु च विभक्तिषु एकद्विवहुवचनेषु त्वमावेव आदेशौ अधिकारसत्वात् मपर्य्यन्तस्य बोद्धव्यौ। प्रक्रियासु च युष्मदस्मद्शव्दवत् ज्ञेयौ ॥ सु-जस्-ङे-ङस्सु यथाक्रमं त्वाह्वौ यूयवयौ, तुभ्यमह्यौ तवममावपि ज्ञेयौ इति फलितम् ॥ अधुना युष्मदस्मदोः द्वित्ववाचित्वे उदाहरणमाह—

**दी—। युवाम् आवाम् वा अतिक्रान्त इति विग्रहे सु—जस्—ङे—ङस्सु प्राग्वत् ॥ औ—अम्—औट्सु—अतियुवाम्। अतियुवाम्—अतियुवाम्। अत्यावाम्। अत्यावाम्। अत्यावाम् ॥ अतियुवान्—अत्यावान् ॥ अतियुवया—अत्यावया। अतियुवाभ्याम। अत्यावाभ्याम। अतियुवाभिः, अत्यावाभिः ॥ भ्यम्—अतियुवभ्यम्। अत्यावभ्यम् ॥ ङसिभ्यसोः—अतियुवत्, अतियुवत्। अत्यावत्। अत्यावत् ॥ ङसि—अतियुवयोः। अतियुवयोः। अत्यावयोः—अत्यावयोः ॥ ( षष्ठीवहुवचने ) अतियुवाकम्—अत्यावाकम् ॥ ( ङौ ) अतियुवयि, अत्यावयि ॥ अतियुवासु—अत्यावासु ॥**

मित—। पूर्ववद् ज्ञेया। किन्त्वत्र द्वित्ववाचित्वे युवावौ आदेशौ मपर्य्यन्तस्य एव ॥ अधुना युष्मदस्मदोः वह्वर्थवाचित्वे उदाहरणमाह—

**दी—। युष्मान् अस्मान् वा अतिक्रान्त इति विग्रहे सु-जस्-ङे-ङस् सु प्राग्वत्। औ—अम्—औट्सु—अतियुष्माम्, अतियुष्माम्, अतियुष्माम्। अत्यस्माम्—अत्यस्माम्—अत्यस्माम् ॥ अतियुष्मान्। अतयस्मान् ॥ अतियुष्मया, अत्यस्मया। अतियुष्माभ्याम्, अत्यस्माभ्याम्। अतियुष्माभिः, अत्यस्माभिः ॥ भ्यसि—अतियुष्मभ्यम्, अत्यस्मभ्यम् ॥ ङसिभ्यसोः—अतियुष्मत्, अत्यस्मत् ॥ ङसि—अतियुष्मयोः, अत्यस्मयोः ॥ ( आमि— ) अतियुष्माकम्, अत्यस्माकम्। ( ङौ )—अतियुष्मयि, अत्यस्मयि। अतियष्मासु—अत्यस्मासु।**

चेतसा त्वाम् &c. there being no चाक्षुषज्ञान त्वाम् is used and not त्वा the short form. This prohibition holds good even when the connection of युष्मद् or अस्मद् and the verb is remote and not direct. Thus in भक्तस्तव &c., we get तव and not ते for there is indirect connection of ध्यान and तव। But in the sense of आलोचन i.e., direct optical vision we get the short form as in भक्तस्त्वा &c.

मित—। दृश धातोः भावे शप्रत्यये सति 'पश्य' इति लभ्यते ; दर्शनं हि तदर्थः। पश्यः दर्शनम् अर्थः येषां तैः धातुभिः योगे अनालोचने अचाक्षुषज्ञाने अर्थे गम्यमाने एते वां नावादयः आदेशाः न स्युः इत्यर्थः॥ 'पश्य' इत्यनेन दर्शनसामान्यमुक्तम्। आलोचनं चाक्षुषज्ञानम् तत्व्युदासः अनालोचनम्॥ इति सत्त्वात् वृत्तौ आह— अचाक्षुषज्ञानार्थैर्धातुभिर्योगे' इति॥ अन्यत् सुगमम्॥

## ४१०। सपूर्वायाः प्रथमाया विभाषा। ८।१।२६॥

**दी—। विद्यमानपूर्वात् प्रथमान्तात् परयोरनयोः अन्वादेशे अप्येते आदेशाः वा स्युः। भक्तस्त्वमप्यहं तेन हरिस्त्वां त्रायते स माम्। त्वामा इति वा।**

These short forms of युष्मद् and अस्मद् are optional when अन्वादेश is implied provided युष्मद् and अस्मद् come after their immediately प्रथमान्त use.

मित—। वां नावादयः आदेशाः अनन्वादेशे विभाषिताः, अन्वादेशे तु नित्याः इति प्रागुक्तम्—अन्वादेशेपि अत्र विकल्पार्थम् सूत्रं प्रतिप्रसूयते। 'सपूर्वायाः' इत्यत्र सत्-शब्दः विद्यमानवाची। विद्यमानपूर्वायाः इत्यर्थः। 'प्रथमायाः' इत्यनेन प्रथमान्तायाः इति लभ्यते तदन्तविधिना। अतः आह—'विद्यमानपूर्वात् प्रथमान्तात् परयोः अनयो-रन्वादेशे' इत्यादि।

## ४११। सामन्त्रितम्। २।३।४८।

**दी—। सम्बोधने या प्रथमा तदन्तमामन्त्रितसंज्ञं स्यात्।**

**अतिमाकम्॥ अतित्वयि, अतिमयि। अतित्वयोः—अतिमयोः। अतित्वासु—अतिमासु॥**

मित—। सु—जस्—ङे, ङसभ्योऽन्यत्र सर्व्वासु च विभक्तिषु एकद्विवहुवचनेषु त्वमावेव आदेशौ अधिकारसत्वात् मपर्य्यन्तस्य वोद्धव्यौ। प्रक्रियासु च युष्मदस्मदृशव्दवत् ज्ञेयौ॥ सु-जस्-ङे-ङसस्सु यथाक्रमं त्वाहौ यूयवयौ, तुभ्यमह्यौ तवममावपि ज्ञेयौ इति फलितम्॥ अधुना युष्मदस्मदोः द्वित्ववाचित्वे उदाहरणमाह—

**दी—। युवाम् आवाम् वा अतिक्रान्त इति विग्रहे सु—जस्—ङे—ङस-सु प्राग्वत्॥ औ—अम्—औट्सु—अतियुवाम्। अतियुवाम्—अति-युवाम्। अत्यावाम्। अत्यावाम्। अत्यावाम्॥ अतियुवान्—अत्या-वान्॥ अतियुवया—अत्यावया। अतियुवाभ्याम। अत्यावाभ्याम। अतियुवाभिः, अत्यावाभिः॥ भ्यम्—अतियुवभ्यम्। अत्यावभ्यम्॥ ङसिभ्यसोः—अतियुवत्, अतियुवत्। अत्यावत्। अत्यावत्॥ ङसि—अतियुवयोः। अतियुवयोः। अत्यावयोः—अत्यावयोः॥ (षष्ठीवहुवचने) अतियुवाकम्—अत्यावाकम्॥ (ङौ) अतियुवयि, अत्यावयि॥ अति-युवासु—अत्यावासु॥**

मित—। पूर्ववद् ज्ञेया। किन्त्वत्र द्वित्ववाचित्वे युवावौ आदेशौ मपर्य्यन्तस्य एव॥ अधुना युष्मदस्मदोः वह्वर्थवाचित्वे उदाहरणमाह—

**दी—। युष्मान् अस्मान् वा अतिक्रान्त इति विग्रहे सु-जस्-ङे-ङस् सु प्राग्वत्। औ—अम्—औट्सु—अतियुष्माम्, अतियुष्माम्, अतियुष्माम्। अत्यस्माम्—अत्यस्माम्—अत्यस्माम्॥ अतियुष्मान्। अतयस्मान्॥ अतियुष्मया, अत्यस्मया। अतियुष्माभ्याम्, अत्यस्माभ्याम्। अति-युष्माभिः, अत्यस्माभिः॥ भ्यसि—अतियुष्मभ्यम्, अत्यस्मभ्यम्॥ ङसि-भ्यसोः—अतियुष्मत्, अत्यस्मत्॥ ङसि—अतियुष्मयोः, अत्यस्मयोः॥ (आमि—) अतियुष्माकम्, अत्यस्माकम्। (ङौ)—अतियुष्मयि, अत्य-स्मयि। अतियष्मासु—अत्यस्मासु।**

So also in the mantra "इमं मे गङ्गेयमुने" the आमन्त्रित words prior to यमुने &c., though non-existent, still all are regarded as अनुदात्त with reference to their prior word मे here. The rule for अनुदात्त here is "आमन्त्रितस्य च" meaning an आमन्त्रित word after another word is अनुदात्त।

मित—। पूर्वस्थितम् आमन्त्रितपदम् अविद्यमानवत् बोध्यम् इति सूत्रार्थः। तेन 'अग्ने तव' 'देव अस्मान् पाहि' इत्यत्र 'अग्ने' देव इति आमन्त्रितपदयोः अविद्यमानवत्त्वात् 'देव अस्मान्' च इति पादादौ भवन्तौ 'ते नः' इति पदौ तत्स्थाने नाद्रियेते। "अग्ने नय" "अग्न इन्द्र वरुण" इत्यत्र च 'अग्ने अग्न' पदयोः आमन्त्रितयोः अविद्यमानवत्त्वात् प्रथमोदाहरणे 'नय' इति तिङन्तस्य "तिङतिङः"—( अतिङन्तात्पदात् परं तिङन्तमनुदात्तंस्यात् )—इति सूत्रेण अनुदात्तत्वं न भवति; द्वितीयोदाहरणे च इन्द्रादि-आमन्त्रितपदानां "आमन्त्रितस्य च"—( पदात् परम् आमन्त्रितम् अनुदात्तं भवति )—इति अनुदात्तत्वं न भवति। अतः आह—'इह ( प्रथमोदाहरणद्वये ) युष्मदस्मदोरादेशः, ( तृतीये ) तिङन्तनिघातः, ( चतुर्थे ) आमन्त्रितनिघातश्च न भवति' इति। निघातशब्दः अनुदात्तवाची इत्युक्तम्॥ 'सर्वदा वच्च देव नः' इत्यादि सुगमम्।

**४१३। नामन्त्रिते समानाधिकरणे सामान्यवचनम्। ८।१।७३॥**

**दी—। विशेष्यं समानाधिकरणे विशेषणे आमन्त्रिते परे नाविद्यमानवत् स्यात्। हरे दयालो नः पाहि। अग्ने तेजस्विन्।**

The noun word having an adjective आमन्त्रित word in the same विभक्ति following it is to be treated as not अविद्यमानवत् (non-existent). Thus in हरे दयालो &c, the समानाधिकरण adjective आमन्त्रित word 'दयालो' follows the noun ( विशेष्य word ) हरे, so हरे is treated as not non-existent, hence 'नः', is used though दयालो is अविद्यमानवत्॥

**अतिमाकम्॥ अतित्वयि, अतिमयि। अतित्वयोः—अतिमयोः। अतित्वासु—अतिमासु॥**

मित—। सु—जस्—ङे, ङसभ्योऽन्यत्र सर्व्वासु च विभक्तिषु एकद्विवहुवचनेषु त्वमावेव आदेशौ अधिकारसत्वात् मपर्य्यन्तस्य बोद्धव्यौ। प्रक्रियासु च युष्मदस्मद्शब्दवत् ज्ञेयौ॥ सु-जस्-ङे-ङससु यथाक्रमं त्वाहौ यूयवयौ, तुभ्यमह्यौ तवममावपि ज्ञेयौ इति फलितम्॥ अधुना युष्मदस्मदोः द्वित्ववाचित्वे उदाहरणमाह—

**दी—। युवाम् आवाम् वा अतिक्रान्त इति विग्रहे सु—जस्—ङे—ङस-सु प्राग्वत्॥ औ—अम्—औट्सु—अतियुवाम्। अतियुवाम्—अति-युवाम्। अत्यावाम्। अत्यावाम्। अत्यावाम्॥ अतियुवान्—अत्या-वान्॥ अतियुवया—अत्यावया। अतियुवाभ्याम। अत्यावाभ्याम। अतियुवाभिः, अत्यावाभिः॥ भ्यम्—अतियुवभ्यम्। अत्यावभ्यम्॥ ङसिभ्यसोः—अतियुवत्, अतियुवत्। अत्यावत्। अत्यावत्॥ ङसि—अतियुवयोः। अतियुवयोः। अत्यावयोः—अत्यावयोः॥ (षष्ठीवहुवचने) अतियुवाकम्—अत्यावाकम्॥ (ङौ) अतियुवयि, अत्यावयि॥ अति-युवासु—अत्यावासु॥**

मित—। पूर्ववद् ज्ञेया। किन्त्वत्र द्वित्ववाचित्वे युवावौ आदेशौ मपर्य्यन्तस्य एव॥ अधुना युष्मदस्मदोः वह्वर्थवाचित्वे उदाहरणमाह—

**दी—। युष्मान् अस्मान् वा अतिक्रान्त इति विग्रहे सु-जस्-ङे-ङस् सु प्राग्वत्। औ—अम्—औट्सु—अतियुष्माम्, अतियुष्माम्, अतियुष्माम्। अत्यस्माम्—अत्यस्माम्—अत्यस्माम्॥ अतियुष्मान्। अतयस्मान्॥ अतियुष्मया, अत्यस्मया। अतियुष्माभ्याम्, अत्यस्माभ्याम्। अति-युष्माभिः, अत्यस्माभिः॥ भ्यसि—अतियुष्मभ्यम्, अत्यस्मभ्यम्॥ ङसि-भ्यसोः—अतियुष्मत्, अत्यस्मत्॥ ङसि—अतियुष्मयोः, अत्यस्मयोः॥ (आमि—) अतियुष्माकम्, अत्यस्माकम्। (ङौ)—अतियुष्मयि, अत्य-स्मयि। अतियष्मासु—अत्यस्मासु।**

भम् ( अस् ), सुपाद् ending in पाद् is a 'भ', so here पाद् changes into पद् and the form is सुपदः। Similarly सुपदा &c.

मित—। भाधिकारः अङ्गाधिकारश्च वर्त्तते। तच्च 'पाद्' इत्यनेन सह सम्बध्यते। तदन्तविधिरस्ति। अतः आह—'पादशब्दान्त यदङ्गं भम्' इत्यादि॥ "निर्दिश्यमानस्य आदेशा भवन्ति" इति पादशब्दस्यैव 'पद्' इति, न तु, समुदायस्य सुपादशब्दस्य॥ दान्तो ऽयमादेशः बोध्यः; तान्ते आदेशे पदान्तत्वाभावात् 'सुपदः सुपदा' इत्यादौ दकारो न स्यात्॥ मन्थ विलोडने भ्वादौ क्र्यादौच। अग्निं मन्थति मथ्नाति वा क्विपि अग्निमथ् थकारान्तं प्रातिपदिकम्। क्विप्रिसति "अनिदिताम् हलः उपधायाः क्ङिति" इति नलोपः 'अग्निमथ्' इति शब्दः। अस्य सौ हल्ङ्यादिलोपे जश्त्वे चर्त्वे च सति—अग्निमत्-अग्निमद् इति, तदेवाह—

**दी—। अग्निं मन्थति इति अग्निमत्—अग्निमद्। अग्निमथौ—अग्निमथः। अग्निमद्भ्याम् इत्यादि।**

मित—। सुगमा॥ इदमत्र ज्ञातव्यमस्ति—मथि हिंसायामिति भौवादिकस्य तु इदित्वात् नलोपाभावे अग्निमन्थ् इति प्रातिपदिकम्; अस्य सौ संयोगान्तलोपे अग्निमत् इति रूपम्। औङि—अग्निमन्थौ इत्यादि॥

प्रकृष्टमञ्चति गच्छतीति क्विनि 'प्राच्' इति प्रातिपदिकम् अस्य रूपं वक्ष्यन् उपन्यस्यति—क्विन् चात्र "ऋत्विक्दधृक—" इत्यादि सूत्रेण सुपि उपपदे भवति इति उक्तम्, तदेव स्मारयन् आह—

**दी—। "ऋत्विग्—" ( सूत्र ३७३ ) इत्यादि सूत्रेण अञ्चेः सुप्यु पपदे क्विन्।** ( ततः प्राच् इति प्रातिपदिकेजाते अस्य रूपाण्याह— )

**४१५। अनिदितां हल उपधाया क्ङिति। ६।४।२४॥**

**दी—। हलन्तानाम् अनिदितामङ्गनाम् उपधायाः नस्य लोपः स्यात् किति ङिति च। "उगिदचाम्—" इति ( अत्र ) नुम्। "संयोगान्तस्य लोपः"। नुमो नकारस्य "क्विन्प्रत्ययस्य कुः" इति कुत्वेन ङकारः। प्राङ्॥ अनुस्वारपरसवर्णौ। प्राञ्चौ—प्राञ्चः। प्राञ्चम्—प्राञ्चौ॥**

**अतिमाकम् ॥ अतित्वयि, अतिमयि । अतित्वयोः—अतिमयोः । अतित्वासु—अतिमासु ॥**

मित—। सु—जस्—ङे, ङसभ्योऽन्यत्र सर्व्वासु च विभक्तिषु एकद्विवहुवचनेषु त्वमावेव आदेशौ अधिकारसत्वात् मपर्य्यन्तस्य बोद्धव्यौ। प्रक्रियासु च युष्मदस्मद्शब्दवत् ज्ञेयौ ॥ सु-जस्-ङे-ङसस्सु यथाक्रमं त्वाहौ यूयवयौ, तुभ्यमह्यौ तवममावपि ज्ञेयौ इति फलितम् ॥ अधुना युष्मदस्मदोः द्वित्ववाचित्वे उदाहरणमाह—

**दी—। युवाम् आवाम् वा अतिक्रान्त इति विग्रहे सु—जस्—ङे—ङस-सु प्राग्वत् ॥ औ—अम्—औट्सु—अतियुवाम् । अतियुवाम्—अति-युवाम् । अत्यावाम् । अत्यावाम् । अत्यावाम् ॥ अतियुवान्—अत्या-वान् ॥ अतियुवया—अत्यावया । अतियुवाभ्याम । अत्यावाभ्याम । अतियुवाभिः, अत्यावाभिः ॥ भ्यम्—अतियुवभ्यम् । अत्यावभ्यम् ॥ ङसिभ्यसोः—अतियुवत्, अतियुवत् । अत्यावत् । अत्यावत् ॥ ङसि—अतियुवयोः । अतियुवयोः । अत्यावयोः—अत्यावयोः ॥ ( षष्ठीवहुवचने ) अतियुवाकम्—अत्यावाकम् ॥ ( ङौ ) अतियुवयि, अत्यावयि ॥ अति-युवासु—अत्यावासु ॥**

मित—। पूर्ववद् ज्ञेया। किन्त्वत्र द्वित्ववाचित्वे युवावौ आदेशौ मपर्य्यन्तस्य एव ॥ अधुना युष्मदस्मदोः वह्वर्थवाचित्वे उदाहरणमाह—

**दी—। युष्मान् अस्मान् वा अतिक्रान्त इति विग्रहे सु-जस्-ङे-ङस् सु प्राग्वत् । औ—अम्—औट्सु—अतियुष्माम्, अतियुष्माम्, अतियुष्माम् । अत्यस्माम्—अत्यस्माम्—अत्यस्माम् ॥ अतियुष्मान् । अत्यस्मान् ॥ अतियुष्मया, अत्यस्मया । अतियुष्माभ्याम्, अत्यस्माभ्याम् । अति-युष्माभिः, अत्यस्माभिः ॥ भ्यसि—अतियुष्मभ्यम्, अत्यस्मभ्यम् ॥ ङसि-भ्यसोः—अतियुष्मत्, अत्यस्मत् ॥ ङसि—अतियुष्मयोः, अत्यस्मयोः ॥ ( आमि— ) अतियुष्माकम्, अत्यस्माकम् । ( ङौ )—अतियुष्मयि, अत्य-स्मयि । अतियुष्मासु—अत्यस्मासु ।**

हलन्तधात्वभावात् उपधायाः नस्य लोपः न स्यात् ॥ एवं प्राच् सु इत्यत्र "उगिदचाम्—" इति नुमि सति प्रान्च् सु इति जाते, हल्ङ्यादिना सुलोपे, संयोगान्त लोपे च प्रान् इति जातम्। ततः "क्विन्प्रत्ययस्य—" इति कुत्वे प्राङ् इति ॥ सर्वनामस्थाने नुमि सति प्रान्च् औ इति जाते "नश्चापदान्तस्य झलि" इति अपादान्तस्य नस्य अनुस्वारे सति प्रां च इति स्थिते "अनुस्वारस्य ययि परसवर्णः" इति परसवर्णे च सति प्राञ्च् इति, एतदभि-प्रेत्य दीक्षितः आह—अनुस्वार परसवर्णौ इत्यादि ॥ प्रान्च् औ इत्यत्र "स्तोः श्चुना—" (८।४।४०) इति श्चुत्वेन प्राञ्च् इति सिध्यति इति न वक्तव्यम्। यतः "स्तोः श्चुना—" इति कृतमपि श्चु "नश्चापदान्तस्य" इत्येतत् प्रत्यसिद्धम् ॥

प्राच्+शस् (अस्) इति स्थिते आह—

४१६। अचः। ६।४।१३८ ॥

दी—। लुप्तनकारस्य अञ्चतेर्भस्याकारस्य लोपः स्यात्।

The अकार of the root अञ्च् of which नकार has elided and which is a 'भ', elides. Thus in प्राच्+शस्, अञ्च् is लुप्त नकार and is a 'भ', so its अकार elides and we get प्रच्+शस् (शस्) and we look forward—

मित—। "अल्लोपोऽनः" इत्यतःअल्लोपः अत्रास्ति। 'अचः' इति लुप्तनकारस्य अञ्चतेः ग्रहणम्। भाधिकारस्तु वर्त्तते एव। ततः आह—'लुप्तनकारस्य अञ्चतेः भस्य अकारस्य' इत्यादि। प्राच् इत्यत्र तु प्र+अच् इति सङ्घातः। ततः अस्य सूत्रस्य प्राप्तौ शसि परे 'अचः' अकारस्य लोपे सति प्रच्+अस् इति जाते आह—

४१७। चौ। ६।३।१३८ ॥

दी—। लुप्ताकारनकारे अञ्चतौ परे पूर्वस्य अणो दीर्घः स्यात्। प्राचः। प्राचा, प्राग्भ्याम् इत्यादि ॥ प्रत्यङ्—प्रत्यञ्चौ—प्रत्यञ्चः। प्रत्यञ्चम्—प्रत्यञ्चौ। 'अचः' इति लोपस्य विषये अन्तरङ्गोपि यण् न प्रवर्त्तते। "अकृतव्यूहाः पाणिनीयाः—" इति परिभाषया। प्रतीचः। प्रतीचा ॥ अमुम् अञ्चति इति विग्रहे 'अदस् अञ्च्' इतिस्थिते—

**अतिमाकम्** ॥ **अतित्वयि, अतिमयि । अतित्वयोः—अतिमयोः । अतित्वासु—अतिमासु** ॥

मित—। सु—जस्—ङे, ङसभ्योऽन्यत्र सर्व्वासु च विभक्तिषु एकद्विबहुवचनेषु त्वमावेव आदेशौ अधिकारसत्वात् मपर्य्यन्तस्य बोद्धव्यौ। प्रक्रियासु च युष्मदस्मद्शब्दवत् ज्ञेयौ ॥ सु-जस्-ङे-ङससु यथाक्रमं त्वाह्नौ यूयवयौ, तुभ्यमह्यौ तवममावपि ज्ञेयौ इति फलितम् ॥ अधुना युष्मदस्मदोः द्वित्ववाचित्वे उदाहरणमाह—

**दी—। युवाम् आवाम् वा अतिक्रान्त इति विग्रहे सु—जस्—ङे—ङस-सु प्राग्वत्॥ औ—अम्—औट्सु—अतियुवाम्। अतियुवाम्—अति-युवाम्। अत्यावाम्। अत्यावाम्। अत्यावाम्॥ अतियुवान्—अत्या-वान्॥ अतियुवया—अत्यावया। अतियुवाभ्याम। अत्यावाभ्याम। अतियुवाभिः, अत्यावाभिः॥ भ्यम—अतियुवभ्यम्। अत्यावभ्यम्॥ ङसिभ्यसोः—अतियुवत्, अतियुवत्। अत्यावत्। अत्यावत्॥ ङसि—अतियुवयोः। अतियुवयोः। अत्यावयोः—अत्यावयोः॥ (षष्ठीबहुवचने) अतियुवाकम्—अत्यावाकम्॥ (ङौ) अतियुवयि, अत्यावयि॥ अति-युवासु—अत्यावासु॥**

मित—। पूर्ववद् ज्ञेया। किन्त्वत्र द्वित्ववाचित्वे युवावौ आदेशौ मपर्य्यन्तस्य एव॥ अधुना युष्मदस्मदोः बह्वर्थवाचित्वे उदाहरणमाह—

**दी—। युष्मान् अस्मान् वा अतिक्रान्त इति विग्रहे सु-जस्-ङे-ङस् सु प्राग्वत्। औ—अम्—औट्सु—अतियुष्माम्, अतियुष्माम्, अतियुष्माम्। अत्यस्माम्—अत्यस्माम्—अत्यस्माम्॥ अतियुष्मान्। अतयस्मान्॥ अतियुष्मया, अत्यस्मया। अतियुष्माभ्याम्, अत्यस्माभ्याम्। अति-युष्माभिः, अत्यस्माभिः॥ भ्यसि—अतियुष्मभ्यम्, अत्यस्मभ्यम्॥ ङसि-भ्यसोः—अतियुष्मत्, अत्यस्मत्॥ ङसि—अतियुष्मयोः, अत्यस्मयोः॥ (आमि—) अतियुष्माकम्, अत्यस्माकम्। (ङौ)—अतियुष्मयि, अत्य-स्मयि। अतियष्मासु—अत्यस्मासु।**

मित—। "ढ्रलोपे पूर्वस्यदीर्घोऽणः" इत्यतः "पूर्वस्यदीर्घोणः" वर्त्तते। 'चौ' इति चुशब्दस्य सप्तम्येकवचनम्। 'चु' इति लुप्ताकार-नकारस्य अञ्चतेः ग्रहणम्। ततः आह—लुप्तनकाराकारस्य अञ्चतौ परे इत्यादि॥ तेन प्रच्+अस् इत्यत्र पूर्वस्य अणः दीर्घे सति प्राचः इति, एवं प्राचा। प्राग्भ्याम् इति "क्विन्प्रत्ययस्य कुः" इति कुत्वम्॥ 'प्राचः' इत्यस्य अकृतयोरप्यं तयोः सूत्रयोः सिद्धौ सत्यां प्रतीचः इत्यादि सिद्धार्थं सूत्रयोः वचनम्। अतः प्रत्यच् शब्दस्य रूपाण्याह—प्रत्यङ् प्रत्यञ्चौ इत्यादि प्राच्शब्दवत्॥ ननु प्रत्यच् +शस् (अस्) इत्यत्र असर्वनामस्थानत्वात् असति नुमि 'अचः' इति सूत्रेण अकारलोपे च प्रत्य च् इति जाते 'चौ' इति सूत्रस्य प्राप्तिरेव न भवति। तदा सूत्रमपि व्यर्थं स्यात्, प्रत्यचः इति अनिष्टं च रूपमापद्येत। ततः आह—'अचः' इति लोपस्य विषये "अन्तरङ्गेऽपि यण् न भवति"। ततः प्रत्यच्+शस् इत्यत्र 'अचः' इत्यनेन अकारलोपे सति यण् न स्यात् प्रति च्+शस् इति च भवति। सर्वमेतत् "अकृतव्यूहा—" इति परिभाषया सम्भवति। अस्य अर्थो यथा—निमित्तं विनाशोन्मुखं दृष्ट्वा तत्प्रयुक्तं कार्य-मपि न स्यात्। प्रकृते तु यण्निमित्तस्य अकारस्य 'अचः' इति सूत्रेण विनाशे सति अकारनिमित्तं यण् अपि न स्यात्। एवम् प्रति च्+शस्=प्रतीचः ('चौ' इति दीर्घे सति)॥ भाष्ये तु 'चौ' इत्यारम्भसामर्थ्यादेव यण् न इति समाहितम्॥ अमुमञ्चति इति क्विनि उपपदसमासे च अदस्+अञ्च् इति स्थिते विशेषमाह—

## ४१८। विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये। ६।३।९२॥

**दी—। अनयोः सर्वनाम्नश्च टेरद्र्यादेशः स्यात् अप्रत्ययान्ते अञ्चतौ परे।**

Of the words विष्वक् and देव and of pronominal bases, the टि—portion is replaced by अद्रि when अञ्चु with its affixes not heard (e.g., क्विन्, क्विप्) follow. Thus अदस्+अञ्च=अदद्रि अञ्च्, when यण् comes and नकार of अञ्च elides by the rule "अनिदिताम्—" (ante.) and the base is अदद्र्यच्। It is now being declined—

मित—। 'अद्रि' इति लुप्तप्रथमाकम्। 'विष्वग्देवयोश्च' इति चकारेण "आसर्व-नाम्नः" (६।३।९१) इतिसूत्रात् 'सर्वनाम्नः' इत्यस्य समुच्चयः। 'अप्रत्ययान्ते' अप्रयु-

मानप्रत्ययान्ते इत्यर्थः—यथा, क्विन्, क्विप् इति। अञ्चतौ वप्रत्ययान्ते इत्यपि पाठोऽत्र दृश्यते। तदा 'वप्रत्ययान्ते' वकारयुक्तप्रत्ययान्ते इत्यर्थः। फलञ्च सममेव॥ एवम् अदस्+अञ्च इत्यत्र टेः अद्रि सति अदद्रि+अञ्च=अदद्राच् ("अनिदिताम्—" इति नलोपः)। अस्य रूपाण्याह—

४१६। अदसोऽसेर्दादु दो मः। ८।२।८०॥

दी—। अदसोऽसान्तस्य दात् परस्य उदूतौ स्तः, दस्य मश्च। उ इति ह्रस्वदीर्घयोः समाहारद्वन्द्वः। आन्तरतम्यात् ह्रस्वव्यञ्जनयोः ह्रस्वः, दीर्घस्य दीर्घः। अमुमुयङ्—अमुमुयञ्चौ—अमुमुयञ्चः। अमुमुयञ्चम्।

अमुमुयञ्चौ—अमुमुईचः। अमुमुईचा—अमुमुयग्भ्याम् इत्यादि। मुत्वस्यासिद्धत्वात् न यण्॥ "अन्त्यबाधे अन्त्यसदेशस्य" इति परिभाषाम् आश्रित्य परस्यैव मुत्वंवदतांमते—'अदमुयङ्'॥ "अः 'सेः सकारस्य स्थाने, यस्य सः 'असिः' तस्य असेः" इति व्याख्यानात् "तदाद्यत्वविषये एव मुत्वं नान्यत्र" इति पक्षे—अददद्र्यङ्। उक्तं च भाष्ये—

अदसोऽद्रेः पृथङ्मुत्वं केचिदिच्छन्तिलत्ववत्।
केचिदन्त्यसदेशस्य नेत्येकेऽसेर्हि दृश्यते॥" इति॥

विष्वग्देवयोः किम्?—अश्वाची। अञ्चतौ किम्?—विष्वग्युक्। अप्रत्यये किम्?—विष्वगञ्चनम। अप्रत्ययग्रहणं ज्ञापयति 'अन्यत्र धातुग्रहणे तदादिविधिः' इति। तेनायस्कारः। "अतः कृकमि—" इति सः॥

उत् and ऊत् come after the द of अदस् not ending in स, and also its द changes into म। 'उ' in the sutra (e.g., दात् उ=दादु) stands for both उ and ऊ by समाहार द्वन्द्व। Owing to similarity of एकमात्रोच्चारण; ह्रस्व उ comes for both ह्रस्व vowel and consonant, and दीर्घ ऊ comes for a दीर्घ vowel owing to द्विमात्रोच्चारण। Thus in अदद्राच् सु with नुम् by the rule "उगिदचां सर्वनामस्थाने—" we have अदद्राञ्च् सु and सु elides by "हल्ङ्याब्भ्यो—" now चकार elides by

संयोगान्तलोप and the form is: अदद्रान् ; then by कुत्व by the rule "क्विन् प्रत्ययस्य कुः" the result is अदद्राङ् । Now here अदस् being असान्त its first द changes to म and its ह्रस्व अकार to उकार and the form is अमुद्राङ् ; again द्र being a part of अदस् by 'अद्रि' आदेश (see previous rule) this द्र changes to म and रेफ changes to उ, so the final form is अमुमुयङ् । Similarly अमुमुयञ्चौ &c. as in प्राञ्चौ । In अदद्राच् + शस्, we have elision of अ of अलोपिअच् giving अदद्र इच्, here उत्व and मत्व are as before and we get अमुमु इच् ; then by the rule 'चौ' इ becomes दीर्घ and the final form is अमुमुईचः । Similarly अमुमुईचा &c. In भ्याम् we get कुत्व and the form is अमुमुयग्भ्याम् ( उत्व and मत्व being as before above ). In अमुमुईचः—'मु' + ई should result in यण्, but here यण् does not come in by the rule "इकोयणचि" (६।१।७७), for मुत्व by this rule in ८।२।८० is to be treated as असिद्ध with respect to यण् by the rule "पूर्वत्रासिद्धम्" (८।२।१)। Bhattoji now discusses a second view on this rule thus—the word 'अदसः' in the sutra should be taken as अदसः स्थाने—षष्ठी in अदसः being स्थाने षष्ठी । Then the rule "अलोऽन्त्यस्य" operates and then उत्व and मत्व are for the final of अदस् । But the final being सकार we do not get दात् परत्व for उत्व । Now the परिभाषा "अन्त्यबाधे अन्त्यसदेशस्य" declares that if an operation cannot come at the final owing to contradiction, then let it come near the final only, so here उत्व and मुत्व come for the final द only which is near अन्त्यसमीपवर्त्तिन्, thus in अदद्रान् final दात् परत्व उत्व comes in and we get अदमुयङ् ॥ There is a third interpretation also in this point e.g., असेः is expounded as 'सेः' सकारस्य स्थाने 'अः' यस्य स 'असिः', तस्य असेः । Then according to this view मुत्व comes only when there is अत्व for सकार of अदस् by

the rule "त्यादामीनाम:"। Here however there being no अत्व for स of अदस्, मुत्व &c. does not at all come and we get अदद्राङ्। Thus the Bhashya says—"some wish separately मुत्व of both of the अद्रि आदेश and of अदस् as नत्व of both रेफ and ऋकार in the case of चलीक्लृप्यते by the rule "क्रपो रोल:" ; others wish मुत्व of the word near the final i.e., of द्र portion only, others again, does not wish मुत्व at all, for they say it ( मुत्व ) is when अत्व comes in place of सकार of अदस्" ॥ Why do we say 'विष्वग्देवयो:' in the rule? Witness अश्वाची without अद्र्यादेश for here neither विष्वक् nor देव or सर्वनाम words do come as उपपद। Why do we say 'अञ्चतौ' in the sutra?—Witness विष्वग्युक्। Here there being no अञ्चु धातु at the end there is no अद्र्यादेश। Why do we say अप्रत्यये (i.e., अश्रूयमाणप्रत्यये ) in the sutra? Witness विष्वगञ्चनम् without अद्र्यादेश, for here there is श्रूयमाणप्रत्यय i.e., ल्युट् ( अन ) at the end. Saying of अप्रत्यये in the sutra suggests this much also that in other cases when a धातु is taken in a sutra, then take तदादिविधि there i.e., a word with the धातु is to be reckoned there. Thus in the sutra "अत: कृकमि—" &c. (sutra 160) the root 'कृ' implies तदादिविधि i.e., a word ending with the धातु is to be reckoned there. Thus in the sutra "अत: कृ—", the root कृ emplies तदादिविधि i.e, a word ending in कृ, so we get अयस्कार:—सत्व for विसर्ग coming by this rule.

मित—। 'असे:' असान्तस्य 'अदस:' दात् उ द: म: इति सान्वय: सूत्रच्छेद:। 'अदस:' इत्यवयवषष्ठी, 'असे:' इति अस्य विशेषणम् च। अविद्यमान: 'सि:' सकार: यस्य स: 'असि:'। तस्य अदस: इत्यर्थ:। दात्उ=दात् परस्य उ। अत: आह—'अदसोऽसान्तस्य दात्परस्य' इत्यादि ॥ उश्च ऊश्च 'उ'—समाहारद्वन्द्व: नपुंसकैवचनम् "ह्रस्वो नपुंसके प्रातिपदिकस्य" इति ह्रस्वत्वञ्च। अत: आह—'उ' इति ह्रस्वदीर्घयो:

समाहारद्वन्द्वः। कुत्र 'उ' कुत्र वा 'ऊ' इति सन्देहे सति आह—'आन्तरतम्यात् ह्रस्वव्यञ्जनयोः' उभयोरपि एकमात्रिकयोः उच्चारणसाम्यात् 'ह्रस्वः उकारः' 'दीर्घस्य' द्विमात्रिकस्य उच्चारणसाम्यात् दीर्घ ऊकारः इत्यर्थः॥ अधुना अदद्र्यच् सु इत्यत्र सर्वनामस्थाने "उगिदचाम्—" इति नुमि सति, हल्ङ्यादिलोपे संयोगान्तलोपे च अदद्र्यन् इति। ततः "क्विन्प्रत्ययस्य कुः" इति कुत्वे सति अदद्र्यङ् इति। अधुना अदद्र्यङ् इत्यत्र उभयोरपि दकारयोः अदसवयवीभूतयोः मत्वे उत्वे च सति अमुमुयङ् इति सिध्यति॥ अमुमुयञ्चौ इति प्राञ्चौ इतिवत्—उत्वमत्वे तु पूर्ववत्॥ अदद्र्यच्+शस् इत्यत्र नलोपिनोऽञ्चतेः "अचः" इति अकारलोपे सति अदद्र इच् शस् इति जाते 'चौ' इति दीर्घे सति अदद्र ईच्+शस्, पूर्ववत् उत्वमत्वे सति अमुमुईचः इति। अत्र 'मुई' इत्यंशे यण् न स्यात्। यतः यण्विषये मुत्वम् असिद्धं वाच्यम्॥ अत्र पुनः मतान्तरमाह—सूत्रे 'अदसः' इति स्थानषष्ठीमाश्रित्य केचित् असान्तस्य अदसः अन्त्यस्य इति व्याख्यानयन्ति। एतन्मते "अलोन्त्यस्य" इति सूत्रं तु प्रवर्त्तते। अन्त्यवर्णश्चात्र दात्परो न भवति। अद्र्यादेशे कृते तु इकारः अन्त्यः सोपि दात्परो न भवति। ततश्च अलोन्त्यपरिभाषायाः अप्रवृत्त्या अन्त्यस्य आदेशबाधे सति अन्तसमीपवर्त्तिनः एव दात्परस्य उत्त्वम्, दस्य च मः "न तु ततः पूर्वयोः" दकारतदुत्तरवर्णयोः मुत्वमित्यर्थः। एतत् सर्वं "अन्त्यबाधे अन्त्यसदेशस्य" इति परिभाषयैव ज्ञेयम्। एवमेतन्मते "अदमुयङ्" इत्येव भवति॥ पुनश्च मतान्तरमाह—सूत्रे 'असेः' इत्येतत् एवं व्याख्यायते—'सिः' सकारस्य स्थाने 'अः' यस्य 'असिः' तस्य असेः इति। एतन्मते—अदस्स्थाने "त्यदादीनामः" इति अत्वे सत्येव मुत्वं प्रवर्त्तते नान्यत्र; ततः अत्र असति अत्वे अदद्र्यङ् इत्येव सिद्धति। सर्वमेतत् अभिप्रेत्य भाष्यमेवात्र उदाहृतम्—अदसोऽद्रेरित्यादि॥ अन्वयः—केचित् 'अदसः' (अदसो दकारस्य इत्यर्थः) अद्रेः (अद्र्यादेशस्य च) पृथक् मुत्वम् इच्छन्ति, लत्ववत् ("कृपोरोलः" इति सूत्रेण चलीक्लृप्यते इत्यत्र रेफऋकारयोः उभयोः यथा लत्वमिच्छन्ति तद्वत् इत्यर्थः); केचित् अन्त्यसदेशस्य (मुत्वमिच्छन्ति इति शेषः), एके (केचित्) न (मुत्वं न इति वदन्ति इति शेषः)। (यतः एते वदन्ति—) मुत्वं असेः ('अः' अकारः त्यदाद्यत्वेन 'सेः' सकारस्थाने यस्य तादृशस्य अदसः) दृश्यते हि (नान्यत्र इत्यर्थः)॥

सूत्रे 'विष्वग्देवयोः' कथमुक्तम् ? अश्वाची इत्यत्र तदभावात् अद्र्यादेशो मा भूत् इत्यर्थः ॥ सूत्रे अञ्चतौ किमर्थं गृहीतम् ?—विष्वग्युज् इत्यादौ असति अञ्चतौ परे यथा अद्र्यादेशः न स्यात् तदर्थम् ॥ सूत्रे अप्रत्यये ( अश्रूयमाणप्रत्यये इत्यर्थः ) किमर्थमुक्तम् ? विष्वगञ्चनम् इत्यत्र अञ्चतेः श्रूयमाणप्रत्ययस्य ल्युटः ( अनः इत्यर्थः ) सत्वात् अद्र्यादेशो यथा न स्यात् ॥ सूत्रे अप्रत्ययग्रहणम् इदमपि ज्ञापयति—अन्यत्र सूत्रे धातौ उक्ते सति तदादिविधिः ज्ञेयः इति । एवम् "अतः कृकमि—" इति सूत्रे 'कृ' इति धातुग्रहणे सति कृ-युक्तः शब्दः गृहीतव्यः । ततः अयः+कार इति स्थिते उक्तसूत्रेण सकारे सति अयस्कार इति सिद्ध्यति ॥

अधुना उद्+अञ्च+क्विन्=उदच् इति शब्दरूपमाह—

**दी—। उदङ्—उदञ्चौ—उदञ्चः ( इत्यादि प्राच्शब्दवत् ) । शसादौ अचि** ( उदच् इत्यत्र 'अचः' इति अकारस्य लोपे प्राप्ते आह— )—

**४२० । उद ईत् । ६।४।१३९ ॥**

**दी—। उच्छब्दात् परस्य लुप्तनकारस्य अञ्चतेर्भस्य अकारस्य ईत् स्यात् । उदीचः । उदीचा । उदग्भ्याम् इत्यादि ।**

Of अञ्च् whose नकार has elided and which comes after the prefix उद् and which is technically termed as 'भ' has its अकार changed into ईत् । Thus उदच्+शस्=उदीचः with अकार of अच् changed to ईत् ।

मित—। 'अचः' इति वर्त्तते । 'अचः' इति अञ्चतिर्लुप्तनकारो गृह्यते ततः आह—"उच्छब्दात्परस्य लुप्तनकारस्य अञ्चतेः" इत्यादि ॥ अन्यत्सुगमम् ॥ सम्यक् अञ्चतीति विग्रहे सम्+अञ्च्+क्विन् इति जाते—

**४२१ । समः समि । ६।३।९३ ॥**

**दी—। अप्रत्ययान्ते । ञ्चतौ परे समः समिरादेशः स्यात् । सम्यङ्—सम्यञ्चौ—सम्यञ्चः । समीचा इत्यादि ( प्राग्वत् ) ॥**

समि comes in place of सम when अञ्चु follows as उत्तरपद and when there is no audible प्रत्यय after it. Thus सम् अञ्च + क्विन् = सम्यच् which is declined in सर्वनामस्थान affixes like प्राच्। In शस्, the अ of अच् elides by 'अचः' and then in समिच् + अस् इकार is lengthened by the rule 'चौ' and we get समीचः, समीचा &c.

मित—। "विष्वगदेवयोश्च टेरद्र्यञ्चतौ अप्रत्यये" इत्यतः 'अञ्चतौ अप्रत्यये' वर्त्तते। ततः आह—'अप्रत्ययान्ते ( अश्रूयमाणप्रत्ययान्ते, अन्ते प्रत्ययाभावे लुप्त प्रत्यये इत्यर्थः ) अञ्चतौ परे इत्यादि॥ एवं सम् + अञ्च + क्विन् = सम्यच्॥ सर्वनामस्थाने प्राच् शब्दवत् रूपाणि॥ शसादौ अचि सम्यच् अस् इत्यत्र 'अचः' इति अकारलोपे समिच् अस् इति जाते 'चौ' इति दीर्घे च समीचः इति स्यात्। एवं समीचा॥ अन्यत् सुगमम्॥

[ अत्र 'वप्रत्ययान्ते' इति पाठे तु 'व' इति क्विप्क्विनोः सामान्यग्रहणम्—इति प्रागुक्तम् ]॥

सह अञ्चतीति विग्रहे सह + अञ्च + क्विन् इति स्थिते विशेषमाह—

**४२२। सहस्य सध्रिः। ६।३।९५॥**

**दी—। अप्रत्ययान्ते अञ्चतौ परे** ( सहस्य सध्रिः आदेशः स्यात् इति शेषः )। **सध्र्यङ्** ( इति प्राच्शब्दवत् )। [ शसादौ अचि सध्रीचः ( समीचः इतिवत् ) ]।

Eng.—Easy.

मित—। सुगमा॥ तिरस् वक्रमञ्चतीति तिरस् + अञ्च + क्विप् इति स्थिते विशेषमाह—

**४२३। तिरसस्तिर्य्यलोपे। ६।३।९४॥**

**दी—। अलुप्ताकारे अञ्चतौ अप्रत्ययान्ते परे तिरसः 'तिरि—' आदेशः स्यात्। तिर्य्यङ्—तिर्य्यञ्चौ—तिर्य्यञ्चः। तिर्य्यञ्चम्—तिर्य्यञ्चौ तिरश्चः। तिरश्चा—तिर्य्यग्भ्याम् इत्यादि।**

दी—। 'क्रुञ्च कौटिल्याल्पीभावयोः'। अस्य "ऋत्विग्दधृक्—" (इति) आदिना (इति सूत्रेण इत्यर्थः) नलोपाभावोऽपि निपात्यते। (क्रुञ्च इति प्रातिपदिकम्। अस्य सौ) क्रुङ्। क्रुञ्चौ—क्रुञ्चः। क्रुङ्भ्याम्॥ अत्र क्विन्नन्तत्वात् कुत्वम्, यथा प्राङ्भ्याम् इत्यादौ॥ (पयः मुञ्चतीति क्विपि 'पयोमुच्' इति प्रातिपदिकम्। अस्य सौ "चोः कुः" इति कुत्वम्। जश्त्वचर्त्वे। तदाह—) पयोमुक्—पयोमुग्। पयोमुचौ—पयोमुचः॥ (सुष्ठु वृश्चतीति सुपूर्वात् व्रश्चतेः क्विपि "ग्रहिज्या—" इति सूत्रेण सम्प्रसारणे च सुवृश्च् इति प्रातिपदिकम्। अस्य सौ हल्ङ्यादिना सुलोपे) "व्रश्च—" इति (२९४ सूत्रेण) षत्वम्। "स्कोः—" (सूत्र ३८०) इति सलोपः। ततः जश्त्वचर्त्वे। सुवृट्—सुवृड्। सुवृश्चौ—सुवृश्चः। सुवृट्त्सु—सुवृट्सु ("ङः सि धुट्" इति वा धुट्)॥

मित—। धातुपाठे 'व्रश्च' इति धातौ तु 'श्' इति सकारस्य श्चुत्वे कृते जातः। सुवृश्च् इत्यत्र चकारस्य षत्वे सति कुत्वाभावात् श्चुत्वे असति सुवृस्ष् इति जाते "स्कोः—" इति स-लोपे सति सुवृष् इति भवति। ततः जश्त्वेन=सुवृड् इति। चर्त्वे न सुवृट् इति भवति। अतः आह—"व्रश्च—" इति षत्वम्। "स्कोः—इति सलोपः॥ इत्यादि॥ इति चान्ताः॥ अथ तकारान्ताः कथ्यन्ते—

दी—। "वर्त्तमाने पृषत्-महत्-बृहत्-जगत् शतृवच्च" इति (उणादि सूत्रेण) एते निपात्यन्ते शतृवच्चैषां कार्यं स्यात्। (ततः) उगित्वात् नुम्। "सान्त महतः—" (सूत्र ३१७) इति दीर्घः। मह्यते पूज्यते इति महान्। महान्तौ—महान्तः। हे महन्। महतः। महता—महद्भ्याम् इत्यादि॥

Eng.—Easy.

मित—। मह्यतेपूज्यते इति 'महत्' शब्द औणादिकः अतिप्रत्ययेन निपात्यते। अस्य मूलोक्त औणादिकसूत्रेण शतृवद्भावे महत् सु इति जाते उगित्वात् "उगिदचाम्—" इति सर्वनामस्थाने नुमि सति महन्त् सु इति स्थिते—"सान्तमहतः संयोगस्य" (सूत्र ३१७) इति असम्बुद्धौ सर्वनामस्थाने उपधाया दीर्घे सति महन्त् सु इत्यत्र महान्त् सु इति जाते "हल्ङ्याब्भ्यो—" इति सुलोपः। ततः संयोगान्तलोपः तेन महान्

इति सिध्यति। एवं महान्तौ महान्तः इति॥ "सान्त महतः—" इति सूत्रे "दीर्घाऽसम्बुद्धौ सर्वनामस्थाने" इति वृत्तावुक्तत्वात् सम्बुद्धौ दीर्घाभावे—हे महन् इति॥ सान्तस्य तु श्रेयस् सु इत्यत्र नुमि श्रेयन्स् सु इति सुलोपसंयोगान्तलोपौ। ततः सर्वनामस्थाने दीर्घे सति श्रेयान् इति॥

धीरस्ति अस्य इति मतुपि 'धीमत्' इति प्रातिपदिकम्। अस्य सौ विशेषमाह—

**३२५। अत्वसन्तस्य चाधातोः। ६।४।१४॥**

**दी—। अत्वन्तस्य उपधाया दीर्घः स्यात् धातुभिन्नासन्तस्य च असम्बुद्धौ सौ परे। परं नित्यं च नुमं बाधित्वा वचनसामर्थ्यात् आदौ दीर्घः। ततो नुम्। धीमान्—धीमन्तौ—धीमन्तः। हे धीमन्। शसादौ—महद्वत्॥ धातोरप्यत्वन्तस्य दीर्घः। गोमन्तमिच्छति, गोमान् इवाचरतीति वा क्यजन्तादाचारक्विबन्ताद्वा कर्त्तरि क्विप्। "उगिद्चाम्—" इति सूत्रे अज्ग्रहणं नियमार्थम्। 'धातोश्चेत् उगित्कार्य्यं तर्हि अञ्चतेरेव' इति। तेन 'स्रत्' 'ध्वत्' इत्यादौ न। 'अधातोः' इति तु अधातुभूतपूर्वस्यापि नुमर्थम्। गोमान्—गोमन्तौ—गोमन्तः इत्यादि॥ 'भातेर्डवतु' (भवत् इति प्रातिपदिकम्) अस्यसौ—भवान्—भवन्तौ—भवन्तः॥ शत्रन्तस्य तु अत्वन्तत्वाभावात् न दीर्घः। भवतीति भवन्॥**

When सु (1st case singular) follows (—सु being not of सम्बोधन—) of a word ending in the affix अतु (i.e., of a word formed by some affix having अतु in it) or of a word ending in अस् which अस् is not the part of a verbal root, we have दीर्घ of its penultimate letter (vowel). Here in धीमत् सु we have first दीर्घ and then नुम् by the rule "उगिदचाम्—"। But if first नुम् comes being पर and नित्य (being a कृताकृतविधि it is नित्य), then there will be no vowel in उपधा here, and this rule will be useless; so owing to the force and significance of the rule we have first दीर्घ of the उपधा

vowel and then नुम्। Thus here Bhattoji says, "परं नित्यं च नुमं बाधित्वा वचनसामर्थ्यात् आदौ दीर्घ:"। Now in धीमात्सु add नुम् yielding धीमान्त्सु=धीमान्त by सुलोप=धीमान् by संयोगान्तलोप॥ And धीमत् औ= धीमन्त औ=धीमन्तौ &c. In सम्बोधन there being no दीर्घ we get धीमन्। In शस् etc., the base is like महत्॥ This दीर्घविधान by the present rule comes even after अत्वन्त धातु। But generally अत्वन्त धातु is not available, so to have an अत्वन्त धातु the author cites the case of नामधातु after the word गोमत्। Thus गोमन्तमिच्छति or गोमानिवाचरतीति गोमत् (नामधातु)+क्विप्=गोमत्। Now the rule "उगिदचाम्—" directs नुम् of an अधातुउगित् whereas गोमत् is a धातुउगित्, so here नुम् cannot arise at all. To solve this position Bhattoji says that 'अच्' in the sutra "उगिदचाम्—" is taken to make this नियम् e.g., if उगित्-कार्य्य is to be made after a धातु then let it be done after the root अञ्चु only and not of other roots. So स्रंसु+क्विप्=स्रत् is got without नुम्—उगित्कार्य्य by the above नियम् being available after the root अञ्चु only. Now it may be argued that if उगित्कार्य्य is to be made after the root अञ्चु only, then let the sutra be "उगितः सर्वनामस्थाने—" (and अञ्चु only will be covered by this उगित् here). Apprehending this argument Bhattoji following भाष्यकार says that 'अधातोः' in the sutra is significantly taken to imply that नुम् is to come after words that were not धातु previously. In गोमत्, the word though a धातु in नामधात्वावस्था still it was not a धातु in its still prior state, so नुम् comes after it. And it being an अत्वन्तधातु दीर्घ in सु comes here and we get गोमान् &c. भा+डवतु gives the base भवत् meaning 'you.' It is अत्वन्त so we get दीर्घ in सौ—नुम् comes as usual and the result is भवान् &c. But भू+शतृ=भवत् becomes

भवन् in सौ। For शतन्त words not being अत्वन्त, दीर्घ, in सौ cannot come, but नुम् only as usual by the rule "उगिदचाम्—" comes only.

N.B.—अधातु असन्त bases also take दीर्घ in सौ by this rule. Witness वेधाः ( here अस् of वेधस् is not a धातु )।

मित—। 'अतु' इति लुप्तषष्ठीकं स्वतन्त्रं पदम्। तदन्तविधिना अत्वन्तस्य इत्यर्थः। 'अधातोः' इत्येत् 'अत्वन्तस्य' विशेषणम्। 'सौच' इति सूत्रोपात्तं सर्वमेतत् अनुवर्त्तते यथा—"असम्बुद्धौ सौ उपधायाः दीर्घः"। 'सौ च' इति सूत्रे एतेषामनुवर्त्तनम् प्रागुक्तम् द्रष्टव्यम्। फलितमाह—"अत्वन्तस्य उपधायाः दीर्घः स्यात् धातुभिन्नस्य असन्तस्य च" इत्यादि॥ "कृताकृतविधिः नित्यं" धीमत् सु इत्यत्र नुमपि दीर्घे कृते अकृतेपि प्रवर्त्तते। अतः परं नित्यं च एतत् नुम् प्रथमं भवितुमर्हति। किन्तु नुमि पूर्वं कृते सति धीमन्त् सु इत्यत्र अजुपधात्वाभावात् दीर्घो न स्यात्। उपधायाः अचो दीर्घविधानं च व्यर्थं स्यात्। अतः अनेन सूत्रेण वचनसामर्थ्यात् परम् नित्यमपि नुमं वाधित्वा प्रथमं दीर्घः ततः नुम भवति, तदाह—"परं नित्यं च नुमं वाधित्वा वचनसामर्थ्यात् आदौ दीर्घः। ततः धीमात् सु = धीमान्त सु = सुलोप संयोगान्तलोपाभ्यां धीमान् इति॥ अधातोरप्यत्वन्तस्य दीर्घः इति उक्तम्। किन्तु धातवश्चप्रायेण अत्वन्ताः न। अतः अत्वन्तं धातुं दर्शयितुं गोमत्शब्दात् नामधातुत्वमाश्रित्य आचार क्विवाद्यन्तात् गोमत् इति प्रातिपदिकम्। एतत् अत्वन्त-धातुश्च। अतोव सौ दीर्घः स्यात्। किन्तु अस्य सर्वनामस्थाने नुम् कथं स्यात्? "उगिदचाम्—" सूत्रे 'अधातोः' ग्रहणात्, प्रकृते च "सनादान्ताः धातवः" इति न्यायेन आचारक्विवन्तस्य धातुत्वात्। अधातोः उगितोश्च नुम् विधीयते। सर्वमेतत् आशङ्का परिहारं वक्ष्यति—"उगिदचाम्—इति सूत्रे" इत्यादिना—अत्र सूत्रे 'अच्' इति नलोपिनः अञ्चतेः ग्रहणम्, एतच्च नियमं बोधयति। नियमशरीरं यथा—यदि धातोः उगित्कार्य्यं तर्हि केवलस्य अञ्चतेरेव बोध्यम् नान्यस्य धातोः इत्यर्थः। अतश्च स्रंसु ध्वंसु इत्यादि उगितः धातोः क्विपि विहितः 'स्रत् ध्वत्' इति शब्दयोः नुम् न स्यात्। एतत् सर्वं अञ्चतेः उगित्वादेव सिद्धेपि पृथक् ग्रहणात् ज्ञापकात् बोध्यम्। एवं सति प्रकृते गोमत्शब्दे गोमत् इति नामधातुजातत्वात् कथं वा नुम् स्यात्?

"उगिदचाम्—" इति सूत्रे अधातोः इति ग्रहणं, पूर्वं अधातुभूतस्य अधुना धातुत्वेपि नुम् यथा स्यात् तदर्थम्। ततश्च गोमत् शब्दात् नामधातुत्वाश्रयणे 'गोमत्' इति धातुत्वेपि पूर्वमधातुभूतत्वात् अत्र नुम् तु स्यादेव, न तु उक्तनियमशरीरेण नुमभावो भवेत्। ततः गोमत् इत्यत्र प्रातिपदिके सौ परे दीर्घे नुमि च सति गोमान् इति॥ भा+डवतु= भवत्। अत्र डित्वसामर्थ्यात् अभस्यापि टिलोपः। एषशब्दः युष्मत्पर्य्यायः। अस्य सौ अत्वन्तत्वात् दीर्घे उगित्वाच्च नुमि सति भवान् इति। भवन्तौ:—भवन्तः इत्यादि धीमत्शब्दवत्॥ शत्रन्तस्य शब्दस्य तु अत्वन्तत्वाभावात् न दीर्घः, नुम् तु उगित्वात् स्यादेव। अतः भू+शतृ=भवत्। अस्य सौ भवन् इति॥ असन्तस्य अधातोः किम्? वेधाः इति। अत्र वेधसो अस्भागस्य धातुत्वाभावात् सौ परे दीर्घः। अधातोः किम्? —दुकूलं वस्ते इति क्विपि दुकूलवः। अत्र असभागस्य धातुत्वात् न दीर्घः॥

दा+शतृ=ददत् इति प्रातिपदिकम्। अस्य सौ "उगिदचाम्—" इति नुमिप्राप्ते विशेषं कथयितुमुपन्यस्यति—

## ४२६। उभे अभ्यस्तम्। ६।१।५॥

**दी—। षाष्ठद्वित्वप्रकरणे ये द्वे विहिते ते उभे समुदिते अभ्यस्त-संज्ञे स्तः।**

The duplication that is ordered in the sixth chapter of the अष्टाध्यायी both taken together are called अभ्यस्त।

मित—। "एकाचो द्वे प्रथमस्य" इति सूत्रात् 'द्वे' वर्त्तते। 'द्वे' इत्यनेन षष्ठाध्यायगतं द्वित्वमेव विवक्षितम्। तदाह—षाष्ठद्वित्वप्रकरणे ये द्वे विहिते ते उभे इत्यादि। अतः अभ्यस्तसंज्ञायाः द्वित्वनिबन्धनत्वं ज्ञेयम्॥ प्रकृते च ददत् इत्यत्र 'श्लौ' (६।१।१०) इति सूत्रेण यत् द्वित्वं विहितं तत् समुदितं अभ्यस्तसंज्ञं स्यात्। ततः आह—

## ४२७। नाभ्यस्ताच्छतुः। ७।१।७८॥

**दी—। अभ्यस्तात् परस्य शतुर्नुम् न स्यात्। ददत्—ददद्। ददतौ —ददतः (इत्यादि)।**

After an अभ्यस्त base शतृ does not take नुम्। So नुम् in ददत् due by the rule "उगिदचाम्—" is prohibited. So ददत्+सु yields ददत् by चर्त्व and ददद् by जश्त्व।

मित—। "इदितो नुम् धातोः" इति सूत्रात् नुम् वर्त्तते। फलितमाह—'अभ्यस्तात् परस्य शतुः नुम् न'॥ तेन ददत् इत्यत्र "उगिदचाम्—" इति सूत्रप्राप्तः नुम् वार्य्यते। शतुश्च अत्वन्तत्वाभावात् सौ दीर्घोऽपि न, अतः चर्त्वजश्त्वेन ददत्—ददद् इति॥

## ४२८। जक्षित्यादयः षट्। ६।१।६॥

**दी—। षड् धातवोऽन्ये जक्षितिश्च सप्तमः एते अभ्यस्तसंज्ञा स्युः। जक्षत्—जक्षद्, जक्षतौ—जक्षतः। एवं जाग्रत्, दरिद्रत्, शासत्, चकासत्॥ दीधीवेव्योर्ङित्वेपि छान्दसत्वात् व्यत्ययेन परस्मैपदम्। दीध्यत्। वेव्यत्॥**

The six roots taken along with जक्ष as the seventh as read in the अदादिगण धातु पाठ are also in grammar tachnically known as अभ्यस्त धातु। These are—जक्ष, जागृ, दरिद्रा, चकास्, शास्, दीधीङ् and वेवीङ्। These being अभ्यस्त, their शतृ forms are declined like ददत् without नुम्। Now though दीधीङ् and वेवीङ् are आत्मनेपद being ङित् and have no शतृ so to say, still these being vedic roots take परस्मैपद by व्यत्यय ( change of परस्मैपद from आत्मनेपद viceversa ); so they are taken notice of here.

मित—। "उभे अभ्यस्तम्" इति सूत्रेण अप्राप्तम् अनेन विधीयते द्वित्वनिबन्धनम् अभ्यस्तसंज्ञम् किन्तु अत्र अद्वित्वस्यापि तत् विधातुं सूत्रमारभ्यते। जक्ष, जागृ, दरिद्रा, चकास्, शास्, दीधीङ् वेवीङ् इति सप्त अदादिगणपठिता धातवो अभ्यस्ता ज्ञेयाः। तेन एतेषां शतुर्नुम् न, ददत्वत् रूपम्॥ दीधीङ् वेवीङ् इत्यनयोः ङित्वात् आत्मनेपदित्वेपि परस्मैपदित्वं छान्दसव्यत्ययेन स्यादेव। ततः अनयोः शत्रपि स्यात्। ततश्च शतुर्नुम् यथा न स्यात् तदर्थम् अत्रग्रहणम्॥ इति तात्पर्यम्॥

अधुना पकारान्ताः शब्दाः कथ्यन्ते । गुप रचणे + क्विप् = गुप् इति प्रातिपदिकम् । असौ सौ, सुबलुपि—

**दी—। गुप् (चर्त्वेन)—गुव् (जश्त्वने), गुपौ—गुपः। गुव्भ्याम् इत्यादि ।**

मित—। भ्यामादौ पदत्वात् जश्त्वेन 'प्' इत्यस्य 'व' स्यात् । तेन गुब् भ्याम् इत्यादि ॥

अधुना शान्ताः शब्दाः निर्दिश्यन्ते—

**४२६। त्यदादिषु दृशोऽनालोचने कञ्च । ३।२।६० ॥**

**दी—। त्यदादिषु उपपदेषु अज्ञानार्थात् दृशधातोः कञ् स्यात् । चात् क्विन् ।**

When त्यद &c, as उपपद precedes the root दृश् not meaning 'ज्ञान' (knowledge), the root takes कञ् also क्विन् । Then in तद + दृश् + क्विन् we look forward for t he proper form—

मित—सुगमा ॥

**४३० । आ सर्वनाम्नः । ६।३।६१ ॥**

**दी—। सर्वनाम्नः आकारोन्त्यादेशः स्यात् दृग्दृशवतुषु । कुत्वस्य असिद्धत्वात् 'व्रश्च—" इति षः। तस्य जश्त्वेन डः ; तस्य कुत्वेन गः ; तस्य चर्त्वेन पक्षे कः। तादृक्—तादृग्, तादृशौ—तादृशः॥ 'षत्वापवादत्वात् कुत्वेन खकारः' इति कैयटहरदत्तादिमते तु चर्त्वाभावपक्षे 'ख' एव श्रूयते न तुगः ; जश्त्वं प्रति कुत्वस्यासिद्धत्वात् । 'दिगादिभ्योयत्' इति निर्देशात् नासिद्धत्वम् इति वा वोध्यम् ॥**

आकार comes at the end of सर्वनाम words when दृग्, दृश्, and वतु follows. Thus तद + दृश् + क्विन् with आकार at the end of तद gives तादृश् । In तादृश् + सु we have कुत्व by the rule "क्विन्प्रत्ययस्य कुः" (८।२।६२) and this श् becomes ख by "चयो द्वितीयाः—" । Now this

कुत्व is असिद्ध with regard to षत्व by the rule "व्रश्च—" (८।२।३६) so the sutra "व्रश्च—" operating we get षत्व here which by जश्त्व becomes ड। And this ड now by कुत्व becomes ग which by चर्त्व turns into क:। So the result is तादृक्—तादृग् &c. Kaiyata and Haradatta &c, however hold that कुत्व by the rule "क्विन् प्रत्ययस्य कुः" bars षत्व by the rule "व्रश्च—", so तादृश्+सु gives तादृख् by कुत्व with ख at the end, when not allowing optionality of चर्त्व by the rule "वाव-साने"; for acc. to them कुत्व is असिद्ध with regerd to जश्त्व by the rule "झलां जशोन्ते" (८।२।३९)। But Bhattoji says that कुत्व is not असिद्ध with regard to जश्त्व, for this is evident from the rule "दिगा-दिभ्योयत्" where दिश् + आदि becoming दिक् + आदि = दिगादि (admitting of जश्त्व after कुत्व)। So the forms acc. to our author is तादृक् and तादृग् in सु।

मित—। 'आ' इति लुप्तविभक्तिको निर्देशः। "दृग्दृशवतुषु" (६।३।८९) इति सूत्रमत्र वर्त्तते। अलोऽन्त्यपरिभाषया 'आ' च अन्त्यादेशः स्यात्। फलित-माह—'सर्वनाम्नः आकारोन्त्यादेशः' इत्यादि। एवं तद् + दृश्+क्विन् इत्यत्र दकारस्य आत्वे तादृश् इति। अस्य सौ तादृश् सु इत्यत्र हल्ङ्यादिना सुलोपः, ततः तादृश् इति जाते "क्विन् प्रत्ययस्य कुः" इति शस्य खः। तस्य च कुत्वस्य असिद्धत्वात् "व्रश्च—" इति सूत्रेणात्र षः स्यात्। "झलां जशः—" इति षस्य डः। अधुना च जश्त्वेसति कुत्वं प्रवर्त्तते, ततः कुत्वेन 'ड' इत्यस्य गः। अस्य च चर्त्वेन पक्षे कः। ततः तादृग्—तादृक् इति॥ मतान्तरमाह—षत्वापवाद इत्यादिना। "क्विन्प्रत्ययस्य कुः" इति सूत्रस्य परत्वात् प्रकृते च क्विन्प्रत्ययसत्त्वात्, इदं कुत्वसूत्रं व्रश्चादि षत्व-विषयकं सूत्रं बाधत एव इति कैयटहरदत्तादयः। ततः एषां मते कुत्वेनात्र शस्य खः। खस्य जश्त्वेन गः न स्यात् कुत्वविषये जश्त्वस्य असिद्धत्वात्। किन्तु ग्रन्थकारस्य इदं मतं दूषयन् अक्षरसेनाह—"दिगादिभ्योयत्" इति निर्देशात् इत्यादिना। 'दिगादि-भ्योयत्' इत्यत्र सूत्रकार एव दिश् इत्यत्र कुत्वे सति जश्त्वं विदधत् कुत्वे सति जश्-

त्वस्य असिद्धत्वं नाजीगणत्। अतः कुत्वे सत्यपि जश्त्वं स्यादेव। ततः तादृशत्वं इतरत्र गकारः एव श्रोतुं योग्यः॥ विशतीति विश्+क्विप्=विश् इति प्रातिपदिकम्। अस्य सौ विशेषं स्मारयति—

**दी—। "व्रश्च—" इति षत्वम्; जश्त्वचर्त्वे। विट्-विड्, विशौ—विशः। विशम्। (? विड्भ्याम् इत्यादि)।**

मित—। नश्यतीति क्विपि 'नश्' इति प्रातिपदिकम्। अत्र विशेषमाह—

**४३१। नशेर्वा। ८।२।६३॥**

**दी—। नशेः कवर्गोऽन्त्यादेशः वा स्यात् पदान्ते। नक्—नग्। नट्—नड्। नशौ—नशः। नग्भ्याम्—नड्भ्याम् इत्यादि।**

Of the base नश्, कवर्ग is optionally ordered at its end when it is at the end of a पद। Thus by सुलोप we get नक्—नग् by कुत्व, and by षत्व we get नट्—नड् &c.

मित—। "क्विन् प्रत्ययस्य कुः" इति पूर्वसूत्रात् 'कुः' वर्त्तते "पदस्य" इत्यधिकारश्च अस्ति। तदाह—'नशेः कवर्गोऽन्त्यादेशः वा स्यात् पदान्ते'॥ असति कुत्वे व्रश्चादिसूत्रेण षत्वमपि स्यात्। तस्य जश्त्वेन डकारः इत्यादि॥

**४३२। स्पृशोऽनुदके क्विन्। ३।२।५८॥**

**दी—। अनुदके सुपि उपपदे स्पृशेः क्विन् स्यात्। घृतस्पृक्—घृतस्पृग्। घृतस्पृशौ—घृतस्पृशः। क्विन्प्रत्ययो यस्मात् इति बहुव्रीह्याश्रयणात् क्विप्यपि कुत्वम्। स्पृक्। षडगकाः प्राग्वत्।**

When a सुवन्त उपपद other than the word उदक precedes the root स्पृश then it takes क्विन्। Thus घृतं स्पृशतीति will give घृतस्पृश् with क्विन्। In सु, the form is घृतस्पृक्— [illegible] कुत्व by the rule "क्विन् प्रत्ययस्य कुः"। In this rule [illegible] broken up as

क्विन् प्रतत्यय: यस्मात् स:, then स्पृश् will also where with क्विप् take कुत्व. for क्विन् is made after it under some circumstances ( as this present rule says ). Thus the base स्पृश् ( with स्पृश+क्विप् ) will be declined as स्पृक् &c. Here also षत्व by व्रश्चादि rule, डत्व by जश्त्व and 'ग' by कुत्व and क by चर्त्वविकल्प is same as in the case of तादृक् before. So Bhattoji says "षडगका: प्राग्वत्"।

मित—। "सुपिस्थ:" इति सूत्रात् 'सुपि' वर्त्तते। तदाह—"अनुदके ( उदक-शब्दभिन्ने इत्यर्थ: ) सुपि उपपदे स्पृशे: क्विन्' इति। तत: ,घृतं स्पृशतीति क्विनि घृतस्पृश् इति प्रातिपदिकम्, अस्य सौ कुत्वेन ख:, व्रश्चादिना ष:। तस्य जश्त्वेन ड: तत: कुत्वम्। चर्त्वविकल्प: तादृग्वत्। तत: घृतस्पृक्—घृतस्पृग् इति॥ "क्विन्प्रत्ययस्य कु:" इति सूत्रस्य 'क्विन्प्रत्ययस्य' इति पदम् बहुव्रीहिसमासेन 'क्विन् प्रत्ययो यस्मात्' इति यदि व्याख्यायते तदा निरुपपदे स्पृशे: क्विपि सति अपि कुत्वं प्रवर्त्तते ; यत: स्पृशे: अन्यत्र उपपदे क्विन् भवति॥ तत: स्पृशतीति क्विपि स्पृश्। अस्य सौ—स्पृक् इति। अत्रापि "षडगका: प्राग्वत्" षत्व—जश्त्व कुत्वचर्त्वा: इत्यर्थ: 'प्राग्वत्' उक्तवत् तादृग्वत् वा ज्ञेया:॥

**दी—। 'ञिधृषा प्रागल्भ्ये' ( इति धातु: )। अस्म्यात् "ऋत्विग्—दधृक्—" इत्यादिना क्विन्। द्वित्वमन्तोदात्तत्वं च निपात्यते। कुत्वात् पूर्वं जश्त्वेन ड: ग: क:** ( जश्त्वं प्रतिकुत्वस्य असिद्धत्वात् प्रथमं जश्त्वेन षस्य डकार:, तस्य कुत्वेन गकार:, अस्य च चर्त्वविकल्पेन ककार: इत्यर्थ: )। **धृष्णोतीति दधृक्—दधृग्। दधृषौ—दधृष:। दधृग्भ्याम् इत्यादि॥ रत्नानि मुष्णातीति** ( रत्नमुष् इति प्रातिपदिकम्। अस्य सौ रूपं यथा— ) **रत्नमुट्—रत्नमुड्** ( जश्त्वेन षस्य ड:। चर्त्वविकल्पेन च ट: )। **रत्नमुषौ—रत्नमुष:। रत्नमुड्भ्याम् इत्यादि॥**

मित—। अधुना नित्यबहुवचनान्तं षष्शब्दं रूपयति—

**दी—। "षड्भ्यो लुक्" ( सूत्र २६१ )** [ अनेन जश्शसो: लुक्। तत: जश्त्वचर्त्वे। तदाह— ] **षट्—षड्। षड्भि:। षड्भ्य:।** [ आमि तु ] **"षट्चतुर्भ्यश्च" ( सूत्र ३३८ ) इति नुट्।** ( एवं षट् नाम् इत्यत्र ष्टुत्वम् तु

स्यादेव तदाह— ) **'अनाम्' इति पर्य्युदासात् ( प्रतिषेधात् इत्यर्थः ) न ष्टुत्व-निषेधः। "यरोऽनुनासिके—" इति विकल्पं वाधित्वा 'प्रत्यये भाषायां नित्यम्' इति वचनात् ( डस्य ) नित्यमनुनासिकः** ( एवं षट् नाम् इत्यत्र पदान्तस्य यरः 'ट' इत्यस्य अनुनासिके सति 'षण् नाम्' इति अस्य ष्टुत्वेन षण्णाम् इति )— **षण्णाम्। षटत्सु—षट्सु** ("ङः सि धुट्" इति विकल्पात् धुटि सति 'षटत्सु' इति) ॥ ( "षड्भ्यो लुक्", "षट्चतुर्भ्यश्च" इत्यनयोः अङ्गत्वात् तदन्तविधिरस्ति तदाह— ) **तदन्तविधिः। परमषट्। परमषण्णाम्** ( प्रियाः षट् यस्य इति बहुव्रीहौ इत्यर्थः प्रियषष् इति प्रातिपदिकम्। अत्र षष्शब्दस्य गौणत्वात् लुग्नुटौ न स्तः। तदाह—) **गौणत्वे तु प्रियषषः। प्रियषषाम्** ॥

Eng—Easy.

मित—। सुगमा ॥ पठितुमिच्छतीति सनि क्विपि पिपठिष क्विप् इति स्थिते "अतोलोपः" ( ६।४।४८ ) इति अकारे लुप्ते पिपठिष् इति प्रातिपदिकम्। तस्य सुलोपे पदत्वे सति, यत् 'ष्' इति तदादौ 'स्' आसीत् ततोत्र "ससजुषो रुः" (८।२।६६) इति रुत्वम्। इदं—रुत्वं प्रति "इण्कोः" ( ८।३।५१ ) इति कृतस्य षत्वस्य असिद्धत्वात् "ससजुषोः रुः" इति रुत्वमेव स्यात्। एतत् सर्वमुद्दिश्याह—

**दी—। रुत्वं प्रति षत्वस्य असिद्धत्वात् पिपठिष् इत्यत्र "ससजुषो रुः" इति रुत्वम्।**

मित—। तेन पिपठिर् इति पदे सति आह—

## ४३३। र्वोरुपधाया दीर्घ इकः। ८।२।७६ ॥

**दी—। रेफवान्तस्य धातोरुपधाया इको दीर्घः स्यात् पदान्ते। पिपठीः—पिपठिषौ—पिपठिषः। पिपठीर्भ्याम्। "वाशरि"** ( सप्तमी बहुवचने सुपि विशेषमाह— ) **इति वा विसर्जनीयः।**

The penultinate इक् vowel of a verbal root eding in रेफ (र्) वा व् becomes lengthened when final in a पद। Thus in पिपठिर् which ends in र् of a verbal root we get दीर्घ of the उपधा इकार and

the result is पिपठीः &c. Similarly पिपठीर्भ्याम्। In पिपठिष् सु we first get पिपठीष् by उपधादीर्घ, then by the rule "वा शरि" we get optional विसर्ग here. Then for षत्व of सु here it is said—

मित—। रश्च वश्च इति र्वौ। तयोः र्वोः इति। एतच्च "सिपिधातो रुर्वा" इति सूत्रात् पदान्तस्य 'धातोः' इत्यस्य विशेषणम्। पदाधिकारोऽस्त्येव। तदाह—'रेफावान्तस्य धातोरुपधायाः' इत्यादि। एवं पिपठीर् इति जाते विसर्गः ततः पिपठीः इति। भ्यामादौ पदान्तत्वात् अनेन सूत्रेण उपधादीर्घे पिपठीर्भ्याम् इति॥ पिपठिष् सु इत्यत्र दीर्घे सति "रोः सुपि" (८।३।१६) इति विसर्जनीयः। ततः "वा शरि" इति सूत्रेण विकल्पेन विसर्जनीयः। विसर्जनीयाभावपक्षे विसर्जनीयस्य सत्वम् ततः पिपठीस्सु पिपठीः सु इति पक्षद्वये स्थिते इण्कवर्गाभ्यां परत्वाभावात् "आदेशप्रत्यययोः" इति षत्वे अप्राप्ते विधानमाह—

**४३४। नुम् विसर्जनीयशर्व्यवायेपि। ८।३।५८॥**

**दी—। एतैः प्रत्येकं व्यवधानेऽपि इण्कुभ्यां परस्य सस्य मूर्धन्यादेशः स्यात्। ष्टुत्वेन पूर्वस्य षत्वम्। पिपठीष्षु—पिपठीःषु॥ 'प्रत्येकम्' इति व्याख्यानात् अनेकव्यवधाने षत्वं न—निंस्स्व, निंस्से। नुम् ग्रहणं नुमस्थानिकानुस्वारोपलक्षणार्थम्, व्याख्यानात्। तेनेह न—सुहिन्सु पुंसु। अतएव न शर्ग्रहणेन गतार्थता॥**

A dental सकार coming after an इण् letter (i.e., vowel and हयवरल) and after कवर्ग becomes cerebral if नुम्, विसर्जनीय and शर् each separately intervenes. Thus in पिपठीस्सु and in पिपठीः सु we get षत्व in सु though शर्+विसर्जनीय intervenes respectively. Then in the first case the previous सकार also becomes cerebral by the rule "ष्टुना ष्टुः"। So we get पिपठीष्षु+पिपठीः षु। As the explanation here is "when each of these i.e., नुम्, शर् &c. intervenes". So when several of these intervenes simultaneously then cerebral does not come. Thus in निंस्सु+निंस्से got from the root निंस+स्व

and निंस + से respectively, both नुम् and शर् (स) intervene between इण् vowel in नि and स, so no cerebral here. The नुम् here does not stand for अनुस्वार in general, but for अनुस्वार in place of नुम् only, so in सुहिन्सु and in पुंसु we do not get cerebral for in the first there is no अनुस्वार in place of नुम् and in the scond instance the अनुस्वार is not of नुम्। And that नुम् does not represent अनुस्वार is general is also proved from taking शर् here separately. If नुम् is for अनुस्वार, then there will be tautalogy ; for अनुस्वार in general is included in शर् ( cp—शर्ष्वपि अनुस्वारस्य पाठात् )।

मित—। "इण्कोः" ( ८।३।५१ ) इति वर्त्तते। "अपदान्तस्य मूर्धन्यः" इत्यतः 'मूर्धन्यः' इत्यप्यस्ति। तदाह—'एतैः प्रत्येकं व्यवधानेपि इण्कुभ्यां परस्य' इत्यादि। नुमव्यवाये विसर्जनीयव्यवाये शर्व्यवायेपि इण्कोरुत्तरस्य सकारस्य मूर्धन्यादेशः। व्यवाय-शब्दः द्वन्द्वान्ते सन् प्रत्येकमभिसंवध्यते। एवं प्रकृते पिपठीस्सु पिपठीःसु इति पक्षद्वये सति आद्ये शर्व्यवाये षत्वे ष्टुत्वेन पूर्वस्यषकारः ; द्वितीये विसर्जनीयव्यवाये षत्वे पिपठीःषु इति भवति॥ वृत्तौ "प्रत्येकव्यवधाने" इति व्याख्यानात् अनेकव्यवधाने षत्वं न स्यात्। एवं निंसु निंस्स इत्यत्र नुम् शर् इति उभयव्यवाये सति 'स्व' इति 'से' इति नात्र षत्वम्॥ अत्र सूत्रे नुमग्रहणं च नुमस्थानिकानुस्वारोपलक्षणार्थम् न तु सर्वानुस्वारग्रहणलक्षणम्। तेन सुहिन्सु (सुहिन्स्शब्दस्य सप्तमीवहुवचनम्) नुमो अनुस्वाराभावे न षत्वम् ; पुंसु इत्यत्र अनुस्वारस्य नुम्स्थानिकत्वाभावाद् न चाप्यत्र षत्वम्। यदि च नुमग्रहणेन अनुस्वारमात्रं गृह्यते तदा नुमः पृथकग्रहणम् अनावश्यकम्, यतः अनुस्वारस्य शर्ष्वपि पाठात् शरग्रहणेनैव गतार्थता स्यात् ; अतः आह—"अतएव न शरग्रहणेन गतार्थता" इति॥ कर्त्तुमिच्छति इति सनि क्विपि "अतोलोपः" इति सूत्रेण अलोपे चिकीर्ष् इति प्रातिपदिकम्। "हलिच" ( ८।२।७७ ) इत्युपधादीर्घः। अस्य सौ हल्ङ्यादिना सुलोपे "रात्सस्य" (८।२।२४) इत्येतत् प्रति "इण्कोः" (८।३।५७) इति षत्वस्यासिद्धत्वात् सलोपे "खरवसानयोः विसर्जनीयः" (८।३।१५) इति विसर्जनीये कृते 'चिकीः' इति भवति। एतत् सर्वं उद्दे शीकृत्याह—

**दी—।** "रात्सस्य" (सूत्र २८०) इति ( चिकीर्ष् इत्यत्र ) **सलोपे विसर्गः** ( "खरवसानयोः—" इति विसर्गः )। **चिकीः, चिकीर्षौ, चिकीर्षः।** [ एवं चिकीर्ष्भ्याम् इत्यत्र पदत्वे षलोपे सति चिकीर्भ्याम् इति ॥ चिकीर्ष् सु इति स्थिते च षलोपे "इण्कोः" इति षत्वे, सुपि परे रोरेव इति "रोः सुपि" इति सूत्रे नियमात् रेफस्य विसर्जनीयः न। ततः चिकीर्षु इति सिध्यति। तदेवाह—] **"रोः सुपि" इति नियमात् न विसर्गः—चिकीर्षु ॥**

( दोष्शब्दरूपं वक्ष्यति— ) **"दमेर्डोस्" इति** ( उणादिसूत्रम् )। **डित्त्वसामर्थ्यात् टिलोपः** ( दोष् इति )। ( अत्र ) **षत्वस्यासिद्धत्वात् रुत्वविसर्गौ** ("ससजुषो रुः" इति रुत्वे सति विसर्गः—ततः—) **दोः, दोषौ, दोषः। "पद्दनो—" इति सूत्रेण वा दोषन्** ( शसादौ। ) **दोष्णः। दोष्णा। दोषः। दोषा ॥**

( विविच् शब्दं निरूपयति— ) 'विश् प्रवेशने'। सन्नन्तात् क्विप्। [ वेष्टुमिच्छतीति विश+सन्+लटति=विविश्+सति=विविष्+सति ( व्रश्चादि सूत्रेणात्र झल्परत्वात् सस्य षकारः )=विविक्+सति ("षढोः कः सि" इति सूत्रेण षस्य कः)= विविक्षति ( सकारस्य प्रत्ययावयवत्वात् "आदेश प्रत्यययोश्च" इति षत्वम्। अस्मात् विविच्धातोः क्विपि विविच् इति प्रातिपदिकम्। अस्मात् विविच्सु इत्यत्र हल्ङ्यादिना सुलोपे "षढोः कः सि" ( ८।२।४१ ) इति विहितस्य कत्वस्य असिद्धत्वात् षकारस्य संयोगान्तलोपः। संयोगान्तलोपे सति कत्वस्य निमित्ते लुप्ते कत्वं न स्यात्। ततः व्रश्चादिसूत्रेण षत्वं पुनः प्रवर्त्तते ततः जश्त्वचर्त्त्वे—विविट्—विविड् इति। एतदभिप्रेत्याह— ]

**कत्वस्यासिद्धत्वात् संयोगान्तलोपः। "व्रश्च—" इति षः। जश्त्वचर्त्त्वे। विविट्—विविड्। विविक्षौ—विविक्षः इत्यादि ॥**

( "तक्षू तनूकरणे" इति धातोः क्विपि तक्ष् इति प्रातिपदिकम्। अस्मात् हल्ङ्यादिना सुलोपे "स्कोः—" इति कलोपे च षस्य जश्त्वेन डः, तस्य चर्त्त्वं विकल्पश्च, ततः तट्—तड् इति। अतः आह— ) **"स्कोः—" इति कलोपः; तट्—तड्, तक्षौ, तक्षः। तड्भ्याम् इत्यादि ॥**

( गाः रक्षतीति क्विपि गोरक्ष् इति प्रातिपदिकम्। तक्षवत् रूपम्; तदाह— )

**गोरट्—गोरड्, गोरक्षौ, गोरक्षः ॥** ( तक्ष + णिच्, रक्ष + णिच् इति तक्षि रक्षि धात्वोः क्विपि "णेरनिटि" इति णिलोपे तक्ष्, रक्ष् इति प्रातिपदिकद्वयम्। एतयोः सौ हल्ङ्यादिना सुलोपे सति "स्कोः संयोगाद्योः—" इति ककारलोपो न भवति। तदाह— ) **तक्षिरक्षिभ्यां णयन्ताभ्यां क्विपि तु "स्कोः"—इति न प्रवर्त्तते। णिलोपस्य स्थानिवद्भावात्** ( "अचः परस्मिन्" इति स्थानिवत्त्वात् इत्यर्थः )। **"पूर्वत्रासिद्धे न स्थानिवत्" इति त्विह नास्ति। "तस्य दोषः संयोगादि-लोपलत्वणत्वेषु" इति निषेधात्। तस्मात्** ( "स्कोः—" इत्यस्य अप्रवृत्तेः ) **संयोगान्तलोप एव।** ( ततः अन्त्यस्य षकारस्य लोपे सति— ) **तक्—तग्। गोरक्—गोरग् ॥**

( सन्नन्तस्य पचधातोः सति पिपच् लटि इति स्थिते "चोः कुः इति कुत्वे पिपक्षति। अस्य क्विपि पिपक्ष् इति प्रातिपदिकम्। अस्य सौ हल्ङ्यादिलोपे "स्कोः—" इति कलोपो न स्यात्। यतः चकारस्थानिकं कुत्वं "स्कोः—" इति कलोपं प्रति असिद्धमेव। ततः संयोगान्तलोपे सति पिपक्—पिपग् इति। अतः आह— ) **"स्कोः—" इति कलोपं प्रति ( चकारस्थानिकस्य ) कुत्वस्य असिद्धत्वात् संयोगान्तलोपः पिपक्—पिपग् ॥** ( एवं विवक्ष्, दिधक्ष् इति प्रातिपदिकयोः रूपाणि तदाह— **एवं विवक्, दिधक् इति ॥** इति षान्ताः ॥ ( अथ सकारान्ताः कथ्यन्ते— ) **पिस गतौ। सुष्ठु पेसतीति** ( क्विपि सुपिस् इति प्रातिपदिकम्। अस्य सौ हल्ङ्यादिना सुलोपे "ससजुषो रुः" इति रुत्वे "र्वोरुपधायाः—" इति दीर्घः सुपीः इति तदाह— ) **सुपीः, सुपिसौ, सुपिसः। सुपिसा, सुपीर्भ्याम्। सुपीःषु—सुपीष्षु** ( पिपठीःषु—पिपठीष्षु इत्यादिवत् )। **एवं सुतूः। तुस खण्डने** ( इति धातोः क्विपि सुतुस् इति प्रातिपदिकम्। सुपिस्वत् रूपम् इति शेषः )॥ ( अदादि ज्ञानार्थकस्य विदधातोः वेत्तीति शत्रादेशे "विदः शतुर्वसुः" इति सूत्रेण वस्वादेशे विद्वन् इति प्रातिपदिकम्। अस्य सौ उगित्वान्नुम्, "सान्तमहतः—" इति सर्वनामस्थाने नकारस्य उपधादीर्घः। सुलोपसंयोगान्तलोपौ—विद्वान् इति। तदाह—( **विद्वान् विद्वांसौ—विद्वांसः। हे विद्वन्। विद्वांसम्, विद्वांसौ।**

Eng—Easy

मित—। विद्वस् + शस् इत्यत्र शसि सर्वनामस्थानत्वाभावात् भसंज्ञायामाह—

४३५। वसोः सम्प्रसारणम्। ६।४।१३१॥

**दी—। वस्वन्तस्य भस्य सम्प्रसारणं स्यात्। पूर्वरूपम्, षत्वम्; विदुषः। विदुषा। "वसुस्रंसु—" (सूत्र ३३४) इति दत्वम्। विद्वद्भ्याम् इत्यादि।**

Of a word ending in वसु (i.e, affix having वसु in it) and becoming a "भ", सम्प्रसारण comes in; thus in विद्वस् + शस् (अस्), विद्वस् ends in वसु and is a "भ"। So here the final "व" by सम्प्रसारण becomes उ and the form is विद् उस् which by the rule "सम्प्रसारणाच्च" takes पूर्वरूप and becomes विदुस् then there is षत्व by the rule "आदेशप्रत्यययोश्च" and we get विदुष which with the addetion of अस् turns into विदुषः। Similarly विदुषा। Now in विद्वस्भ्याम्, the वस्वन्त word विद्वस् being पदान्त takes final द् by the rule "वसुस्रंसु—" (rule 334) and the form is विद्वद्भ्याम् &c.

मित—। 'वसोः' वस्वन्तस्य इत्यर्थः। भाधिकारो वर्त्तते। ततः आह—'वस्वन्तस्य भस्य' इत्यादि॥ एवम् विद्वस् + अस् इत्यत्र सम्प्रसारणेन वकारस्य उत्वे विद् उस + अस् इति स्थिते "सम्प्रसारणाच्च" इति पूर्वरूपे सति विदुस् + अस् इत्यत्र प्रत्ययावयवत्वात् षत्वे च विदुषः इति॥ विद्वस्भ्याम् इत्यत्र विद्वस् इत्यस्य पदत्वात् "वसुस्रंसु" इति दत्वे विद्वद्भ्याम् इति एवं विद्वत्सु॥

सद्धातोः "भाषायां सदवसश्रुवः" इति लिटः क्वसुः इति सद + क्वसु = सेदिवस् इति प्रातिपदिकम्। अस्य सौ उगित्वान्नुमि सति "सान्तमहतः—" इति सर्वनामस्थाने दीर्घः; हल्ङ्यादिना सुलोपः, संयोगान्तलोपः, ततः सेदिवान् इति एतत् सर्वमभिप्रेत्य आह—

**दी—। सेदिवान्, सेदिवांसौ—सेदिवांसः। सेदिवांसम्। सेदिवांसौ।** (सेदिवस् + (शस्) अस् इति स्थिते "वसोः सम्प्रसारणम्" इति सेदि उ अस् इति जाते

पूर्ववत् पूर्वरूपे सति सेदि उस् अस =सेद्यष: इति स्यात्। किन्तु सेदुष: इत्येव युक्त रूपम्। तदेव समर्थयितुमाह— ) **अन्तरङ्गोऽपि इडागमः सम्प्रसारणविषये न प्रवर्त्तते। "अकृतव्यूहा:—" इति परिभाषया। सेदुषः** [ सेदिवस्+अस् इत्यत्र इडागमस्य वसमाश्रित्य भवति, सम्प्रसारणेन वसोः वकारस्य नाशात्, निमित्ते विनष्टे तदाश्रितकार्य्यमपि नश्यति इति इडागमोऽपि निवर्त्तते ततः सेद् उस+अस् = सेदुष:। एतच्च 'अकृतव्यूहा: पाणिनीया:" इति परिभाषया भवति इति प्रागपि व्याख्यातम्। "निमित्तापाये नैमित्तिकस्याप्यपाय:" इति न्यायमेव "अकृतव्यूहा—" इति परिभाषा वदति ]। **सेदुषा। सेदिवद्भ्याम् इत्यादि** (विद्वस् शब्दवत्)॥ (सु+हिंस+क्विप् =सुहिंस् इति प्रातिपदिकम्। अस्य सौ हल्ङ्याादिना सुलोप:। संयोगान्त सस्य लोप: तत:"नश्चापदान्तस्य झलि" इति झल् सकारमाश्रित्यप्रवर्त्तितो- नुस्वार: निमित्तापायात् स्वयं निवर्त्तते ततः सुहिन् इति। अत्र "सान्तमहत:" इति दीर्घस्तु न स्यात् कारणमाह— ) **"सान्तमहत—(सूत्र ३७१) इत्यत्र सान्तसयोगोऽपि प्रातिपदिकस्यैव गृह्यते न तु धातोः, महच्छब्दसाहचर्य्यात्** (प्रकृते तु सुहिंस् इत्यत्र सान्तसंयोगस्तु धातो: अत: न दीर्घ:)। **सुष्ठु हिनस्तीति सुहिन्, सुहिंसौ, सुहिंसः। सुहिन्भ्याम् इत्यादि। सुहिन्त्सु—सुहिंस्सु** ("नश्च" इति सूत्रेणात्र वैकल्पिको धुट् स्यात्)॥ (ध्वसु+क्विप्="अनिदिताम्—" इति नलोप:, ध्वस् इति प्रातिपदिकम्। अस्य सौ सोर्लोपे "वसुस्रंसुध्वंसु—" इति पदान्ते द:। तत: ध्वत् इति। तदेवाह— ) **ध्वत्—ध्वद्, ध्वसौ, ध्वसः। ध्वद्भ्याम्॥ एवं स्रत्॥**

Eng—Easy.

सित—। पूञ् पवने इति धातो: "पूञो डुम्सुन्" इति उणादिसूत्रेण डुम्सुन् प्रत्ययः। ड—न—उकारा: इत:। डित्वात् अभ्यस्यापि टे: लोप:। तत: पुंस् इति प्रातिपदिकम्। अस्य सर्वनामस्थाने विशेषमाह—

**४३६। पुंसोऽसुङ्। ७।१।८९॥**

**दी। सर्वनामस्थाने विवक्षिते पुंसोऽसुङ् स्यात्। असुङ उकारः उच्चारणार्थः। 'बहुपुंसी' इत्यत्र "उगितश्च" इति ङीवर्थं कृतेन "पूञो**

डुम्सुन्" इति प्रत्ययस्य उगित्वेनैव नुम् सिद्धेः। पुमान्। हे पुमन्। पुमांसौ---पुमांसः। पुंसः। पुंसा, पुम्भ्याम्, पुम्भिः॥ इत्यादि। पुंसि, पुंसु॥

When सर्वनामस्थान affix is being intended then असुङ् is ordered at the end of the base पुम्स्। Here उकार of असुङ् is for उच्चारण and not for उगित्कार्य्य as old commentators suppose. In the बहुव्रीहि—बह्वः पुमांसः यस्याः we by सुब्लुक् get बहुपुंस+ङीप् by the rule "उगितश्च" = बहुपुंसी। Here ङीप् comes because the affix डुम् सुन् is उगित् and in ङीप्, असुङ् has no प्राप्ति at all for it is not सर्वनामस्थान affix and नुम् also by the rule "उगिदचां—" comes for the affix डुम्—सुन् is उगित्; so उ of असुङ् is for its pronuncation and not for उगित् कार्य्यं। Thus in पुम्स् सु; we by असुङ् at the end get पुमन् सु and by नुम् we get पुमन् स् सु now by "सान्तमहतः—" the उपधा of नकार become दीर्घ and we get पुमान् स् सु। Now by सुलोपसंयोगान्तलोपौ we have पुमान्। In हे पुमन् the rule "सान्तमहतः—" has no application for सम्बुद्धि is not a सर्वनामस्थान affix; and so on.

मित---। "इतोऽत् सर्वनामस्थाने" इति सूत्रात् सर्वनामस्थाने वर्त्तते। तदाह—'सर्वनामस्थाने विवक्षिते' इत्यादि॥ असुङः उकार उच्चारणार्थः न तु उगित् कार्य्यार्थः यतः बह्वः पुमांसः यस्याः इति बहुव्रीहौ सुब्लुकि ङीपि च बहुपुंसी इति जायते। अत्र ङीप असर्वनामस्थानत्वात् असुङः प्राप्तिरेव नास्ति, किन्तु "पूञोः डुम्सुन्" इति प्रत्ययस्य उगित्वादेव "उगितश्च" इति ङीप् सिध्यति। अतः असुङ उकारः उगित्कार्य्यार्थः न। एवं नुमपि अत्र प्रत्ययस्य उगित्वादेव भवति तदाह—"बहुपुंसी" इत्यत्र 'उगितश्च' इति ङीवर्थं कृतेन, इत्यादि॥ पुम्स् सु इति स्थिते असुङ्। पुमन् सु इति जाते "उगिदचाम्—" इति नुमि पुमन्स् सु। सुलोपसंयोगान्तलोपौ। ततः पुमान् इति। 'हे पुमन् इत्यत्र सम्बुद्धेः सर्वनामस्थानत्वाभावात् असति दीर्घे सिध्यति॥

अधुना उशनस् शब्दं रूपयितुमस्य सौ विशेषं वक्ष्यति—

दी। "ऋदुशनस्—" ( सूत्र २७५ । ७।१।९३ ) इत्यनङ् ( ततः उशनन् स् इत्यत्र हल्ङ्यादिना सुलोपे प्रातिपदिकान्त नलोपे उपधादीर्घे च सति ) **उशना ; उशनसौ—उशनसः। "अस्य सम्बुद्धौ वानङ् नलोपश्च वा वाच्य:"** ( वार्त्तिक )। **हे उशनन्—हे उशन—हे उशनः। उशनोभ्याम् इत्यादि ॥**
( न हण्यते नित्यत्वात् इति वाक्ये "नञि हन एह च" इति असिः एहादेशश्च । अनेहस् इति प्रातिपदिकम् कालवाचि। अस्य सौ यथा—) **अनेहा** ( "ऋदुशनस्—" इति अत्र अनङ् )। **अनेहसौ, अनेहसः। हे अनेहः। अनेहोभ्या इत्यादि ॥**
( विदधाति इति "विधाञो वेध च" इत्यसिः वेधादेशश्च ; वेधसशब्दस्य सौ यथा— ) **वेधाः** ( "अत्वसन्तस्य चाधातोः—" इति दीर्घः )। **वेधसौ, वेधसः। हे वेधः। वेधोभ्याम् इत्यादि।** ( **"अत्वसन्तस्य—"** इति सूत्रे ) **'अधातोः' इति उक्तेः न दीर्घः** ( इति प्राग्व्याख्यातम् ) ॥ **सुष्ठु वस्ते इति सुवः** ( अत्र अस्-भागस्य धातुत्वात् न दीर्घः इति प्रागुक्तं "अत्वसन्तस्य—" इति सूत्रव्याख्यानावसरे )। **सुवसौ, सुवसः ॥** पिण्डं ग्रसते इति ( क्विपि पिण्डग्रस् शब्दः। अस्य सौ ) **पिण्डग्रः** ( अत्रापि अस्—भागस्य धतुत्वात् न दीर्घः )। **पिण्डग्लः** ( इत्यपि )। **"ग्रसु ग्लसु अदने"** ।

Eng.—Easy.

मित—। सुगमा ॥ अदस्शब्दं वदति। अस्य सौ त्यदाद्यत्वे प्राप्ते आह—

**४३७। अदसः औ सुलोपश्च। ७।२।१०७।**

दी—। **अदसः औकारः अन्त्यादेशः स्यात् सौपरे सुलोपश्च। 'तदोः सः सौ—"** ( सूत्र ३५१ ) **इति दस्य सः। असौ।'** ( अकचि अदकम् शब्दात् सौ विशेषमाह— ) **"औत्वप्रतिषेधः साकच्कस्य वा वक्तव्यः सादुत्वं च"** ( वार्त्तिक )। **प्रतिषेधसन्नियोगशिष्टमुत्वं तदभावे न प्रवर्त्तते। असकौ—असुकः।** ( अदस् औ इत्यत्र प्रक्रियामाह— ) **त्यदाद्यत्वं। पररूपम्। वृद्धिः। "अदसोऽसे—" इति मत्वोत्वे। " ॥** ( जसि रूपं वक्ष्यति— )। **"जशः शी"** ( सूत्र २१४ )। ।

औकार is ordered at the end of the base अदस् when सु follows and सु elides as well. Thus in अदस् सु we get अदौ (with औकारादेश and सुलोप)। This rule prohibits त्यदाद्यत्व here in सु। Then by the rule "तदोः सः सौ—" we get स for द and the form is असौ। In अदस्+अकच् however we get the base अदकस् and its speciality is being said by the Varttika "औत्वप्रतिषेधः &c.," though by the present rule अदस् includes अदकस् also. The Varttika says that "in अदकस्, औत्व is optional in सु, and when there is no औत्व there is उत्व after स"। When औत्व is done there is no उत्व after स, the reason is "उत्व which is in connection with औत्वप्रतिषेध cannot come when there is औत्व owing to the dictum "सन्नियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः।" Thus in औत्व the form is असकौ and in औत्वाभाव the form is असुकः॥ In अदस्+औ there is त्यदाद्यत्व yielding अद अ औ which by पररूप becomes अद औ which again by वृद्धि being अदौ, lastly there is मत्व of द and उत्व of औकार by the rule "अदसो असेः दादु दो मः" (सूत्र ४१९) and we get अमू। In अदस्+जस् we get first त्यदाद्यत्व then we get अद ई by "जसः शीः" this by the rule "आद्गुणः" becomes अदे and we look forward—

मित—। अलोन्त्यपरिभाषया औत्वं च अस्त्यस्यादेशः स्यात्। अदौ इति जाते "तदोः—" इति सः असौ इति॥ "अव्ययसर्वनाम्नामकच् प्राक् टेः" इति अदस्+अकच्=अदकस् शब्दस्य सौ विशेषमाह वार्त्तिकेन "औत्वप्रतिषेध" इत्यादिना। औत्वाभावे मादुत्वं, औत्वे सति मकारात् उत्त्वन। कुतो एतत् लभ्यते? तदाह—"सन्नियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः" इति न्यायात्। प्रकृते च औत्वप्रतिषेधसन्नियोगे मादुत्वं उक्तम् 'तदभावे' औत्वप्रतिषेधाभावे तु मादुत्वं न प्रवर्त्तते। ततः औत्वाभावे दस्य सत्वे सकारात् अकारस्य उत्वे त्यदाद्यत्वे पररूपे, रुत्वे विसर्गे च असुकः इति। औत्वेसति सुलोपे दस्य सत्वे असकौ इति॥ अमूक इति तु पृथक्

अव्युत्पन्न शब्दः ॥ अदस् औ इत्यत्र त्यदाद्यत्वे अद अ औ इति जाते, पररूपत्वम् अद औ इति स्थिते वृद्धौ च अदौ इत्यत्र "अदसौ असेः—" इति सूत्रेण औकारस्य ऊत्वे दस्य च मत्वे 'अमू' इति ॥ अदस् जस् इत्यत्र त्यदाद्यत्वे अद+जस् इत्यत्र 'जसः शी" इत्यनेन अद ई इति गुणेन च अदे इति स्थिते आह—

४३८। एत ईद्बहुवचने। ८।२।८१।

दी—। अदसो दात्परस्य एत ईत्स्यात् दस्य च मो बह्वर्थोक्तौ। अमी ॥ "पूर्वत्रासिद्धम्" इदि विभक्तिकार्य्यं प्राक्, पश्चात् उत्वमत्वे। अमूम्, अमू, अमून्। मुत्वे कृते घिसंज्ञायाम् नाभावः।

एकार after द of the stem अदस् becomes ईकार and the द becomes म when बहुवचन is implied. Thus in अदे, the एत् after द turns into ई and we get अदी, now द becoming म gives अमी। In अदस् अम् by त्यदाद्यत्व we get अद अम्—here उत्व and मत्व due by the rule "अदसोऽसेः—" (८।२।८०) is असिद्ध with regard to the rule "अमिपूर्वः" (६।१।१०७) which is a विभक्तिकार्य्य। And विभक्तिकार्य्य is to come even when उत्व and मत्व are done. Now the question is which of these विभक्तिकार्य्य or उत्वमत्व is to operate first ? On this the answer is "let first विभक्तिकार्य्य come and then उत्वमत्व operate owing to the force of the rule "पूर्वत्रासिद्धम्"। Thus in अद अ we get first पूर्वरूप yielding अदम्, now by उत्व and मत्व the form is अमुम्। So we get अमू and अमून्। In अदस् टा we get first त्यदाद्यत्व giving अद आ, then मुत्व (and so later उत्व coming in we get the form अमु आ। Here अमु is a घिसंज्ञक word by the rule "शेषो घ्यसखि" (see ante) and so ना comes for आ here by the "आङो नास्त्रियाम्"। But it is said that मत्वोत्व is असिद्ध with regard to विभक्तिकार्य्य ; then how मत्वोत्व operate here first ? The answer on this is in the next rule which sanctions सिद्धता of मुत्व with regard to घिसंज्ञा।

मित— । "अदसोऽसेः—" इति पूर्वसूत्रात् अदसो 'दात् दोमः' इति च वर्त्तते। ततः आह—'अदसो दात् परस्य एतईत् दस्य मः' इत्यादि॥ अदे इत्यत्र ईत्वे मत्वे च अमी॥ अदस् अम् इत्यत्र त्यदाद्यत्वे अदअम् इति भवति। अत्र 'अदसोऽसेः—' (८।२।८०) इति कृतेसति उत्वं मत्वञ्च "अमिपूर्वः—" (६।१।१०७) इत्येतत् प्रत्यसिद्धम्। ततः कृतयोरपि उत्वमत्वयोः विभक्तिकार्य्यं प्रवर्त्तते। यद्येवं कृतमाभ्यां प्राक्कृताभ्यां एतदेवाह—'पूर्वत्रासिद्धम्' इति विभक्तिकार्य्यं प्राक्, पश्चात् उत्वमत्वे। ततः अदम् इति विभक्तिकार्य्येण जाते उत्वमत्वेन अमुम् इति॥ एवं अमू, अमून इत्यादि॥ अदस् टा इत्यत्र त्यदाद्यत्वे अद आ। ततः उत्वे मुत्वे च सति अमु आ इत्यत्र 'अमु' इत्यस्य घिसंज्ञायाम् "आङो: नाऽस्त्रियाम्" इति नाभावः स्यात्। घिसंज्ञां प्रति मुत्वस्य सिद्धतां वाञ्छन् आह—

## ४३६। न मु ने। ८।२।३॥

**दी—। नाभावे कर्त्तव्ये कृते च मुभावो नासिद्धः स्यात्। अमुना अमूभ्याम्** ( त्यदाद्यत्वेन अदाभ्याम् इति स्थिते उत्वं मत्वं च )। **अमूभ्याम् अमीभिः** ( त्यदाद्यत्वेन अदभिस् इति स्थिते "नेदमदसोरकोः" इत्यैस्भावनिषेधे "बहुवचने झल्येत्" इत्येत्वम्। अदेभिः। ततः मत्वोत्वाभ्याम् अमीभिः )। **अमुष्मै अमीभ्यः** ( अमीभिः इति यथा भवति )। **अमुष्मात्। अमुष्य। अमुयोः, अमीषाम्** ( यथा अमीभिः सिध्यति )। **अमुष्मिन्। अमीषु॥** इति सान्ताः हलन्ताः पुंलिङ्गाश्च॥

When नाभाव is being done or is done then मुत्व is to be regarded as सिद्ध indeed. So in this case मुत्व operates first and then विभक्तिकार्य्य comes. Thus अमुआ = अमुना। In अदस् भ्याम् we have त्यदाद्यत्व = अद भ्याम् = अदाभ्याम् as in रामाभ्याम् = अमूभ्याम् by उत्व and मत्व। Similarly अमीभिः is got thus :—अदस् भिस् = अद भिस् by त्यदाद्यत्व = अदेभिः (see note above) = अमीभिः by ई for एत्व and मत्व for द and so on.

मित—। मश्च उश्च इति मु इति समाहारद्वन्द्वे नेनिर्देशः। 'ने' इति न इत्यस्य सप्तम्येकवचनम्। 'ने' नाभावे कर्त्तव्ये कृते वा इत्यर्थः॥ ततश्च प्रकृते नाभावे कर्त्तव्ये मुत्वस्य सिद्धत्वात् घेः परत्वात्सन्नाभावः निर्बाधः, अतएव अमुना इत्यादि॥ अन्यत्-सुगमम्॥

इति हलन्तपुंलिङ्गप्रकरणम्॥

---

## ॥ अथ हलन्ताः स्त्रीलिङ्गाः॥

**४४०। नहो धः। ८।२।३४॥**

**दी—। नहो हस्य धः स्यात् झलि पदान्ते च उपानत्—उपानद्, उपानहौ, उपानहः। उपानद्भ्याम्। उपानत्सु॥**

The हकार of the root नह becomes ध when a झल् letter follows or when at the end of a पद। Thus the base उपानह् is got from उप नह+क्विप् with दीर्घ of the पूर्वपद by the rule "नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ" (६।३।११६)। In its सु we get उपानध् with धत्व of हकार which by जश्त्व and चर्त्व yields उपानत् and उपानद् in सु (सु eliding by "हल्ङ्याब्भ्यो" &c. Similarly उपानद्भ्याम् and उपानत्सु &c.

मित—। "ह्रोढः" इत्यतः हो वर्त्तते। तदाह—'नहो हस्य धः' इत्यादि। ततः उप+नह बन्धने+क्विप् इत्यत्र "नहिवृतिवृषिव्यधिरुचिसहितनषु क्वौ" इति पूर्वपदस्य दीर्घे सति उपानह् इति शब्दः। अस्य सौ सुलोपे पदान्तत्वात् हस्य धकारे सति उपानध् इति। ततः जश्त्वचर्त्वेन च उपानत्—उपानद् इति॥ एवं भ्यामि पदत्वात् धत्वे जश्त्वे च उपानद्भ्याम्। एवं उपानह+सु इति हस्य धत्वे 'खरि च' इति चर्त्वे उपानत् सु इति॥ उद्पूर्वात् स्निहधातोः क्विन् उद्+स्निह+क्विन् = उष्णिह् इति शब्दः "ऋत्विग्दधृक्—" इति सूत्रेण सिध्यति। अस्य रूपं दर्शयति—

दी—। उत्पूर्वात् 'ष्णिह प्रीतौ' इत्यस्मात् "ऋत्विग्—" आदिना क्विन्। (अस्मादेव)' निपातनात् दलोपषत्वे। क्विन्नन्तत्वात् कुत्वेन हस्यघः ; जश्त्वचर्त्त्वे। (ततः) उष्णिक्—उष्णिग्, उष्णिगौ, उष्णिहः। उष्णिग्भ्याम्। उष्णिक्षु ॥ (इति हान्ताः)।

(स्त्रीलिङ्गदिव्शब्दमाह—) द्यौः (सौ "दिव औत्"); दिवौ, दिवः। (पदान्ते "दिव उत्" इति) द्युभ्याम्। द्युषु ॥ (रेफान्तगिर्शब्दमाह—) गृणाति अनया इति क्विप् सम्पदादिः। "ऋतद्धातोः" (७।१।१००) इति इर्। ततः गिर् इति प्रातिपदिकम्। अस्य सौ सुलोपे "र्वोरुपधाया: दीर्घः—" इति दीर्घः। ततः— गीः गिरौ—गिरः ॥ एवं पूः। (पिपर्त्ति पारयति इति क्विपि "उदोष्ठ्यपूर्वस्य" (७।१।१०२) इत्युत् रपरः। ततः पुर् इति प्रातिपदिकम्) ॥ चतुरः चतसृआदेशः ("त्रिचतुरोः स्त्रियाम्" इति सूत्रेण इति शेषः)। चतस्रः (चतसृ—आदेशस्तु परः। ततः एतत् "चतुरनडुहोः—" इति आमं बाधित्वा प्रवर्त्तते। चतसृ + अस् = चतस्रः)। चतस्रः। चतसृणाम् ("न तिसृचतसृ" इति दीर्घ-प्रतिषेधः) ॥ इति रेफान्ताः ॥

(अथ मान्ताः आरभ्यन्ते) (किमः कः इति) किमः कादेशे टाप्। का—के—काः। सर्वावत् ॥ (अथ इदम्शब्दस्य स्त्रियां विशेषं वक्ष्यति—)

Eng.—Easy.

## ४४१। यः सौ। ७।२।११०।

दी—। इदमो दस्य यः स्यात् सौ। "इदमो मः" (सूत्र ३४३) [इति मकारस्य मकारे कृते। अनेन सूत्रेण दस्य च यत्वे सति—] इयम् ॥ [औङि] त्यदाद्यत्वं (? पररूपत्वम्), टाप्। "दश्च" (सूत्र ३४५) इति मः। इमे—इमाः। इमाम्—इमे—इमाः। अनया। 'हलि लोपः' (इद् इत्यस्य लोपः) आभ्याम्। आभिः। अस्यै (स्याडागमः)। अस्याः। अनयोः। आसाम्। अस्याम्—अनयोः—आसु। अन्वादेशे तु। एनाम्—एने—एनाः। एनया एनयोः ॥ इति मान्ताः ॥

The द of इदम् is replaced by य when सु follows. [This order is in feminine gender only; for in masculine we have the special rule "इदोय् पुंसि" and in neuter सु &c. being elided there is no अङ्गकार्य्य at all]. Thus इदम्+सु=इदम्+सु by the rule "इदमो मः"=इमम् with हलङ्याादिना सुलोपः। In इदम्+औ, we have त्यदाद्यत्व yielding इद अ+औ=इद+यौ by पररूप=इदा+औ by टाप् in feminine =इदा+शी by the rule "औङ आपः"=इदे by "आद्गुणः"=इमे by म for द by the rule 'दश्च' ॥ In इदम्+आ=इद+आ by त्यदाद्यत्व=अना आ by the rule 'अनाप्यकः'=अनया by एत्व (see ante. under masc. इदम्) ॥ In भ्याम् &c. we have 'इद्' लोप् by the rule "हलि लोपः" &c. as in masculine and so on. अस्यत अस्यै, अस्याम् &c. as in सर्वस्यै, सर्वस्याः &c. In अन्वादेश एन is ordered for द्वितीया, श्या singular and 6th and 7th case dual and the declension is like the base रमा।

मित—। "इदमो मः" इतिसूत्रात् इदमः वर्त्तते। "दश्च" इतिसूत्रात् 'दः' इति षष्ठ्यन्तमप्यस्ति। तदाह—'इदमो दस्य यः स्यात् सौ' ॥ "इदोऽय् पुंसि" (७।२।१११) इत्युत्तरसूत्रे पुंसि इति विशिष्यवचनात्, नपुंसके च सोः लुका लुप्ते अङ्गकार्य्याभावात् स्त्रियामयं विधिः इति बोध्यम् ॥ इदम्+सु ("इदमो मः" इतिसूत्रेण मकारस्य मत्वे=(अनेन सूत्रेण दस्य यत्वे) इयम् इति ॥ औङि त्यदाद्यत्वे इदमऔ इति जाते पररूपे टापि सति इदा+औ इति भवति। ततः "औङ आपः" इति शीभावे गुणे च सति 'दश्च' इति दकारस्य मत्वे च इमे इति ॥ त्यदाद्यत्वेन इद+आ इति जाते "अनाप्यकः" इति अन। आ इति स्थिते एत्वे अनया इति ॥ हलादौ इदमो इदमो इदो लोपे=पुंलिङ्गवत् आभ्याम् इत्यादि भवति ॥ अस्यै अस्याः, अस्याम् इत्यादौ स्याडागमादि सर्वावत् ॥ अन्वादेशे 'एन' इति जाते रमावत् रूपाणि ॥

द्दो—। "ऋत्विग् दधृग—" (इति सूत्रेण) स्रजेः क्विन् अमागमश्च निपात्यते। (ततः स्रज् इति प्रातिपदिकम्। अस्य सौ क्विन्नन्तत्वात् कुत्वे जश्त्वे चर्त्वे सति—) स्रक्—स्रजौ। स्रजौ—स्रजः। स्रग्भ्याम्। स्रक्षु ॥ इति जान्ताः ॥

( त्यदशब्दमाह— ) त्यदाद्यत्वम्, टाप्। स्य—त्ये—त्याः। एवं तद यद्। एतद ॥ इति दान्ताः ॥

( वक्तीति कर्त्तरि क्विप्। "क्विप्वचि—" ( वार्त्तिक ) इति दीर्घः असम्प्रसारणं च; वाच् इति प्रतिपदिकम्। अस्य सौ, हलङ्यादिना सुलोपः। 'चोः कुः' इति कुत्वम्। जश्त्वेचर्त्वे। तदाह— ) वाक्—वाग्, वाचौ—वाचः। वाग्भ्याम्। वाक्षु ॥

( आप्नोतीति औणादिके क्विपि "आप्नोतेर्ह्रस्वश्च" इति ह्रस्वः। अप् इति ) अपशब्दो नित्यं बहुवचनान्तः। "अपतृन्—" ( सूत्र २७७ ) इति दीर्घः ( सर्वनामस्थाने ) आपः। अपः।

Eng.—Easy.

मित—। अप् भिस् इति स्थिते आह—

## ४४२। अपो भि। ७।४।४८।

दी—। अपस्तकारः स्यात् भादौ प्रत्यये परे। अद्भिः। अद्भ्यः। अद्भ्यः। अपाम्। अप्सु ॥ ( इति पान्ताः ) ॥

The final of अप् is changed to तकार when an affix beginning with भ follows. Thus अद्भिः, अद्भ्यः &c. In अब्भक्षः we do not get त at the final for here भादि प्रत्यय does not follow but भादि word only.

मित—। "अचः उपसर्गात्तः" इति सूत्रात् 'तः' वर्त्तते। 'भि' इति भादि प्रत्यये परे इत्यर्थः ॥ अन्यत् सुगमम् ॥ दिश+क्विन् ऋत्विगादिसूत्रेण=दिश्। अस्य सौ "व्रश्च—" इति षः। तस्य जश् 'त्वेन डः', तस्य "क्विन्प्रत्ययस्य कुः" इति कुत्वम्। जश्त्वचर्त्वे। तदाह—

दी—। दिक्—दिग्, दिशौ—दिशः दिग्भ्याम्, दिक्षु ॥ ( दृश्यन्ते अर्थाः अनया इति विग्रहे सम्पदादित्वात् दृशेः क्विपि सति अपि कुत्वम् स्यात्। तदेवाह— ) "त्यदादिषु—" ( सूत्र ४२९ ) इति दृशेः क्विन् विधानात् अन्यत्रापि कुत्वम्; क्विन् प्रत्ययो यस्मात् इति बहुव्रीह्यपेक्षया इत्यर्थः। दृक्—दृग्, दृशौ—दृशः ॥

( त्वं षतीति त्विषेः क्विप् । त्विष् इति प्रातिपदिकम् ) त्विट्—त्विड्, त्विषौ—त्विषः । त्विड्भ्याम् । त्विट्त्सु—त्विट्सु । ("ड: सि धुट्" इति पाक्षिको धुट्) । सहजुषते इति ( सजुष् शब्दः । अस्य सौ "ससजुषो रुः" इति रुत्वम् । "र्वोरुपधायाः" इति दीर्घः । अतः आह— ) सजूः, सजुषौ, सजुषः । सजूर्भ्याम् । सजूर्षु—सजूःषु ॥ ( आशासनम् इत्याशास्ते: क्विप् । "आशासः क्वावुपसंख्यानम्" इत्युपधाया: इत्वम् । "शासिवसिघसीनाञ्च" इति षत्वम् । अस्य षत्वस्य असिद्धत्वात् रुत्वम् । ततः सुलोपे "र्वोरुपधायाः" इति दीर्घः । एतत् सर्वमेवाह—) षत्वस्यासिद्धत्वात् रुत्वम् । आशीः—आशिषौ—आशिषः । आशीर्भ्याम् । आशीर्भिः ॥ ( स्त्रीलिङ्ग अदस् शब्दमाह— ) असौ ( पुंलिङ्गप्रकरणं द्रष्टव्यम् ) । त्यदाद्यत्वं टाप् । औङः शी । उत्वमत्वे । अमू ; अमूः । अमूम् । अमू अमूः । अमुया, अमूभ्याम्, अमूभिः । अमुष्यै, अमूभ्याम्, अमूभ्यः । अमुष्याः, अमुयोः, अमूषाम् । अमुष्याम्, अमुयोः, अमूषु । ( सर्वत्र पुंलिङ्गप्रकरणं सर्वाशब्दरूपं च द्रष्टव्यम् ) ॥

इति हलन्ताः स्त्रीलिङ्गाः ॥

Eng—Easy.

---

# "अथ हलन्तनपुंसकलिङ्गप्रकरणम् ॥"

दी—। ( सु शोभनाः अनड्वाहः यस्य कुलस्य इति बहुव्रीहौ स्वनडुह्शब्दं नपुंसकेनाह— ) "स्वमोर्लुक्" ( लुकालुप्तत्वात् "सावनडुहः" (७।१।८२) इति नुम् न ) । ( पदान्तत्वात् ) दत्वम् । स्वनडुत्—स्वनडुद् । स्वनडुही ( नपुंसकाच्च' इति औङः शीभावः ) । "चतुरनडुहो—" ( सूत्र ३११ ) इत्याम् ( सर्वनामस्थाने । नपुंसकस्य प्रथमा द्वितीया बहुवचनम्—'शि' सर्वनामस्थानम् इति प्राप्तम् । "नपुंसकस्य झलचः" इति नुम् । तत्र "नश्च" इति अनुस्वारे सति—) स्वनड्वांहि । पुनस्तद्वत् । शेषं पुंवत् ॥

[ विमलः द्यौः आकाशः यस्य अह्नः इति विग्रहे—विमलदिव् शब्दमाह— ) "दिव उत्" ( पदान्ते ) । **अहर्विमलद्यु ॥** ( विमलदिव् + औ = विमलदिवी । अत्र 'दिव्' शब्दस्य पदान्तत्वाभावात् "दिव उत्" इत्युत्वं न स्यात् । तथाह— ) **अन्तर्वर्त्तिनीं विभक्तिमाश्रित्य पूर्वपदस्य एव उत्तरखण्डस्यापि पदसंज्ञायां प्राप्तायाम् "उत्तरपदत्वे चापदादिविधौ प्रतिषेधः" ( वार्त्तिक ) इति प्रत्यय-लक्षणं न । विमलदिवी, विमलदिवि ॥ अपदादिविधौ किम् ?—दधि-सेचौ । इह षत्वनिषेधे कर्त्तव्ये पदत्वमस्त्येव । चकारस्य कुत्वे (कर्त्तव्ये) तु न ( पदत्वं नास्ति इत्यर्थः ) ॥**

Eng—unnecassary.

मित—। विमलदिव्+औ इत्यत्र 'विमलदिवी' इति रूपं वक्ष्यन् उपन्यस्यति । 'विमलदिवी' इत्यत्र समुदायस्य सुबन्ततया पदत्वम् अस्ति, न तु केवलस्य दिव्शब्दस्य, अतः "दिव उत्" इति न प्राप्नोति । न च "सुपोधातुप्रातिपदिकयोः" इति लुप्तां दिव्शब्दोत्तरां विभक्तिं प्रत्ययलक्षणेनाश्रित्य दिव् इत्यस्य पदत्वं वाच्यम् । "न च लुका लुप्तत्वात् न प्रत्ययलक्षणम् इति वाच्यम् ; पदसंज्ञायाः सुबन्तधर्मतया अङ्गधर्मत्वाभावेन अत्र "न लुमता—" इति निषेधस्याप्रवृत्तेः । अन्यथा राज्ञः पुरुषः राजपुरुषः इत्यादौ पूर्वभागे नलोपादिकं न स्यात्" सर्वमेतत् आशङ्क्य आह—"अन्तर्वर्त्तिनीम् विभक्तिमा-श्रित्य" इत्यादि । अत्र प्रत्ययलक्षणं वारयति च वार्त्तिकमेतत् । वार्त्तिकस्यार्थो यथा—"समासे उत्तरखण्डस्य पदसंज्ञायां कर्त्तव्यायाम् 'अन्तर्वर्त्तिविभक्तिलोपे प्रत्यय-लक्षणप्रतिषेधो वक्तव्यः पदादिविधिं वर्जयित्वा" । ततश्च 'दिव्' इत्यस्य उत्तरखण्डस्य प्रत्ययलक्षणे प्रतिषेधे दिव् इत्यस्य पदत्वं नास्ति, "दिव उत्" इति च न प्रवर्त्तते ततः विमलदिवी ; विमलदिवि ( औ झलन्तत्वाभावात् नुम् न ) ॥ अपदादिविधौ इति वार्त्तिके किमर्थमुक्तम् तदाह—दधिसेचौ इति । सेच् इति क्विबन्तमेतत् । दध्नः सेचौ दधिसेचौ । अत्र समासे उत्तरखण्डस्य शेषां लुप्तां विभक्तिं प्रत्ययलक्षणेनाश्रित्य 'सेच् इत्यस्य पदत्वेन तत्सकारस्य पदादितया "सात्पदाद्योः" इति सूत्रेण षत्वनिषेधः इष्टः । तथा च बालमनोरमा "उत्तरपदत्वे प्रत्ययलक्षणप्रतिषेधः' इत्येतावति उक्ते तु सेच् इत्युत्तरखण्डस्य पदसंज्ञायां कर्त्तव्यायां प्रत्ययलक्षणप्रतिषेधः स्यात् । तथा च

'सेच्' इत्यस्य सुबन्तत्वाभावेन अपदतया तत्सकारस्य पदादित्वाभावेन षत्वनिषेधो न स्यात्। अतः "अपदादिविधौ" इति उक्तम्। षत्वनिषेधस्य पदादिविधितया तस्मिन् कर्त्तव्ये प्रत्ययलक्षणप्रतिषेधाभावेन प्रत्ययलक्षणमाश्रित्य 'सेच्' इत्यस्य पदान्तत्वात् तत् सकारस्य "सात्पदाद्योः" इति षत्वनिषेधोनिर्बाधः। ननु 'सेच्' इत्युत्तरखण्डस्य पदत्वे चकारस्य कुत्वं स्यात्"। अतः आह—'चकारस्य कुत्वे तु न'। अस्यार्थः यथा—कुत्वे कर्त्तव्ये तु सेच् इत्यस्य पदत्वं नास्ति। कुत्वस्य पदान्तविधित्वेन पदादिविधि-भिन्नतया तस्मिन् कर्त्तव्ये प्रत्ययलक्षणप्रतिषेधसत्वात् पदत्वाभावात् इति बोध्यम्॥

अधुना रेफान्तं वार्—शब्दमाह :—

**दी—। वाः, वारी, अझलन्तत्वात् न नुम्—वारि** (झलन्तत्वाभावात् सर्वनामस्थाने नुम् न इत्यर्थः)। **वारा—वार्भ्याम् इत्यादि।** (वार्षु इत्यत्र "रोः सुपि" इति नियमात् न विसर्जनीयः)॥ (चतुर्शब्दः नित्यबहुवचनान्तः। अतः आह—) **चत्वारि** ('शि' इत्यस्य सर्वनामस्थानत्वात् "चतुरनडुहो:—" इति आम्)॥ (किम् शब्दमाह। किम् सु इत्यत्र सोर्लुकि लुमतालुप्तत्वात् "किमः कः" इति कादेशो न, एतदेवाह—) **न 'लुमता' इति कादेशो न। किम्, के, कानि॥** (एवं)। **इदम्, इमे, इमानि॥**

**दी—। "अन्वादेशे नपुंसके एनद्वक्तव्यः"** (वार्त्तिक)। **एनत्। एने, एनानि। एनेन। एनयोः। एनयोः॥**

मित—। "द्वितीया टौस्स्वेनः" इत्यत्रैव। तत्र अनर्थमेवैतत् वार्त्तिकम्। इतरांश पूर्वेणैवसिद्धम्। वस्तुतस्तु 'द्वितीयाटौस्स्वेनत्' इति सूत्राङ्गे सति, नपुंसके अमि लुमि एनत्सिध्यति। 'एनम्, एनौ एनान् इत्यादयस्तु त्यदाद्यत्वेन सिध्यति इति भाष्ये स्पष्टम्॥

अधुना ब्रह्मन् शब्दमाह—

**दी—। ब्रह्म, ब्रह्मणी, ब्रह्माणि। "सम्बुद्धौ नपुंसकानां नलोपो वा वाच्यः"—हे ब्रह्मन्, हे ब्रह्म॥**

मित—। ब्रह्मेति। अत्र सर्वनामस्थानत्वाभावात् सुश्च न लुप्तत्वात् उपधावृद्धिः न भवति। "न ङिसम्बुद्ध्योः" इति नलोपः। ब्रह्माणीति सर्वनामस्थानत्वा-

भावात् नोपधायावृद्धिः, "सर्वनामस्थाने चासम्बुद्धौ" इति सूत्रं द्रष्टव्यम्। 'ब्रह्माणि इति झलन्तत्वाभावात् न नुम्। इति सर्वमेतत् हलन्तपुंलिङ्गप्रकरणे राजन्शब्दरूपे द्रष्टव्यम् ॥ अहन् सु इत्यत्र लुमता लुप्ते सुप परत्वाभावात् "रोऽसुपि" इति रः,—एतदेवाह—

दी—। "रोऽसुपि" (सूत्र १७२) [इति] अहर्भाति। "विभाषा ङिश्योः" (सूत्र २७१) इति अह्नी, अहनी, अहानि (अत्र झलन्तत्वाभावात् नुम् न, किन्तु सर्वनामस्थानत्वात् उपधादीर्घः) ॥

मित—। सुगमा ॥ भ्यामादौ हलि अहन्शब्दस्य विशेषमाह:—

४४३। अहन्। ८।२।६८।

दी—। 'अहन्' इत्यस्य रुः स्यात् पदान्ते। अहोभ्याम्, अहोभिः। इह "अहः" "अहोभ्याम्" इत्यादौ रत्वरुत्वयोः असिद्धत्वात् नलोपे प्राप्ते 'अहन्' इत्यावर्त्त्य एकेन नलोपाभावं निपात्य द्वितीयेन रुर्विधेयः। तदन्तस्यापि रुत्वरत्वे। दीर्घाणि अहानि यस्य स दीर्घाहा निदाघः। इह हल्ङ्यादिलोपे प्रत्ययलक्षणेन 'असुपि' इति निषेधात् रत्वाभावे रुः, तस्य असिद्धत्वात् नान्तलक्षणा उपधादीर्घः। सम्बुद्धौ तु हे दीर्घाहो निदाघः ("हशि च" इति सन्धौ उत्वम्)। दीर्घाहाणौ, दीर्घाहाणः। दीर्घाह्णा, दीर्घाहोभ्याम् इत्यादि ॥

'रु' is ordered at the final of the base अहन् when at the end of a पद। Thus अहन्+भ्याम्=अहरुभ्याम्=अह उ भ्याम्=अहोभ्याम् by the rule "हशि च" (ante.) Similarly अहोभिः। In अहः and अहोभ्याम् रत्व and रुत्व respectively are treated as असिद्ध, so नलोप by the rule "नलोपः प्रातिपदिकान्तस्य" is due here; this however does not take place owing to bringing of 'अहन्' in this sutra; so by one 'अहन्' there is absence of नलोप here and by the second 'अहन्' of the sutra रु is being enjoined. As 'अहन्' is said in original in this

sutra, so रु comes even after words having अहन् final. Thus we get दीर्घाह्ना: निदाघः। Here in दीर्घाहन् सु, when सु elides by the rule "हल्ङ्याब्भ्यो—", then resorting प्रत्ययलक्षणत्व here 'असुपि' prohibits रत्व but we get रुत्व yielding दर्घाह रु=दीर्घाहा: and here this रु being as if not taken place we have उपधादीर्घ for it ends in न (owing to असिद्धत्व of रु)। In सम्बोधन the form is दीर्घाहः and so on.

मित—। "ससजुषो रु" इत्यतः 'रुः' वर्त्तते। फलतः पादान्ताविकारस्तु अस्त्येव। ततः आह—'अहन्' इत्यस्य रुः स्यात् इत्यादि॥ अत्र 'अहन्' इति लुप्तषष्ठीकः प्रकृतिनिर्देशः। तेन सौ लाक्षणिकस्य अहन्रूपस्य न रुः किन्तु र एव॥ "नलोपः प्रातिपदिकान्तस्य" इत्येतत् प्रति अहः अहोभ्याम् इत्यादिषु कृतं रत्वं रुत्वं चासिद्धम्। तेन प्राप्नोति नलोपः। 'अहन्' इति सूत्रे नकारान्त निपातात् (पुनः 'अहन्' इत्यनुवर्त्तनात्) न भवति। अन्यथा नलोपं कृत्वा अह इति निर्दिश्येत। एवं च 'अह्नो नलोपप्रतिषेधः' इति वार्त्तिकं न कर्त्तव्यमिति इति निष्कर्षः॥ अन्यत् सर्वम् सुगमम्॥

दी—। [दण्डिन् सु इत्यत्र सुलुक्। नलोपः—] **दण्डि** (अत्र उपधादीर्घस्तु न, सर्वनामस्थानत्वाभावात्, लुका च लुप्तत्वात्)। **दण्डिनी, दण्डीनि। दण्डिभ्याम् इत्यादि॥ स्रग्वि, स्रग्विणी, स्रग्वीणि** (दण्डिवत्)॥ **वाग्मि, वाग्मिनी, वाग्मीनि॥ बहुवृत्रह, बहुवृत्रघ्नी** (अल्लोपे कुत्वे च सति रूपम्) **—बहुवृत्रहणी, बहुवृत्रहाणि** (शेः सर्वनामस्थानत्वात्, तस्मिन् सति अल्लोपाभावात् "इन् हन्—" इति उपधादीर्घे "एकाजुत्तरपदेणः" इति णत्वम् इति बोध्यम्)॥ (बहवः पूषाणः यत्र इति बहुपूषन्) **बहुपूष, बहुपूष्णी** (श्यास् अल्लोपे रूपम्,—(तदभावे) **बहुपूषणी, बहुपूषाणि॥** (एवम्) **बह्वर्यम, बह्वर्यम्णी—बह्वर्यमणी, बह्वर्यमाणि॥** (नञ्पूर्वात् सृजधातोः सम्पदादित्वात् क्विप् असृज् इति रक्तपर्यायः। अस्य सौ नपुंसके स्वमोर्लुकि विशेषमाह—) **असृक्। पदान्ते कुत्वम्, सृजेः क्विन्विधानात्** ("क्विन्प्रत्ययस्य कुः" इति सूत्रे क्विन्प्रत्ययः यस्मात् इति बहुव्रीह्याश्रयणात्)। **विश्वसृडादौ तु न। "ऋत्विग्दधृक्—" इति सूत्रे "रज्जुसृड्भ्याम्" इति भाष्यप्रयोगात्** (सर्वमेतत् पुंलिङ्गप्रकरणे स्पष्टम्)। **यत्र "व्रश्च—" आदिसूत्रे [illegible]**

**यज्योः पदान्ते षत्वं कुत्वापवादः** ( एतयोः षत्वं कुत्वं बाधित्वा वर्त्तते इत्यर्थः ; ततश्च भाष्यप्रयोगः सङ्कच्छते )। **स्रग् ऋत्विग्शब्दयोस्तु निपातनादेव कुत्वम्।** ( ननु तदा असृक् शब्देऽपि कुत्वापवादं षत्वं इति चेत्, तन्न। इत्येदवाह ) **असृक-शब्दस्तु अस्यतेरौणादिके ऋच्प्रत्यये बोध्यः** ( ततः "व्रश्च—" इति सूत्रस्याविषय-त्वात् "चोः कुः" इति कुत्वे सति असृक्, असृग्, इति—) **असृक्—असृग्, असृजी, असृञ्जी। "पद्दन्नो—" इति सूत्रेण वा असन्। असानि। असृजा—अस्ना, असृग्भ्याम् असभ्याम् इत्यादि ॥** ( ऊर्जयति इति ऊर्ज प्राणने क्विन् ऊर्ज इति प्रातिपदिकम् ) **ऊर्क—ऊर्गं, ऊर्जी, ऊर्न्जि। नरजानां संयोगः ॥** ( वहूर्ज-शब्दे अन्त्यात् अचः ऊकारात् उपरि नुमः प्रतिषेधः स्यात्, किन्तु अन्त्यात् वर्णात् पूर्वोनुम् वा स्यात् इति वार्त्तिकद्वयेनाह—) **"वहूर्जि नुम् प्रतिषेधः"। "अन्त्यात्-पूर्वो वा नुम्" (वार्त्तिक)। वहूर्जि—वहूर्न्जि वा कुलानि ॥ त्यत्** ( लुकालुप्त-त्वात् त्यदाद्यत्वं सत्वं च न ), **त्यद्, त्ये, त्यानि ॥ तत्—तद्, ते, तानि ॥ यत्—यद्, ये, यानि। एतत्—एतद्, एते, एतानि। अन्वादेशे तु एनत् ॥ वेभिद्यतेः क्विप्** ( वेभिद्य इति यङ्लुगन्तधातोः अतो लोपे यलोपे च वेभिद् इति )। **वेभित्—वेभिद्, वेभिदी।** ( जस्शसोः स्थाने यः शिः तस्मिन् ) **सौ अल्लोपस्य स्थानिव-त्वात् अझलन्तत्वात् न नुम्। अजन्तलक्षणस्तु नुम् न ; स्वविधौ स्थानि-वत्वाभावात्** ( स्थानिभूतस्य अल्लोपस्य स्वस्य विधौ कर्त्तव्ये अल्लोपस्य स्थानिवत्त्वं न सम्भवति इत्यर्थः )। **वेभिदि ब्राह्मणकुलानि ॥** ( एवं ) **चेच्छिदि ॥**

Eng.—Unnecessary (only Sanskrit Note is given along with Dikshita ) ; for here forms are almost everywhere in the light of masculine declensions.

मित—। सुगमा ॥ गामञ्चतीति क्विन्। अवङि गवाच् ; पूजायां ("नाञ्चेः पूजायाम्" इति नलोपाभावात् ) "एङः पदन्तात् अति" इति पूर्वरूपे गोच् ; पूजायाम् गोञ्च्। प्रकृतिभावे गोअच्, पूजायाम् गोअञ्च् इति षट् प्रातिपदिकानि। एषां रूपाणि वक्ष्यण् श्लोकद्वयेन रूपसंख्यानि निर्णयन् आह—

दी—। गवाक्शब्दस्य रूपाणि क्लीबेऽर्चागतिभेदतः।
असन्ध्यवङ् पूर्वरूपैर्नवाधिकशतं मतम्॥
स्वमुसुप्सु नव, षड्भादौषट्के स्यु स्त्रीणि जसशसोः।
चत्वारि शेषे दशके रूपाणीति विभावय॥

In the neuter gender the base गवाक् with difference of meaning in the root अञ्च e.g., worship and motion, and by प्रकृतिभाव, अवङादेश and पूर्वरूप in सन्धि in each case takes 109 forms in its declensions. Thus it has 9 forms in each of सु, अम् and सुप्, has six forms in the six भादि case affixes (e.g., भ्यामत्रय. भिस्, भ्यस्द्वय), has three each in जस् and शस्। And in rest ten विभक्तिप्रत्यय it has four forms in each. So altogether it has 109 forms in its declension in the neuter. This is now being illustrated—

मित—। सुगमा॥ श्लोकोक्तमेव उदाहरणेन उपपादयति—

दी—। तथाहि—गामञ्चतीति विग्रहे "ऋत्विग—" आदिना क्विन्। गतौ ("अनिदितां—" इति) नलोपः। "अवङ् स्फोटायनस्य" इत्यवङ्। गवाक्—गवाग्। "सर्वत्रविभाषा गोः" इति प्रकृतिभावे—गो अक्, गोअग्। ("एङः पदान्तात् अति" इति) पूर्वरूपे गोक्—गोग्। पूजायाम् ("नाञ्चेः पूजायाम्" इति नलोपाभावे) नस्य कुत्वेन ङः—गवाङ्, गोअङ्, गोङ्॥ अमि अपि एतान्येव नव॥ औङः शी; (अस्य) भत्वात् "अचः" इत्यल्लोपः—गोची। पूजायान्तु—गवाञ्ची, गोअञ्ची, गोञ्ची॥ "जश्शसोः शिः"। शेः सर्वनामस्थानत्वात् नुम्। गवाञ्चि, गोअञ्चि, गोञ्ची; गतिपूजनयोः त्रीण्येव॥ गाचा—गवाञ्चा—गोअञ्चा—गोञ्चा॥ (गत्यर्थे) गवाग्भ्याम्—गोअग्भ्याम्—गोग्भ्याम्—। (पूजायाम्) गवाङ्भ्याम्—गोअङ्भ्याम्—गोङ्भ्याम् इत्यादि (एवं भिसि भ्यस्द्वयेऽपि बोध्यम्)॥ सुपि तु ङान्तानां, पक्षे "ङ्णोः कुक् टुक् शरि—" इति कुक्। गवाङ्क्षु—गोअङ्क्षु गोङ्क्षु—गवाङ्षु—गोअङ्षु—गोङ्षु, गवाक्षु—गोअक्षु—गोक्षु। न चेह

"चयो द्वितीयाः—" इति पक्षे ककारस्य खकारेण षण्णामाधिक्यं शङ्क्यम् ; चर्त्वस्यासिद्धत्वात्। कुक्पक्षे तु तस्य असिद्धत्वात् जश्त्वाभावे पक्षे द्वितीयादेशात् त्रीणि रूपाणि वर्धन्ते एव। ( सूत्रकारमतेन नवाधिकशतं रूपाणि, खमते अधिकमुक्तम् इत्यर्थः )। ऊह्यमेषां द्विर्वचनानुनासिकविकल्पनात्। रूपाण्यत्राग्निभूतानि ( ५२७ ) भवन्तीति मनीषिभिः॥

मित—। सुगमा॥ ऊह्यमेषामिति। सौ नवानां रूपाणामन्त्यवर्णस्य "अनचि च" इतिद्वित्वे तदभावे च अष्टादश रूपाणि इत्यनेन अन्यत्रापि द्विर्वचनादिवोद्धव्यम् इति विस्तरभयात् व्यवहारकाले अप्रकृतत्वाच्च सुगमत्वाच्च व्याख्यानमनावश्यकमेव॥

अधुना तिर्य्यञ्चशब्दमाह। तिरः अञ्चतीति "ऋत्विगदधृक्—" आदिना क्विन्। गतौ "अनिदिताम् हलः—" इति नलोपः। ततः नपुंसके सौ सोर्लोपः। कुत्वम्। जशत्वचर्त्वे। अतः आह—

दी—। तिर्य्यक्—तिर्य्यग्, तिरश्ची ( औङः श्या भत्वात् 'अचः' इति अलोपः ); तिर्य्यञ्चि। पूजायां तु—तिर्य्यङ्, तिर्य्यञ्ची, तिर्य्यञ्चि। ( शेषं पुंवत् )॥ यकृत्, यकृती, यकृन्ति। "पद्दन्नो—" इति वा यकन्। यकानि। यक्ना—यकृता॥ शकृत्, शकृती, शकृन्ती। ( पाक्षिक शकन् आदेशे सति— ) शकानि। शक्ना—शकृता॥ ( दा+शतृ=ददत् इति प्रातिपदिकम्। अस्य रूपाण्याह— ) ददत्, ददती।

मित—। ददत+शि इति स्थिते शौ "नाभ्यस्ताच्छतुः" इति नित्यं नुमनिषेधे प्राप्ते विधानमाह—

४४४। वा नपुंसकस्य। ७।१।७९।

दी—। अभ्यस्तात् परो यः शता तदन्तस्य क्लीवस्य नुम वा स्यात् सर्वनामस्थाने। ददन्ति-ददति॥ तुदत्।

Neuter base ending in the शतृ come after a duplicated root ( अभ्यस्तधातु ) takes नुम optionally in the सर्वनामस्थान affix. Here शि is a सर्वनामस्थान affix, so ददत्+शि takes नुम् optionally and we get

ददन्ति+ददति। Now the base तुदत् ( derived from तुद+शतृ ) is being declined and we look forward—

मित—। "नाभ्यस्तात् शतुः" इति वर्त्तते न च नञ्। "उगिदचाम्—" इति सूत्रात् सर्वनामस्थाने च अस्ति। तदाह—'अभ्यस्तात् परो यः शता' इत्यादि। नपुं-सकस्य जश्शसोः स्थाने शिः सर्वनामस्थानत्वात् पाक्षिके नुमि सति ददन्ति—ददति इति। अधुना तुद+शतृ=तुदत् इति अस्य रूपमाह। सोर्लुका लुप्तत्वात् तुदत् इति। औङः श्यां भत्वात् नुमि अप्राप्ते वैकल्पिकं विधानमाह—

## ४४२। आच्छीनद्योर्नुम्। ७।१।८०।

**दी—। अवर्णान्तात् अङ्गात् परो यः शतुरवयवः तदन्तस्य अङ्गस्य नुम वा स्यात् शीनद्योः परतः। तुदन्ती—तुदती, तुदन्ति। भात्, भान्ती—भाती, भान्ति॥ पचत्।**

When शी or नदी i.e., feminine affix follows, then नुम is optional after bases ending in शतृ come after अवर्णान्त-अङ्ग। Here अङ्गत्व is to be understood of roots taken along with श-विकरण। Thus in तुद+शतृ, तुद is अवर्णान्त अङ्ग taken along with श-विकरण, so this ending in शतृ takes optional नुम in शी and when the fem. affix ङीप् follow. Thus तुदत्+शी=तुदन्ती+तुदती। In तुदत्+शि we get सर्व-नामस्थानलक्षण नुम् by the rule "उगिदचाम्—" and the form is तुदन्ति। Similarly नुम in शी is optional after अवर्णान्त अदादि roots like भा, या &c. So we get भान्ती and भाती in शी of the stem भात् and so on. Now we see the peculiarity of the base पचत् got from भ्वादि root पच with शतृ added.

मित—। पूर्वसूत्रात् 'वा' इति वर्त्तते। 'आत्' इति पञ्चमी अवर्णान्तात् अङ्गात् इत्यर्थः। "नाभ्यस्तात् शतुः" इत्यतः शतुः वर्त्तते। तदाह—'अवर्णान्ताद-ङ्गात् परः यः शतुरवयव' इत्यादि। प्रकृते तु तुद इत्यस्य शी अवर्णात् नुम वा स्यात्,

अत्र अङ्गत्वं तु तदादि ग्रहणेन विकरणविशिष्टस्यापि ग्रहणं बोध्यम्। ततः तुदन्ती—तुदती इति॥ तुदन्ति इत्यत्र तु 'उगिदचाम्' इति सर्वनामस्थाने नुमि सति रूपम्॥ अदादौ लुकि अवर्णान्तात् धातोर्नुम् वा. तदाह—भात्, भान्ती—भाती इत्यादि॥ 'भान्ति' इति 'तुदन्ति' वत् बोध्यम्॥ अदादौ अन्यत्र अवर्णान्तत्वाभावे घ्नत्, घ्नती, घ्नन्ति इत्यादि नुमभावे सिध्यति। अतः "निःश्वसन्ती विशालम्" इत्यपप्रयोगः यतः 'श्वस' अदादौ पठितः॥ 'पचत्' इत्यत्र शबविकरणस्यापि "आच्छीनद्योः—" इत्यनेन सूत्रेण नुमो वैकल्पिकत्वे सति आह—

## ४४६। शप्श्यनोर्नित्यम्। ७।१।८१॥

**दी। शपश्यनोरात् परो यः शतुरवयवः तदन्तस्य नित्यं नुम् स्यात् शीनद्योः परतः। पचन्ती, पचन्ति॥ दीव्यत्, दीव्यन्ती, दीव्यन्ति॥**

नुम् is obligatory when शी and नदी i.e, fem. affix ङीप्, follow, after base ending in शतृ coming after अवर्ण of शप् (भ्वादि) or श्यन् (दिवादि) विकरण। Thus in पचत्, पच ends in अवर्ण with शबविकरण, so here नुम् is नित्य and we get पचन्ती in शी। Similarly दीव्यन्ती॥ पचन्ति+दीव्यन्ति however are formed as in तुदन्ति॥

मित—। "आच्छीनद्योर्नुम्" इति वर्त्तते। "नाभ्यस्तात्—" इत्यतः 'शतुः' अप्यस्ति। तदाह—'शप्श्यनोरात् परो यः' इत्यादि। ततः 'पच' इति शब्विकरण-विशिष्टस्य अवर्णस्य परो शतुरवयवस्य नुम् नित्यं भवति श्यां सत्याम्। एवं 'दीव्यत्' इत्यस्यापि बोध्यम्॥ पचन्ति दीव्यन्ति' इत्यादि तु तुदन्तिवत्॥ अन्यत् सुगमम्॥ फलितं यथा—तुदादौ शी अवर्णात् शतृ; नुम् वा शीनद्योः। अदादौ लुकि अवर्णान्तात् धातोर्नुम् वा। भ्वादौ शपि अवर्णान्तात् शतृ। नित्यं नुम्। दिवादौ श्यनि अवर्णात् शतृ। नित्यं नुम्। नित्यमेव नुम्। तेन "मोहेनान्तर्वरतनुरियं लुप्यमाना। विभाति गङ्गा रोधःपतनकलुषा गच्छतीव प्रसादम्" इति चिन्त्यम्। अन्यत्र जुहोत्यादौ श्लौ शतरि "श्नाभ्यस्तयोरातः" (६।४।११२) इत्यादन्तानामाकारलोपे नावर्णात् परः शता। नुमभावश्च॥ स्वादौ श्नौ नावर्णात् शतृ। नुमभावः। ततः

"अदर्शयन् वक्तुमशक्त्र वल्यः" इत्यपपाठः ॥ रुधादौ श्नमि अकर्णाभावः । नुम् न ॥ तनादौ उकारे नावर्णः ; न नुम् ॥ क्र्यादौ श्नप्रत्यये "श्नाभ्यस्तयोः—" इत्याकारलोपे अवर्णाभावः, नुमपि न ॥ चरादौ णिचि अपि नित्यं नुम् ॥

सुशोभनाः आपो यस्मिन् इति समासे "ऋक्पूरब्धूः—" इति समासान्तश्च न स्यात् "न पूजनात्" इति निषेधात् ततः 'स्वप्' इति प्रातिपदिकम् । तस्य रूपाण्याह—

दो । स्वप्—स्वब्, स्वपी ॥ (स्वप् + शि इत्यत्र विधानक्रममाह—) नित्यात् परादपि नुमः प्राक् "अप् तृन्—" (सूत्र २७७) ("अप्तृन्—" इति सूत्रे दीर्घस्य अप्शब्दसुबर्थ्यविहितत्वात्) इति दीर्घः, प्रतिपदोक्तत्वात् । ततः नुम् । स्वाम्पि ॥ (निरवकाशत्वं प्रतिपदोक्तत्वम्' इति पक्षोऽस्ति । तदा "अप्तृन्—" इति दीर्घस्तु निरवकाशो न भवति, आपः इत्यत्र सावकाशत्वात् । ततश्च पूर्वं नित्यत्वात् परत्वाच्च नुमागमे सति दीर्घः न स्यात् । इति सर्वमेतत् स्वीकृत्य आह—) "निरवकाशत्वं प्रातिपदोक्तत्वम्" इति पक्षे तु प्रकृते तदुभयाभावात् नुमेव । स्वम्पि ॥ स्वपा । 'अपोभि', इति स्वद्भ्याम्, स्वद्भिः इत्यादि ॥

Eng—Easy.

दी—। "अर्त्तिपृवपि—" इत्युणादिसूत्रेण धनेरुस् । (ततः प्रत्ययावयवत्वात् सस्य षत्वे धनुष् इति प्रातिपदिकम् । अस्मात् स्वमोर्लुक् । ततः षकारस्य असिद्धत्वात् "ससजुषो रुः" इति रुत्वम् । एतदेवाह—) षत्वस्यासिद्धत्वात् रुत्वम्—धनुः । धनुषी । (धनुस् जस् इत्यत्र नपुंसके शि ; नुम् । ततः धनुन्स् इ इति जाते—) 'सान्तमहतः— (सूत्र ३१७) इति दीर्घः । "नुम् विसर्जनीय—" (सूत्र ४३४) इति षत्वम् । धनूंषि । धनुषा, धनुर्भ्याम् । एवं चक्षुर्हविरादयः ॥ पिपठिषतेः क्विप् । "र्वोरुपधाया—" इति दीर्घः । पिपठीः, पिपठिषी । (पिपठिष् + शि इत्यत्र विधानमाह—) अल्लोपस्य स्थानिवत्त्वात् झलन्तलक्षणो नुम् न । स्वविधौ स्थानिवत्त्वाभावात् अजन्तलक्षणोपि नुम् न । पिपठिषि (वेभिदि' इत्यादौ सर्वमेतत् उक्तम्) । पिपठीर्भ्याम् इत्यादि पुंवत् ॥ पयः (लुका लुप्तत्वात् "अत्वसन्तस्य" इति नः

दीर्घः )। **पयसी, पयांसि । पयसा, पयोभ्याम् इत्यादि ॥** ( सु शोभनः पुमान् यस्य कुलस्य इति विग्रहे सुपुम्स् शब्दः । अस्मात् स्वमोर्लुक् । संयोगान्त-लोपः ततः सुपुम् इति । एतदेवाह— ) **सुपुम्, सुपुंसी, सुपुमांसि** ( शि सर्वनाम-स्थानत्वात् "पुंसोऽसुङ्" इति असुङ् ) ॥ अदस् सु इत्यत्र सोर्लुका लुप्तत्वात् न औ। नापि त्यदाद्यत्वम् । ततः ) **अदः ।**

( औङि रूपमाह— ) **विभक्तिकार्य्यम्** ( त्यदाद्यत्वादिकम् इति यावत् । ( "पूर्वत्रासिद्धम्—" इति विभक्ति कार्य्योत्तर ) **उत्वमत्वे ।** ( ततः ) **अमू ।** ( शौ, त्यदाद्यत्वं, पररूपत्वं अजन्तत्वात् नुम्, उपधादीर्घश्च, ततः उत्वमत्वे इति— ) **अमूनि । पुनस्तद्वत् । शेषं पुंवत् ॥**

Eng —Easy.

**॥ इति हलन्ताः नपुंसकलिङ्गाः ॥**

---

# ॥ अथाऽव्ययप्रकरणम् ॥

## ४४३ । स्वरादिनिपातमव्ययम् । १।१।३१ ॥

**दी । स्वरादयो निपाताश्च अव्ययसंज्ञाः स्युः ।**

Words beginning with स्वर् etc ( to be enumeratedbelow ) and words technically called in grammar as निपात (cp-the rule" "प्राग्री-श्वरान्निपाताः", "चादयोऽसत्त्ववचने", "प्रादयः" ; "उपसर्गाः क्रियायोगे" &c ) are all called अव्यय ।

मित— । स्वर् आदि येषां ते स्वरादयः । स्वरादयः चनिपाताश्च इति स्वरा-दिनिपातम्, समाहारद्वन्द्वः । निपाताः यथा—"प्राग्रीश्वरान्निपाताः" इत्यधिकृत्य "चादयोऽसत्त्ववचने", "प्रादयः", "उपसर्गाः क्रियायोगे" इत्यादि सूत्रविहिताः

( प्राग् व्याख्याताश्च )। अत्र बालमनोरमा द्रष्टव्या यथा—"स्वरादीनां चादीनां पृथक् पाठस्तु "निपाता आद्युदात्ताः" इति स्वरभेदार्थः। चादीनामसत्त्ववाचिनामेवाव्ययत्वम्। स्वरादीनान्तु सत्त्ववाचिनाम् असत्त्ववाचिनाञ्च तत् इति व्यवस्थार्थम् ॥"

अधुना स्वरादयो वक्ष्यन्ते—

दी—। **स्वर्**, **प्रातर्**, **पुनर्**, **सनुतर्** ( सनुतर् इत्यन्तर्धाने ; सनुतश्चौरो गच्छति ), **उच्चैस्**, **नीचैस्**, **शनैस्**, **ऋधक्** ( इति सत्ये। ऋधग्वदन्ति विद्वांसः ), **ऋते**, **युगपत्**, **आरात्**, **पृथक्**, **ह्यस्**, **श्वस्**, **दिवा**, **रात्रौ**, **सायम्**, **चिरम्** **मनाक्**, **ईषत्**, **जोषम्** ( इति सुखमौनयोः। जोषमास्ते जितेन्द्रियः। जोषमास्व ), **तूष्णीम्**, **बहिस्**, **अवस्**, ( इति बहिरर्थे ; अवो गच्छति ), **समया** ( इति समीपमध्ययोः। त्वां समया आस्ते ; ग्रामं समया आस्ते ग्राममध्ये इत्यर्थः ), **निकषा** ( इति समीपे। विलङ्घ्य लङ्कां निकषा हनिष्यति ), **स्वयम्**, **वृथा**, **नक्तम्**, **नञ्**, **हेतौ** ( इति निमित्ते ), **इद्धा** ( इति प्राकाश्ये। समिद्धमिद्धा शमद्धो दधासि ), **अद्धा** ( इत्यवधारणे। अद्धा प्रियं प्रत्यर्पयिष्यति ), **सामि** ( इत्यर्द्धकुत्सयोः। सामिसम्मीलिताक्षः ; सामिकृतमकृतं स्यात् ), '**वत्**' [ "तेन तुल्यं क्रियाचेद्वतिः" ( ५।१।११५ ) इत्यादिना विहितमिह गृह्यते। तदन्ततां प्रदर्शयन्नाह— ] **ब्राह्मणवत्**, **क्षत्रियवत्** ( इ वत्यन्तोदाहरणे )। **सना** ( इति नित्ये ), **उपधा** ( इति भेदे ), **सनत्** **सनात्** ( इ नित्ये ), **तिरस्**, **अन्तरा** **अन्तरेण**, **ज्योक्** ( इति कालभूयस्त्वे। ज्योग् जीवामः )। **कम्** ( इति वारिमूर्द्धसुखनिन्दाव्योमसु। कञ्च पद्मम् ), **शम्** ( इति दुःखोपशमे। शङ्करः, शम्भुः ), **सहसा**, **विना**, **नाना**, **स्वस्ति**, **स्वधा**, **अलम्**, **वषट्**, **श्रौषट्** **वौषट्** (एते हविर्दाने) **अन्यत्** ( इत्यन्यार्थे ), **अस्ति** ( इति सत्तायाम् तिङन्तप्रतिरूपकम् अव्ययम् ) **उपांशुः** ( अप्रकाशोच्चारणे ), **क्षमा** ( क्षान्तौ ), **विहायसा** ( आकाशे ) **दोषा**, **मृषा**, **मिथ्या**, **मुधा**, **पुरा**, **मिथो**, **मिथस्**, **प्रायस्**, **मुहुस्**, **प्रवाहुकम्** ( इति समकाले ) [ 'प्रवाह्निका'—इति पाठान्तरम् ], **आर्य्यं हलम्** ( इति प्रसह्यार्थे। आर्य्यहलं गृह्णाति ), **अभीक्ष्णम्**, **साकम्**, **सार्द्धम्**, **नमस्**, **हिरुक्** ( इति वर्जने ), **धिक्**, **अथ**, **अम्** ( इति शीघ्रार्थे ),

**आम्** ( इत्यङ्गीकारे ), **प्रताम्** ( इति ग्लानौ ), **प्रशान्** ( इति समासार्थे ), **मा, माङ्।** **आकृतिगणोयम्** ॥

N. B.—This स्वरादि list is an open one ( आकृतिगण ) and not a closed one.

मिल—। "प्राग्रीश्वरान्निपाताः"। तत्र चादय उपसर्गाः गतयः कर्मप्रवचनीयाश्च निपतन्ति। चादयश्च—

दी—। **च, वा, ह** ( इति प्रसिद्धौ ), **अह** ( पूजायाम्। गणकारस्तु 'ह अह' इति विनायोगे। त्वं ह ग्रामं गच्छ अयमहारण्यं गच्छतु ), **एव, एवम्, नूनम्, शश्वत्, युगपत्, भूयस्, कूपत्, सूपत्** ( द्वौ प्रश्ने प्रशंसायाम् च ), **कुवित्** ( भूयर्थे ), **नेत्** ( शङ्कायाम् ), **चेत् चन** ( चेदर्थे ), **यत्र नह** ( इत्यारम्भे ), **कच्चित् हन्त, माकिर् माकिम् नकिर्** ( वयः वर्जने ), **माङ् नञ् यावत् तावत् त्वै** विशेष वितर्कयोः ), **द्वै** ( वितर्के ), **न्वै** ( पाठान्तरम् ), **रै** ( दाने ) **श्रौषट् वौषट् स्वाहा स्वधा वषट् ओम्, तुम्** ( इति तुङ्कारे। गुरुं तुङ्कृत्य ), **तथाहि खलु-किल अथ सुष्ठु स्म, आदह** ( उपक्रमहिंसा कुत्सनेषु ); "**उपसर्ग विभक्ति स्वरप्रतिरूपकाश्च**" ( गणसूत्र )—[ तत्र उपसर्गप्रतिरूपकेषूदाहरणं अव इति ] **अवदत्तम्** ( उपसर्गे तु "अचः उपसर्गात्तः इति प्राप्नोति। अथवा उपसर्गेपि "अवदत्तं विदत्तञ्च प्रदत्तादिकर्मणि। सुदत्तमनुदत्तञ्च निदत्तमितिचेष्यते—" इत्यत्र निपातनात् अवत्तम् अवदत्तम् इति द्वावपि॥ विभक्तिप्रतिरूपकेषु सुप्विभक्तौ बहुम् इत्युदाहरणम्— ], **अहंयुः** ( सुबन्ते तु स्वरलोपः स्यात् ॥ तिङ्विभक्तौ—अस्तीति ], **अस्तिक्षीरा** ( तिङन्ते तु बहुव्रीहिर्नस्यात् ॥ स्वरप्रतिरूपकान्तावत्— ) **अ आ इ ई उ ऊ ए ऐ ओ औ** ( आ इति वाक्यस्मरणयोः। इतरे सम्बोधने ) **पशु** ( समासार्थे ) **शुकम्** ( शीघ्रा ) **यथाकथा च** ( अनादरे ), **पाट् प्याट् अङ्ग है हे भोस् अये** ( सप्त सम्बोधने) **द्य** ( हिंसा प्रातिलोम्य पादपूरणेषु ), **विषु** ( नानार्थे ), **एकपदे** ( अकस्मादित्यर्थः। कथमेकपदे निरन्तरौन् ), **युत्** ( कुत्सायाम् ) **आतः** ( इतोपि इत्यर्थः )। चादिराकृतिगणः॥

Eng—Easy.

मित—। सुगमा ॥ अधुना स्वरादि-चादिभिन्नानि अव्ययानि कथयन् परिगणनं करोति:—

४४८। तद्धितश्चासर्वविभक्तिः । १।१।३८ ॥

दी—। यस्मात् सर्वा विभक्तिः नोत्पद्यते स तद्धितान्तः अव्ययं स्यात् । परिगणनं कर्त्तव्यम्—तसिलादयः प्राक् पाशपः। शस्प्रभृतयः प्राक् समासान्तेभ्यः । अम् । आम् । कृत्वोऽर्थाः । तसिवती । नानाञौ इति । तेनेह न—पचतिकल्पम् पचतिरूपम् ।

A तद्धितान्त word after which all the विभक्तिs do not arise is called an अव्यय। Enumeration on the point (to remove doubt) is necessary. Affixes beginning with तसिल् and ending with all up to the sutra "द्वित्रोश्च धमुञ्" i.e, all affixes from तसिल् but falling prior to पाशप्; Affixes शस् etc. and ending with "डाच् in the rule "अव्यक्तानुकरणा—" that is before समासान्त affixes; अम् enjoined by the rule "अमु च च्छन्दसि",, and आम् enjoined by "किमेत्तिङ् अव्ययघात् आमु अद्रव्यप्रकर्षे" : The affixes कृत्वसुच्, सुच् and धा : The affixes तसि, वति, [ N. B. The reading here 'वत्' is qustionable. Affixes ना and नाञ् by the rule "विनञ्भ्यां नानाञौ न सह"—words ending with these affixes are अव्यय। Thus the enumeration being complete अव्ययत्व does not arise in पचतिकल्पम् got by the rule 'ईषदसमाप्तौ कल्पब्देश्यदेशीयर:" and in पचतिरूपम् got by the rule "प्रशंसायां रूपप्" ।

मित—। 'असर्व विभक्तिः' इति बहुव्रीहिः। अविद्यमानाः सर्वाः विभक्तयः यस्य इत्यर्थः ॥ तथा च वृत्तिः "यस्मात् सर्वा विभक्तिः नोत्पद्यते' इत्यादि। अतिव्याप्ति अव्याप्ति परिहाराय परिगणनं कृतम् ॥ अन्यत् सुगमम् ॥

४४९। कृन्मेजन्तः। १।१।३९ ॥

दी। कृद् यो मान्त एजन्तश्च तदन्तमव्ययं स्यात्। स्मारं स्मारम् । जीवसे पिबध्यै ( इत्यादि वैदिकप्रयोगाः

A word ending in a कृत् that has म् वा ए the end, is an अव्यय as स्मारं स्मारम्, जीवसे &c.

मित—। कृत् मेजन्तः इति छेदः। म् च एच मेचौ, तौ अन्ते यस्य ॥ अन्यत् सुगमम् ॥

४५० । क्त्वातोसुन्कसुनः १।१।४० ॥

दी। एतदन्तमव्ययं स्यात्। कृत्वा। उदेतोः ; विसृपः (एतौ द्वौ वैदिकप्रयोगौ)।

A word ending with the कृत् affiixs क्त्वा, तोसुन् वा कसुन् is an अव्यय।

मित। सुगमा।

४५१ । अव्ययीभावश्च । १।१।४१ ॥

दी—। अधिहरि।

An अव्ययीभावसमासान्त word is also an अव्यय, as अधिहरि &c.

मित—। सुगमा॥ हरौ इत्यर्थे अधिहरि, विभक्त्यर्थे अव्ययीभावः॥

४५२ । अव्ययात् आप्सुपः । २।४।८२ ।

दी—। अव्ययात् विहितस्य आपः सुपश्च लुक् स्यात्। तत्र शालायाम्। अथ विहितविशेषणात् (अव्ययात् विहितस्य इति व्याख्यानात् इत्यर्थः) नेह—अत्युच्चैसौ (उच्चैः उच्चस्थम् अतिक्रान्तः इति "अत्यादयः क्रान्ताद्यर्थे द्वितीया" इति समासे अत्युच्चैस् शब्दः। अस्य अव्ययत्वं नास्ति। यतः सुप् अत्र न अव्ययात् विहितः किन्तु अत्युच्चैस् शब्दात्। स्वरादिगणे केवलः उच्चैःशब्दः पठितः)। अव्ययसंज्ञायां यद्यपि तदन्तविधिरस्ति तथापि नः गौणे। (अत्र सूत्रे) "आप्ग्रहणं व्यर्थमलिङ्गत्वात्" (वार्त्तिक) [अव्ययानां लिङ्गं नास्ति, अतः सूत्रे आप्ग्रहणं व्यर्थम्। अव्ययानां लिङ्गाभावे प्रमाणमाह— ]

दी—। "सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु। वचनेषु च सर्वेषु यन्नव्येति तदव्ययम्" ॥ इति भाष्योक्ता श्रुतिर्लिङ्गकारकसंख्याभावपरा ॥

[ अथ प्रसङ्गादाह— ]

वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः।
आपञ्चापि हलन्तानां यथा वाचा निशा दिशा ॥
वगाहः—अवगाहः, पिधानम्—अपिधानम् ॥ इत्यव्ययानि ॥

[ तेन "पूर्वापरौ तयोनिधी वगाह्य" इति "भुजङ्गपिहितद्वारं पातालमधितिष्ठति" इत्यादि प्रयोगः सङ्गच्छते ] ॥

Eng.—आप् and सुप् that are to be made after an अव्यय elide. Thus in तत्र शालायाम् आप् (fem. affix) and सुप् after the अव्यय word तत्र elide. As the explanation here is "अव्ययात् विहितस्य" so in अत्युच्चैस् the सुप् that is due after अत्युच्चैस् comes for it is not done after उच्चैस् the अव्यय, but after अत्युच्चैस् which is not अव्यय ; and उच्चैस् the अव्यय is subordinate here ( गौण ) so तदन्तविधि though ordinarily due after अव्यय words cannot come here. Taking of आप् in the sutra is unnecessary, for अव्यय are said as without लिङ्ग (gender). Thus it is said "An अव्यय (indeclinable) is that which does not change and is same in all the genders in all the numbers and in all विभक्ति". Owing to this saying of भाष्यकार, अव्ययs have no gender, case-endings, number &c. Immediately it is to be noted that—according to Prof. Bhaguri the initial अ of the upasarga अव and अपि optionally elides and आप् optionally comes after हलन्त words like वाच्, निश् and दिश् &c. Thus both वगाह and अवगाह, so पिधानम् and अपिधानम् are correct.

Here ends the अव्यय।

सित—ममता— ॥ —

# ॥ अथस्त्रीप्रत्ययाः ॥

**४५३ । स्त्रियाम् । ४।१।३**

दी— । अधिकारोयम् । 'समर्थानाम्' इति यावत् ॥

This is an अधिकार सूत्र and its jurisdiction goes up to the sutra "समर्थानां प्रथमाद्वा" ( ४।१।८२ ) ।

मित— । "समर्थानां प्रथमाद्वा" इति यावत् ये प्रत्ययाः कथिताः ते स्त्रीप्रत्यया एव इति भावः ।

**४५४ । अजाद्यतष्टाप् । ४।१।४ ।**

**दी— । अजादीनाम् अकारान्तस्य च वाच्यं यत् स्त्रीत्वं तत्र द्योत्ये टाप् स्यात् । अजाद्युक्तिः ङीषो ङीपो बाधनाय ।—अजा । अतः—खट्वा ॥**

टाप् is the affix when feminineness is to be spoken of after अजादि words and after अकारान्त words. अज, अश्व &c. that are read in the अजादि list take टाप् being अदन्त, why then does the necessity arises to mention the अजादि list separately ? On this the author says that टाप् after अजादि list comes in the matter of ङीप् or ङीष् to come after these words by the rule "जातेरस्त्रीविषयात् अयोपधात्" and "वयसि प्रथमे" &c. ;—that टाप् bars ङीप and ङीष् due after the words of the अजादि list. Thus fem. of अज is अजा ; the instance of अकारान्त word taking टाप् in feminine is that खट्व becomes खट्वा ।

मित— । 'अजः' अजशब्दः आदिर्येषां ते अजादयः । ते च अत् च इति समाहारे 'अजाद्यत्' ; तस्य 'अजाद्यतः' । "ङ्याप् प्रातिपदिकात्" इतिसूत्रात् 'प्रातिपदिकात्' इति वर्त्तिते सति तच्च षष्ठ्या विपरिनते 'अजाद्यतः प्रातिपदिकात्' इति

लभ्यते। एवं च तदन्तविधिश्च वर्त्तते। "शूद्रा चामत्पूर्वा जातिः" इति वचननैव तदन्तविधिश्च विज्ञायते। ततः आह—'अजादीनाम् अकारान्तस्य च वाच्यं यत् स्त्रीत्वं तत्रद्योत्ये' इत्यादि॥ ननु अजादीनाम् अदन्तत्वादेव टापि सिद्धे किमर्थम् पृथग्वचनम्? अत्रोत्तरमाह—"वयसि प्रथमे" इति ङीष् 'जातेरस्त्रीविषयात्' इति ङीप् च बाधित्वा अजादौ च टावेव यथा स्यात् तदर्थम् अजादीनाम् पृथगुक्तिः। अतः आह—'अजाद्युक्तिः ङीषो ङीपश्च बाधनाय'। सूत्रे "अजाद्यतः" इत्यस्य 'अजादिभ्यः अतः' इत्यादि व्याख्यानं न युक्तम्, अजादीनाम् इति स्त्रीत्वमेव सम्बन्धयति, तदेवाह—

**दी—। अजादिभिः स्त्रीत्वस्य विशेषणात् नेह। पञ्चाजी। "द्विगोः" (सूत्र ४१६) इति ङीप्। अत्र हि समासार्थसमाहारनिष्ठं स्त्रीत्वम्। (अजादीनाह—) अजा। एडका। अश्वा। चटका। मूषिका। एषु जातिलक्षणो ङीष प्राप्तः (स च न भवति); बाला, वत्सा, होढा, मन्दा, विलाता, एषु "वयसि प्रथमे" इति ङीप् प्राप्तः।**

As the word 'अजादि' qualifies स्त्रीत्व, so in the case of पञ्चाजी we get ङीप् and not टाप् (for here स्त्रीत्व is not of अजादि word but of समाहार in the समास—पञ्चानाम् अजानां समाहारः)। In पञ्चाजी, ङीप् comes by the rule 'द्विगोः' ( see infra. ). Here स्त्रीत्व is dependent on the समाहार of समासार्थ, so ङीप् comes. Now the अजादि list is being enumerated—अजा, एडका अश्वा चटका मूषिका,—of these words ङीष् by the rule "जातेरस्त्रीविषयात्" is due and is barred by टाप्; so बाला, वत्सा होढा, मन्दा विलाता of अजादि list takes टाप् barring ङीष् by the rule "वयसि प्रथमे"।

मित—। वृत्तौ व्याख्यानालम्बनेन अजादिभिः स्त्रीत्वस्य विशेषणात्, पञ्चानाम् अजानाम् समाहारः इति समाहारद्विगौ "द्विगोः" इति ङीपि पञ्चाजीशब्दे स्त्रीत्वं न अजादीनाम् विवक्षितं किन्तु समासार्थनिष्ठसमाहारस्य अतः अत टाप् न। अजादीनाम् मध्ये अतः इति व्याख्याने तु पञ्चाजीशब्दे टावेव स्यात्। अतः एतद्व्याख्यानमयुक्तम्।

अजादीनाह। एषां मध्ये अजा एडकादिपञ्चशब्दानां जातिलक्षणो ङीष् टापा वाध्यते; एवं वाला वत्सादिशब्दे "वयसि प्रथमे" इति प्राप्तः ङीष्टापा वाध्यते ॥

**दी—। "सम्भस्त्राजिनशणपिण्डेभ्यः फलात्" ( वार्त्तिक )। सम्फला। भस्त्रफला। ( अत्र ) "ङ्यापोः—" इति ह्रस्वः ॥ "सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात्" ( वार्त्तिक )—सत्पुष्पा। प्राक् पुष्पा। प्रत्यक् पुष्पा ॥ "शूद्रा चामहत्पूर्वा जातिः" ( वार्त्तिक ); पुंयोगे तु शूद्री; अमहत्पूर्वा किम्?—महाशूद्री ॥ ( अधुना अपि अजादीनेवाह— ) क्रुञ्चा, उष्णिहा, देवविशा। ज्येष्ठा। कनिष्ठा। मध्यमेति पुंयोगेपि। कोकिला ॥ "मूलान्नञः"— अमूला ॥**

मित—। "पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च" ( ४।१।६४ ) इति सूत्रभाष्ये पठितं वार्त्तिकं यथा—"सम्भस्त्राजिन—"। अत्रापि ङीषं वाधित्वा टावेव भवति इति तदर्थमेव इदमत्र अजादिगणव्याख्याने एव पठितम्। सम्भस्त्रा अजिन शण पिण्ड—एतेभ्यः परः यः फलशब्दः तस्मादपि टावेव इति वार्त्तिकार्थः। सम्बद्धानि फलानि यस्याः इति सम्फला। भस्त्रेवफलानि यस्याः इति भस्त्रफला। भस्त्राशब्दः नित्यस्त्रीलिङ्गः न तु भाषितपुंस्कः तत्कथमस्य पुंवत्त्वम्? अत्रोत्तरमाह,—अत्र "ङ्यापोसंज्ञाच्छन्दसोर्बहुलम्" इति ह्रस्वः ॥ "सदच्काण्ड—" इति वार्त्तिकमपि, एतेभ्यः परः यः पुष्पशब्दः तस्मात् "पाककर्ण—" इति सूत्रप्राप्तं ङीषं वाधित्वा टापं प्रवर्त्तयितुम् अत्र पठ्यते ॥ महाशूद्री इति। महती च सा शूद्रा च इति कर्मधारये पुंवत्त्वे आत्त्वे च महाशूद्री इति। अत्र महत्पूर्वत्वात् न टाप् ॥ क्रुञ्च् इत्यस्य स्त्रियाम्=क्रुञ्चा, एवम् उष्णिह्=उष्णिहा—अत्र अदन्तत्वाभावात् अप्राप्तं टापम् विधीयते। अत्र वष्टिभागुरिरिति वार्त्तिकम् अपि स्मर्त्तव्यम् तेन हलन्तानां विकल्पेन टाप विधीयते ॥ ज्येष्ठादिशब्दानाम् पुंयोगलक्षणं ङीषं वाधित्वा टावर्थमेव अत्र पाठः ॥ "पाककर्ण—" इति सूत्रप्राप्तं ङीषं वाधितुं वार्त्तिकं यथा—"मूलान्नञः" ॥ दंष्ट्राशब्दोपि अजादौ पठ्यते। अजादिराकृतिगणः ॥

**दी—। "ऋन्नेभ्यो ङीप्" ( सूत्रं ३०३—प्रागुक्तम् व्याख्यातं च )। कर्त्री। दण्डिनी।**

ऋदन्त and नान्त words take ङीप् in the feminine.

मित—। सुगमा।

४५५। उगितश्च। ४।१।६।

दी—। उगिदन्तात् प्रातिपदिकात् स्त्रियां ङीप् स्यात्। भवन्ती। पचन्ती। "शप्श्यनोः—" इति नुम् (? नित्यम्)॥ "उगिदचाम्—" इति सूत्रे अज्ग्रहणेन "धातोश्चेदुगित्कार्य्यं तर्हि अञ्चतेरेव" इति नियम्यते। तेन इह न—उखास्रत्। क्विप्। "अनिदिताम्—" इति नलोपः। पर्णध्वत्॥ अञ्चतेस्तु स्यादेव—प्राची; प्रतीची॥

After a crude word ending in उगित् (affix or otherwise) takes ङीप in the feminine. Thus भू + शतृ + ङीप् = भवन्ती; so also पचन्ती etc. In these cases नुम् is compulsory when ङीप् follows, by the rule "शप्श्यनोर्नित्यम्" (ante.) In the sutra "उगिदचाम्—" the taking of अच् i.e., the root अञ्चु implies this injunction that—if उगित्कार्य्यं is to be recognised of roots then अञ्चु only will be taken into consideration. Thus in उखायाः स्रंसते इति उखा + स्रंसु + क्विप् = उखास्रत् we are not to take स्रंसु as उगित् to attach fem. ङीप् after it. Similarly in पर्णात् ध्वंसते इति पर्ण + ध्वंसु + क्विप् = पर्णध्वत्, the root is not to be regarded as उगित् for attaching fem. ङीप् here by this rule. In उखास्रत् and पर्णध्वत् the न elides when क्विप् follows by the rule "अनिदिताम् हलः—" (ante.) But as the root अञ्चु is regarded as उगित्, so प्राच् and प्रतीच् etc. take ङीप् in the fem. (उगित्त्वात् ङीप्) yielding प्राची and प्रतीची।

मित—। उक् इति प्रत्याहारः। 'उक इत् यस्य' तस्मात्। "अजाद्यतः—" इति सूत्रवत् अत्रापि "प्रातिपदिकात्" इति वर्त्तते। उकितः प्रातिपदिकात् इत्यर्थः। अत्रापि तदन्तविधिरस्ति; समासप्रत्ययविधौ तदन्तविधेः प्रतिषेधेऽपि उगित्ग्रहणे तदन्त-

विधिरस्ति, तथा च वार्त्तिकम्—"उगिद्ग्रहणवर्जम्" इति। ततः आह—'उगिदन्तात् प्रातिपदिकात्' इत्यादि॥ भवन्ती पचन्ती इति शप्विकरणस्य ङीपि "शप्श्यनोर्नित्यम्" इति नित्यं नुमि सति सिध्यति॥ धातुविषये अञ्चतेरेव उगित्त्वं ग्राह्यम्, ततः 'उखास्रत्' इत्यादि स्रंसुधातोः क्विपि सति उगित्लक्षणो ङीप् न स्यात्। किन्तु प्राची प्रतीची इत्यादि अञ्चतेः सिद्धे सति ङीप् तु भवत्येव॥

४५६। वनो र च। ४।१।७॥

दी—। वन्नन्तात् तदन्ताच्च प्रातिपदिकात् स्त्रियां ङीप् स्यात्। रश्च अन्तादेशः। 'वन्' इति ङ्वनिप्-क्वनिप्-वनिपां सामान्यग्रहणम्। "प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य च ग्रहणम्" (परिभाषा)। तेन प्रातिपदिकविशेषणात् तदन्तान्तमपि लभ्यते। सुत्वानमतिक्रान्ता अतिसुत्वरी; अतिधीवरी; शर्वरी॥ 'वनो न हशः "इति वक्तव्यम्" (वार्त्तिक):— हशन्तात् धातोः विहितो यो वन् तदन्तात् तदन्तान्ताच्च प्रातिपदिकात् न ङीप् रश्च न इत्यर्थः। 'ओणृ अपनयने'। वनिप्" "विड्वनोः—" इत्यात्त्वम्। अवावा ब्राह्मणी। राजयुध्वा॥ "बहुव्रीहौ वा" (वार्त्तिक):—बहुधीवरी। बहुधीवा। पक्षे (ङीप्—रत्वाभावपक्षे) डाब्वक्ष्यते॥

After a प्रातिपदिक ending in वन् or after a word ending in a वन्नन्त word ङीप् comes in the fem. and र comes at the final of these. By 'वन्' the affixes ङ्वनिप्, क्वनिप् and वनिप् are taken. "By an affix" the word after which it is enjoined and the affix itself both these are taken into account. So 'वन' qualifying a प्रातिपदिक gives वन्नन्त and वन्नन्तान्त words also. Thus अतिसुत्वरी and अतिधीवरी take ङीप् and रादेश for these are वन्नन्तान्त word, सु+ङ्वनिप्=सुत्वन् and धा +क्वनिप्=धीवन्। शर्वरी is also got from the वन्नन्त word शर्वन् (शॄ+वनिप्)॥ Now the Varttika "वनो न हशः" directs that वन्नन्त and वन्न-

सान्त words are not to take ङीप् and रादेश in fem. if these are got from a root ending in a हश् latter (i.e. a letter covered by हश् प्रत्याहार)। Thus ओण्+वनिप्=ओ आ (आ by the rule "विड्वनोः—") वन्=अवावन्। Here ङीप and र in fem. do not come for the root ओण् ends in a हश् letter. Similarly राजयुध्वा is got in fem. for the root युध् ends in a हश् letter. Lastly the Varttika "बहुव्रीहौवा' directs that the original rule "वनो र च" is optional in the case of बहुव्रीहि समास। Thus बहुधीवरी and बहुधीवा। 'बहुधीवा' while not taking ङीप् and र in the fem., then it optionally takes ङीप् after it by the rule "डाबुभाभ्याम्—" (rule No. 461 below).

मित—। 'वनः र च' इत्यत्रसूत्रे 'र' इति लुप्तप्रथमाकम्। 'वनः' इति पूर्ववत् 'प्रातिपदिकात्' इत्यस्य विशेषणम्। तेन तदन्तविधिः लभ्यते। एवं "प्रत्ययग्रहणे—" इति परिभाषया प्रकृतिप्रत्ययसमुदायस्य तन्मध्यवर्त्तिनश्च ग्रहणात् 'वन्' ग्रहणेन वन्नन्तं वन्नन्तान्तं च लभ्यते। तदाह—'वन्नन्तात् तदन्तात् च प्रातिपदिकात्' इत्यादि॥ "सूयजोर्ड्वनिप" इति सु+ड्वनिप्=सुत्वन्; तथा धा+क्वनिप्=धीवन्; शॄ+वनिप्=शर्वन्। अन्यत् सुगमम्॥ "वनो न हशः" इति वार्त्तिकेन च सूत्रोपात्तौ ङीप् रादेशौ हशन्तधातोः यो वन् तदन्तात् न विधीयेते; 'हश्' इति प्रत्याहारः॥ ओण्+वनिप्=ओ आ+वन्=अवावन्। अत्र धातोः हशन्तत्वात् स्त्रियां ङीप् रादेशश्च न। एवं राजयुध्वा इत्यत्रापि बोध्यम्॥ "बहुव्रीहौ वा" इति वार्त्तिकेन च "वनो र च" इति सूत्रगतः विधिः बहुव्रीहिसमासे विकल्प्यते। "अनो बहुव्रीहेः" इति सूत्रगतस्य निषेधस्यायमपवादः॥ बहवः धीवानः यवसः इति बहुव्रीहिः। ङीब्रादेशाभावापक्षे तु "डाबुभाभ्याम्—" इति वक्ष्यमाणसूत्रेण डाप् वा स्यात्॥

४५७। पादोऽन्यतरस्याम्। ४।१।८॥

दी—। पाच्छब्दः कृतसमासान्तः तदन्तात् प्रातिपदिकात् ङीब्वा स्यात्। द्विपदी—द्विपात्।

After a प्रातिपदिक ending in the word पाद् that is formed as समासान्त (with अकारलोप), ङीप् optionally comes in the feminine. Thus द्वौ पादौ यस्य इति बहुव्रीहौ "संख्यासुपूर्वस्य" इति पादशब्दस्य अकारलोपे 'पाद्' इति जायते। And now when ङीप् come after it, it is a 'भ' so पाद् becomes—
पद् and we get द्विपदी ( ङीपि भत्वात् पादः पत् इति )। द्विपात्।

मित—। सुगमा ॥

## ४५८। टाबृचि। ४।१।९ ॥

**दी—। ऋचि वाच्यायाम् पादन्तात् टाप् स्यात्। द्विपदा ऋक्। एकपदा ॥**
( पूर्वसूत्रात् 'पादः' वर्त्तते ॥ उभयोदाहरणे टापि भत्वात् पादः पत् )।

When ऋक् is signified orqualified then टाप् comes after a प्रातिपदिक ending in the word 'पाद्' (i.e, कृतसमासान्त पाद्)। Hence we get द्विपदा or एकपदा ऋक् ॥

मित—। सुगमा— ॥

**दी—। "न षट्स्वस्रादिभ्यः"।—पञ्च। चतस्रः॥ 'पञ्च' इत्यत्र नलोपे कृतेपि 'ष्णान्ताषट्' इति षट्संज्ञां प्रति 'नलोपः सुप्स्वर—" ( सूत्र ३५३ ) इति नलोपस्य असिद्धत्वात् "न षट्स्वस्रादिभ्यः" इति न टाप्।**

षट्संज्ञक words and words like स्वसृ &c as enumerated before do not take feminine affixes ङीप् or टाप्। Why do you say टाप् also here ?—For in पञ्च, नलोप is done (and it in अदन्त) but पञ्चन् being a षट्संज्ञक word by the rule "ष्णान्ता षट्" नलोप is असिद्ध here by the rule "नलोपः सुप्स्वर—". (ante), so पञ्च being अदन्त, टाप् (i.e, अदन्तलक्षणटाप्) is due after it. And this टाप् is being prohibited by the rule "नषट्—" so both ङीप् and टाप् अनुवृत्ति in this rule are necessary.

मित—। इदं बालमनोरमागतमत्र स्मर्त्तव्यम्—" ननु "नषट्स्वस्रादिभ्यः" इति ङीबेव निषिध्यताम्, किं टावनुवृत्त्या। नान्तत्वात् टापः प्रसक्तेरभावेन तन्निषेधवैयर्थ्यात् इति ?··· नान्तलक्षणङीपि प्रतिषिद्धे सति जश्शसोर्लुकि नलोपे कृते अदन्तत्वात् प्राप्तस्य टापः प्रतिषेधार्थमिह टावनुवृत्ति—रावश्यकी इति यावत्"। सर्वमेतत् अभिप्रेत्य दीक्षितो वदति—'पञ्च' इत्यत्र नलोपे कृते' इत्यादि॥

४५६। मनः। ४।१।११॥

**दी—। मन्नन्तात् न ङीप्। सीमा—सीमानौ॥**

Eng—Easy.

मित—। मनः इत्यत्र पूर्ववत् तदन्तविधिः बोध्यः॥ "नषट्—" इति पूर्वसूत्रात् 'न' इति वर्त्तते। 'ऋन्नेभ्यः' इति अतः ङीप् अस्ति॥ ततः आह—"मन्नन्तात् न ङीप्" इति॥ एवं सीमन्शब्दे नान्तलक्षणे ङीपि निषिद्धे राजवत् रूपम्॥

४६०। अनो बहुव्रीहेः। ४।१।१२॥

**दी—। अन्नन्तात् बहुव्रीहेः न ङीप्। बहुयज्वा—बहुयज्वानौ।**

Eng.—Easy.

मित—। 'अनः' इति अनेन पूर्ववत् तदन्तविधिः बोध्यः। अनुवृत्तिस्तु पूर्वसूत्रवदेव। तदाह—'अन्नन्तात् बहुव्रीहेः' इत्यादि॥ बहुव्रीहौ ङीपि निषिद्धे, बहुयज्वन् इति राजवत् रूपम्। ततः बहुयज्वा बहुयज्वानौ इत्यादि॥

४६१। डाबुभाभ्यामन्यतरस्याम्। ४।१।१३॥

**दी—। सूत्रद्वयोपात्ताभ्यां डाब्वा स्यात्। सीमा, सीमे—सीमानौ। दामा, दामे—दामानौ। 'न' पुंसि दाम" इत्यमरः॥ बहुयज्वा, बहुयज्वे—बहुयज्वानौ।**

डाप् optionally comes after words as are got by the previous two rules e.g. "मनः" and "अनो बहुव्रीहेः"। Thus सीमा, सीमे—सीमानौ &c. Similarly दामा, दामे—दामानौ &c. The word दामन् is

not used in the masculine, But in the neuter and fem':—so says Amara, The base वहुयज्वन् hence takes डाप् in the fem. optionally and gives वहुयज्वा—यवहुयज्वे &c. ( like लता or रमा ) ।

मित—। "मनः" इति "अनो वहुव्रीहेः" इति च सूत्रद्वयेनेष्टात् मन्नन्तात् अन्नन्तात् वहुव्रीहेश्च विकल्पेन डाब् भवति इति सूत्रार्थः ॥ अत्र सूत्रे "अन्यतरस्याम्" ग्रहणं निरर्थकम् । यतः "मनः" इत्यादिना ङीपनिषेधे पुनः "डाबुभभ्याम्" इति डाव्विधाने एव विकल्पसिद्धेः, "अनतरस्याम्" इति वचनम् न युक्तम् भाति किन्तु स्पष्टार्थम् इति केचित् । भाष्यकारस्तु विकल्पार्थम् "अन्यतरस्याम्" इति न व्याचख्यौ, किन्तु "अन्यतरस्याम्" इत्यस्य योगविभागमाश्रित्य "वहुव्रीहौ वा" इति "वनोरच" इति सूत्रस्य वार्त्तिकम्, प्रत्याख्यातवान् ॥ अन्यत् सुगमम् ॥

## ४६२ । अन उपधालोपिनोऽन्यतरस्याम् । ४।१।२८ ॥

**दी—। अन्नन्ताद्वहुब्रीहेरुपधालोपिनो वा ङीप् स्यात् । पक्षे डाप्—ङीप् निषेधौ । वहुराज्ञी—वहुराजा । वहुराज्ञ्यौ—वहुराजे—व,राजानौ ।**

A वहुव्रीहि ending in अन् which अन् elides its उपधा when a "भ", optionally takes ङीप् in the fem. optionally here डाप् ( by the previous rule ) and ङीप् निषेध by the rule "अनो वहुव्रीहेः" also operate. Thus in the वहुव्रीहि—वहुराजन्, the word ends in अन् which is उपधालोपिन् so the rule applying we get वहुराज्ञी ( with ङीप् ) वहुराजा ( with डाव् ) and वहुराजन् ( with ङीप् निषेध ) ।

मित—। "वहुव्रीहेरूधसो ङीष्" इति सूत्रात् "वहुव्रीहेः" वर्त्तते ; "संख्याव्ययादेः ङीप्" इति सूत्राच्च ङीप् अस्ति । 'प्रातिपदिकात्' च वर्त्तते एव । फलित—माह—"अन्नन्तात् उपधालोपिनः वहुव्रीहेः इत्यादि ॥ अत्र अन्यतरस्याम् ग्रहणेन पक्षे डाव, ङीप्निषेधश्च भवति । अतः त्रीणि रूपानि यथा—वहुराज्ञी, वहुराजा, वहुराजन् इति ॥

१६३। प्रत्ययस्थात् कात्पूर्वस्यात इदाप्युसुपः। ७।३।४३॥

दी—। प्रत्ययस्थात् ककारात् पूर्वस्याकारस्य इकारः स्यात् आपि परे स आप्सुपः परो न चेत्। सर्विका। कारिका। अतः किम्?—नौका। प्रत्ययस्थात् किम्?—शक्नोतीति शका। असुपः किम्?—बहुपरिव्राजका नगरी। कात् किम्?—नन्दना। पूर्वस्य किम्?—परस्य मा भूत्, कटुका। अतः इति तपरः किम्?—राका। आपि किम्?—कारकः॥ "मामकनरकयोरुपसंख्यानम्" (वार्त्तिक)—मामिका। नरान् कायतीति नरिका॥ "त्यक्त्यपोश्च" (वार्त्तिक)—दाक्षिणात्यिका। इहत्यिका॥

The अकार which is just prior to a ककार which ककार is of a प्रत्यय, becomes इकार when आप् (the fem. affix) follows this आप् being not after a सुप्। Thus सर्व + अकच् = सर्वका = सर्विका in the fem. by this rule; so also कृ+ण्वुल् (अक) = कारक = कारिका in the fem. by this rule. Why do we say 'अतः' in the rule? Witness नौका (नौ+स्वार्थे क)। Here औकार is ककारात् पूर्व and not अकार, so इ does not come here when टाप् follows. Why do we say प्रत्ययस्थात् in the sutra? Witness शक्नोतीति शका (शक+पचाद्यच्+टाप्); here का is not प्रत्ययस्थ but a धात्ववयव, so इत्व does not come here; why so we say 'असुपः' in the sutra? Witness the example बहवः परिव्राजका यस्याम् इति बहुपरिव्राजका नगरी, here when टाप् follows the अकार before ककार does not take इकार, for here आप् comes after सुप् which though elided is regarded as existent by प्रत्ययलक्षण। Why do we say कात् in the sutra?—Witness the example नन्दना, here इकार cannot come in place of अकार, for it is not before ककार। Why do we say 'पूर्वस्य' in the sutra?—This is because the पूर्व अकार from क is to take इकार and not पर अकार। Thus in

कटुका the अकार after ककार does not take इकार when टाप् follows. Why do we say अतः in the rule with "क" after it? Witness राका (रा धातु + क औणादि), here आकार is ककारात्पूर्वं and not अकार, so इकार does not come for आकार here when टाप् follows. Why do we say आपि in the sutra? Witness कारक, ककारात्पूर्वं अकार does not take इकार for here आप् does not come in. The Varttika "मामक—" directs इकार for अकार prior to ककार in मामक and नरक when आप् follows yielding मामिका & नरिका। In both क is not प्रत्ययस्थ so the present rule not provinding इत्व for अकार here in the fem. the Varttika provides that; lastly त्यगन्त and त्यवन्त words ending in "क" (i.e. प्रत्ययककार) are to take इकार for their अकार, befor ककार। This दाक्षिणात्यिका &c.

मित—। 'प्रत्ययस्थात् कात्' इत्यत्र कात् इति ककारात् अकारः उच्चारणार्थः। सूत्रे 'असुपः' इति व्याख्यायते—"स आप् सुपः परो न चेत्" इति॥ सूत्रे अतः इति किमर्थम् उक्तम्? 'नौका' इत्यत्र ककारात् पूर्वस्य औकारस्य इत्वं यथा न स्यात् एतदर्थम्॥ 'प्रत्ययस्थात्' इति वचनात् 'शका' इत्यत्र ककारस्य धात्ववयवत्वात् प्रत्ययस्थत्वाभावात् पूर्वस्य अकारस्य इत्वं न प्राप्नोति॥ 'असुपः' इति सूत्रे उक्तत्वात्, बहवः परिव्राजकाः यस्याम् इति समासे बहुपरिव्राजका नगरी इत्यत्र आपः प्रत्ययलक्षणेन सुपः परत्वात् ककारात्पूर्वस्य अकारस्य इत्वं न स्यात्॥ 'कात्' इति वचनम् असति ककारे यथा न स्यात् तदर्थम्, यथा नन्दना इति॥ सूत्रे 'अतः' इति तपरकरणात् राका इत्यत्र पूर्वस्य आकारस्य इत्वं न स्यात्॥ 'आपि' किम्?—कारकः इत्यत्र आवाभावात् अकारस्य इत्वं यथा न स्यात् तदर्थम्॥ मामक+टाप्, नरक (नर+कै+क) टाप् इत्यत्र ककारस्य प्रत्ययस्थत्वाभावात् आपि सति ककारात् पूर्वस्य अकारस्य इकारे अप्राप्ते तद्विधानार्थं वार्त्तिकमाह—"मामकनरक—" इति॥ "उदीचामातःस्थाने" इति वक्ष्यमाणसूत्रेण विकल्पे प्राप्ते "त्यकत्यपोश्च" इति वार्त्तिकम् तदपवादार्थम्। "दक्षिणापश्चात् पुरसस्त्यक्" इति त्यक्, ततः स्वार्थिक-कः; अधुना टापि सति

दाक्षिणात्यिका। एवं इह+त्यप् ("अव्ययात्त्यप्") + क = इहत्यक। ततः टापि इहत्यिका। त्यगन्तत्यवन्तयोश्च ककारात् पूर्वस्य अकारस्य नित्यम् इकारार्थम् वार्त्तिकम् ॥

४६४। न यासयोः। ७।३।४५।

दी—। यत्तदोरस्य इन्न स्यात्। यका। सका। यकाम्। तकाम्॥ "त्यकनश्च" निषेधः" (वा) (इत्वं स्त्रियां निषिध्यते)—उपत्यका, अधित्यका॥ "आशिषिवुनश्च न" (इत्वं न इत्यर्थः) [वा]—जीवका, भवका॥ "उत्तरपदलोपे न" (इत्वं न इति शेषः):—देवदत्तिका (इति उत्तरपदलोपाभावे)—देवका॥ "क्षिपकादीनांच न" (। वा)—क्षिपका, ध्रुवका, कन्यका, चटका॥ "तारका ज्योतिषि" (वा); अन्यत्र तारिका॥ "वर्णका तान्तवे" (वा); अन्यत्र वर्णिका॥ "वर्त्तका शकुनौ प्राचाम्" (वा); उदीचां तु वर्त्तिका॥ "अष्टका पितृदेवत्ये" (वा); अष्टिका अन्या॥ "सूतका पुत्रका वृन्दारकाणां वेति वक्तव्यम्" (वा) इह वा अ इति छेदः। (पुत्रिकशब्दे कात्पूर्वस्य अकारादेशो वा इत्यर्थः। तेन पुत्रिकाशब्दे ङीनः इवर्णस्य पक्षे अकारः। अन्यत्र (सूतकादिशब्दे) इत्वबाधानार्थम् अकारस्यैव पक्षे अकारः। सूतिका—सूतका इत्यादि॥

The अकार prior to ककार in the case of bases यद् and तद् does not take इकार when आप् follows. Thus we get यका, यकाम्, सका, सकाम् etc In the case of त्यकन् प्रत्ययान्त words this इत्व when टाप् (आप्) follows is barred, so we get उपत्यका &c. Similarly the affix वुन् (अक) does not change its prior अकार to इकार when this वुन् is in the sense of आशिष्। Then we get जीवका, and not जीविका and so on. When an उत्तरपद of a word elides then its prior अकार does not change to इकार; so we get देवका when the उत्तरपद—'दत्त' has elided, so our author gives the other example देवदत्तिका as well here. Words like क्षिपका, कन्यका,

चटका etc arewithout इत्व in fem. The form is तारका in the sense of ज्योतिष् (luminary or eye-pupil), otherwise the form is तारिका (with इत्व in the fem.) Similarly we get वर्णका without इत्व in the sense of 'pertaining to तन्तु' । Otherwise the form is वर्णिका with इत्व in the fem. So acc. to early scholars वर्त्तका is formed without इत्व in the fem. to denote शकुनि (bird). Acc. to later scholars the form is वर्त्तिका in the very sense. Similarly अष्टका is formed in the fem. in the sense of some rites addressed to the manes &c. otherwise the form is अष्टिका (as referring to पाणिनीयाष्टाध्यायी) । In the Varttika "सूतकापुत्रिका" &c. the splitting is वा अ । This अकार is optionally ordered before 'क' । So (owing to this अत्वविधान) in the word पुत्रिका, अकार is optional for ईकार (got from ङीन् by the rule "शार्ङ्गरवाद्यञोङीन्"—see below rule 527). But in the case of other two words mentioned in the above Varttika अकार is made for अकार to bar इकार due in these. So we get सूतिका—सूतका, पुत्रिका—पुत्रका &c.

मित—। 'या' इत्येतस्य "उदीचामातः स्थाने—" इति विकल्पे प्राप्ते निषेधोयमिति न्यासे उक्तम् । तदयुक्तम्—यतः, 'आतः स्थाने' इत्यंशस्य अत्र अभावो विद्यते, अननुवर्त्तनात् । 'या सा' इति यत्तदोरुपलक्षणम्, इत्याशयेनाह—"यत्तदोरस्य इत्र स्यात्" इति ॥ आशिषि इति :—"आशिषि यो वुन् तस्य योऽयमकारादेशः तदकारस्य "प्रत्ययस्थात्—" इति इत्वं न इति वार्त्तिकार्थः । एवं इत्वनिषेधः अन्यत्रापि वार्त्तिके विज्ञेयः । जीवधातोः "आशिषि च" इति वुन् ततः जीवका इति एवं भवका (भूधातोः आशिषि वुनि गुणावादेशौ) ॥ देवदत्तशब्दे उत्तरपदस्य दत्तशब्दस्य "अनजादौ च विभाषा लोपो वक्तव्यः" इति लोपः । अतः देवका इत्यत्र इत्वं न । दत्तशब्दलोपं दर्शयितुमेव, देवदत्तिका इति उदाहरणमुपन्यस्तम् ॥ क्षिपेरिगुपधलक्षणः कः । ततः अज्ञाते कन्—क्षिपका इति । चटभेदने पचाद्यच्, ततः क चटका इति ॥ ज्योतिर्-

चवं, नेत्रकनीनिका च तारका ॥ वर्णका इति प्रावारविशेषः ततश्च तान्तव एव। तन्तुनो विकारः तान्तवः—',ओरञ्' इति अञ्। वर्णिका इति तु ग्रन्थविशेषस्य व्याख्या, स्त्रीवकर्त्री च ॥ वर्त्तका इति शकुनौ गम्ये भवति इति इत्वं न। अन्यार्थे तु नित्यमित्वम् ॥ पितरश्च ताः देवताश्च पितृदेवताः तदर्थं कर्म पितृदैवत्यम् "देवतान्तात् तादर्थ्ये यत्" इति यत्। अश्नन्ति ब्राह्मणा यस्याम् सा अष्टका। एवं पित्र्यादि कर्मणि अष्टका इति भवति। अन्यत्र पाणिन्यष्टधाय्यां तु अष्टौ परिमाणमस्याः इति "संख्यायाः अतिशदन्तयाः" कन्। ततः स्त्रियामष्टिका इति ॥ सूतकादि वार्त्तिके पुत्रिका इति इकारमध्यः पाठः, पुत्रशब्दस्य शाङ्गरवादि ङीनन्तत्वात् इति भावः। अतः आह—"इह वा अ इति छेदः" इत्यादि ॥ अन्यत्सुगमम् ॥

## ४६५। उदीचामातः स्थाने यकपूर्वायाः। ७।३।४६।

**दी—। यकपूर्वस्य स्त्रीप्रत्ययाकारस्य स्थाने योऽकारस्तस्य कात्पूर्वस्य इद्वा स्यात् आपि परे। "केणः" ( सूत्र ८३४ ) इति ह्रस्वः। आर्य्यका—आर्य्यिका। चटकका—चटकिका। आतः किम्—साङ्काश्ये भव साङ्काश्यिका। 'यक—' इति किम्?—अश्विका। 'स्त्रीप्रत्यय—' इति किम्?—शुभं यातीति शुभंयाः। अज्ञाता शुभंयाः शुभंयिका॥ "धात्वन्तयकोस्तु नित्यम्" ( वा )—सुनयिका; सुपाकिका।**

The अकार which comes in place of the fem. affix आकार just preceded by य or क, optionally takes इकार in its stead being anterior to ककार। Thus आर्या एव with स्वार्थिकक gives आर्य्यका and आर्य्यिका। Here आर्य्या+क first yields आर्य्यक with आकार being ह्रस्व by the rule "के इणः" (rule 834 under बहुव्रीहि समास)। Then when the fem. affix comes इत्व is optional yielding both अर्य्यका and आर्य्यिका। Similarly चटकका and चटकिका। Why do we say आतः in the rule? Witness साङ्काश्यिका with नित्य इत्व, for here अकार after यकार is not in place of आकार of a स्त्रीप्रत्यय॥ Why do we say यक-

पूर्वयाः in the sutra ?—Witness अम्बिका with नित्य इत्व, for here though अकार is in place of आकार still it is not preceded by either य or क। Why do we say स्त्रीप्रत्ययाकारस्य ? Witness शुभंयिका with नित्य इत्व, for here आकार after य is धात्ववयव and not of स्त्रीप्रत्यय। And on this the Varttika runs "the अकार on य or क which is a धात्वन्तावयव takes इत्व always when fem. affix आप् follows." Thus we get सुनयिका and सुपाकिका where य and क are अवयव of the roots नी and पच; so इत्व is नित्य here by the rule "प्रत्ययस्थात् कात्—" (ante.)

टि—। यश्च कश्च इति द्वन्द्वः। तौ पूर्वौ यस्याः इति 'यकपूर्वायाः'। एतत् 'आतः' इत्यस्य विशेषणम्। "प्रत्ययस्थात् कात्—" इति सूत्रमत्रानुवर्त्तते। ततः आह—"यकपूर्वस्य स्त्रीप्रत्ययाकारस्य स्थाने" इत्यादि। 'स्थाने' इत्येतत् "षष्ठीस्थाने-योगा" इत्यनेनैव लब्धं, ततो व्यर्थमेव सूत्रे स्थाने ग्रहणेन—इति चेत्। मैवमस्तु यतः अनुवादे परिभाषाणाम् उपस्थितिः न स्यात् इति ज्ञेयम्। स्थानेग्रहणम् अत्र एतत् ज्ञापयति॥ आर्य्या एव इति स्वार्थिके कप्रत्यये ततः पूर्वस्य आकारस्य 'केऽणः' इति सूत्रेणह्रस्वे सति पुनः टापि सति—आर्य्यिका-आर्य्यका इति अनेन सूत्रेण विकल्पं न सिध्यति, एवमन्यत्रापि बोध्यम्॥ सूत्रे 'आतः' इति किमर्थमुच्यते ? साङ्काश्यं नाम नगरम्; तत्र भवा इति 'साङ्काश्यिका'। अत्र यकारादकारस्य आकारस्थानिकत्वा-भावात् इत्वविकल्पो यथा न स्यात् तदर्थम् 'आतः' इति सूत्रे उच्यते॥ सूत्रे यकपूर्वायाः कथमुक्तम् ?—अम्बिका इत्यत्र अकारस्य आकारस्थानिकत्वेपि तस्य यकपूर्वत्वाभावात् नित्यम् इत्वं न तु विकल्पः॥ वृत्तौ स्त्रीप्रत्ययाकारस्य इति किमर्थमुक्तम्। शुभंयिका इत्यादि धात्ववयवाकारस्य अत्वे सति इत्वविकल्पो मा भूत् इत्येतदर्थम्॥ तथा एतत् पश्चीयमेव वार्त्तिकमाह—"धात्वन्तयकोस्तु नित्यम्" इत्वमिति भावः। नी धातोः पच-धाचि नय इति। सु नयः यस्या इति सुनया ततः स्वार्थे कः, 'केणः' इतिह्रस्वः, ततः टापि सति सुनयिका इति; अत्र उक्तवार्त्तिकेन इत्वं नित्यम्। एवं सु शोभनः पाकः यस्या इत्यादौ सुपाका शब्देपि उक्तप्रक्रियया सुपाकिका इति भवति उभयत्र यकारक-कारयोः धात्ववयवत्वात् आकारस्थानिकस्य अकारस्य इत्वविकल्पो न स्यात् इति॥

४६६। भस्त्रैषाजाज्ञाद्वास्वा नञ्पूर्वाणामपि। ७।३।४७।

दी—। स्वेत्यन्तं लुप्तषष्ठीकं पदम्। एषामत इद्वा स्यात्। तदन्तविधिनैव सिद्धे नञ्पूर्वाणामपीति स्पष्टार्थम्। भस्त्राग्रहणमुपसर्जनार्थम्। अन्यस्य तूत्तरसूत्रेण सिद्धम्। एषा द्वा एतयोस्तु सपूर्वयोर्नेत्त्वम्। अन्तर्वर्तिनीं विभक्तिमाश्रित्य 'असुपः' इति प्रतिषेधात्। अनेषका; परमैषका; अद्वके; परमद्वके। स्वग्रहणं सञ्ज्ञोपसर्जनार्थम्? इह हि 'आतः स्थाने' इत्यनुवृत्तं स्वशब्दस्यातो विशेषणम्। न तु द्वैषयोस्सम्भवात्। नाप्यन्येषाम् अव्यभिचारात्। स्वशब्दस्तु अनुपसर्जनमात्मीयवाची अकजर्हः। अर्थान्तरे तु न स्त्री। सञ्ज्ञोपसर्जनीभूतस्तु कप्रत्ययान्तत्वात् भवत्युदाहरणम्। एवं चात्मीयायां स्विका; परमस्विकेति नित्यमेवेत्त्वम्। निर्भस्त्रका—निर्भस्त्रिका; एषका—एषिका; कृतषत्वनिर्देशात् नेह विकल्पः—एतिके—एतिकाः। अजका—अजिका; ज्ञका—ज्ञिका; द्वके—द्विके; निःस्वका—निःस्विका॥

The first compound in the sutra, e.g., भस्त्रैषाजाज्ञाद्वास्वा ending in स्वा, is a द्वन्द्व समास with the षष्ठीविभक्ति elided after it. The अकार of these preceding ककार becomes optionally इकार when टाप् follows in the feminine. Here owing to अङ्गत्व there is तदन्तविधि and so words ending in भस्त्रैषा &c. also take इत् for अकार in the fem. still 'नञ्पूर्वाणामपि' is stated in the sutra to clear all doubt here. The base भस्त्रा is fem., so इत्वविकल्प here will be established by the sutra "अभाषितपुंस्काच्च", hence taking of भस्त्रा here implies that words having भस्त्रा as उपसर्जन (subordinate) are to be taken here; (such words being विलिङ्ग, the rule "अभाषितपुंस्काच्च" will not apply and there will be necessity of इत्वविकल्प by this rule); so our author says "भस्त्राग्रहणमुपसर्जनार्थम्"। Other words ending in

भस्त्रा however where भस्त्रा is not उपसर्जन being feminine, the rule "अभाषित" will apply and give इत्वविकल्प so take उपसर्जन 'भस्त्रा' in the present rule. But in the case of एषा and द्वा this इत्वविकल्प is not of words having पूर्वपद before एषा and द्वा i.e., here in इत्वविकल्पविधि, एषा and द्वा alone are to be taken. The reason is that owing to अनुवर्त्तन (coming down) of अनाप्यसुपः here, there will be सुप् before टाप् in एषा and द्वा ; if these are preceded by some other पद, the लुप्त विभक्ति in the पूर्वपद before एषा and द्वा by प्रत्ययलक्षण will be taken as having सुप् before टाप्। So in this rule mere एषा and द्वा are taken for इत्वविकल्प ; and in अनेषका परमेषका, अद्वके परमद्वके we do not get इत्व at all, there having सुप् here before टाप् with reference to the elided intermediate विभक्ति of the पूर्वपद। And the word स्व is taken here when it denotes संज्ञा or is subordinate in a समास। For the अनुवृत्त 'आतः स्थाने' qualifies the अकार of स्वशब्द i.e., this इत्वविकल्प is of स्व when there is अकार for its आकार। Now if अनुपसर्जन सर्वनामस्वशब्द is taken there will be no आतः स्थाने अत्, but if स्व is संज्ञाभूत or is उपसर्जन it not being a सर्वनाम will not take अकच् but क ; thus स्वा + क = स्व + क by the rule 'केणः' = स्वका by addition of टाप् again ; so here स्व has आतः स्थाने अत्। Hence our present rule applies. [N.B.—Remember that meaning ज्ञाति and धन, स्व is not सर्वनाम by the rule "स्वमज्ञातिधनाख्यायाम्"। It is सर्वनाम meaning आत्मा and आत्मीय ; in this meaning स्व + अकच् + टाप् yields स्विका only with नित्य इकार for अकार, for here is no आतः स्थाने अत् in स्व ]। This अनुवृत्ति of आतः स्थाने however does not qualify द्वा and एषा, for these being of सर्वाद्यन्तर्गण and being specified with त्यदाद्यत्व and सत्व &c., are taken as सर्वनाम द्वा and एषा with अकच् after these (and in that case

these cannot be taken as उपसर्जन, for then सर्वाद्यन्तर्गणकार्य्य will not come after these) and thus in these there can be no आतः स्थाने अत्। Again आतः स्थाने cannot qualify the word भस्त्रा &c., for in these the words not being सर्वनाम does not take अकच् but कप्रत्यय come after these; then these fem words will take ह्रस्व for their आप् by the rule 'केण:' and we will inevitably in these words get आतः स्थाने अत्, so further qualification after these is unnecessary, so the author says "नाप्यनोषाम् अव्यभिचारात्"। Again as आतः स्थाने qualifies the base स्व here, then in स्विका where अनुपसर्जन स्व meaning आत्मीय is सर्वनाम takes अकच्, so here there being no आतः स्थाने अत् in स्व, the form is स्विका only without इत्वविकल्प, so the author says, "स्वशब्दः अनुपसर्जनमात्मीयवाची आकजर्हः"। But in other meanings it is not feminine at all. So स्व while denoting संज्ञा or is उपसर्जनीभूत, then it takes क and we get the examples under this rule with इत्वविकल्प। Meaning आत्मीय and when अनुपसर्जन then the form is स्विका परमस्विका only without इत्वविकल्प ( अत्र अकचि सति आतः स्थाने अकारस्यालाभात् )। Now the instance of this sutra are being given :—निर्भस्त्रका—निर्भस्त्रिका ( भास्त्राया: निर्गता इति उपसर्जने ह्रस्वे, टापि, कप्रत्यये च ततः 'केण:' इति ह्रस्वे सति निर्भस्त्रक इति, पुन: टापि निर्भस्त्रका—निर्भस्त्रिका इति )। Similarly एषका—एषिका ; here as sutra says एष with षत्व attached, so in एतिके from ( एते + अकच्) and एतिका:. we get the इत्व as नित्य। So also अजका—अजिका। ज्ञका—ज्ञिका। ( द्वे + अकच् =) द्वके—द्विके ; नि:स्वका—नि:स्विका (the word is formed as in निर्भस्त्रका and निर्भस्त्रिका ) ॥

मित—। भस्त्रा, एषा, अजा, ज्ञा, द्वा, स्वा,—एषां द्वन्द्वः। ततः षष्ठ्याः सौत्रो ,लुक् अत आह—"स्वियन्तं लुप्तषष्ठीकं पदम्"। अनुद्द [illegible] न प्रदर्शिता, किन्तु

अनुपदमेव स्फुटीभविष्यति ॥ 'कात्पूर्वस्यात इदाप्यसुपः', 'आतः स्थाने' इति वर्त्तते, किन्तु का अनुवृत्तिः क्वास्ति क्व न वा इति उत्तरत्र स्फुटीक्रियते ॥ अङ्गाधिकारत्वात् अत्र तदन्तविधौ सति भस्त्रादिशब्दान्तानाम् इति लाभेऽपि सूत्रे "नञ्पूर्वाणाम् अपि" वचनं स्पष्टार्थम् न तु नियमार्थम्। नियमे सति निर्भस्त्रिका इति न सिध्यति ॥ ततः आह—"स्पष्टार्थम्" इति ॥ केवलभस्त्राशब्दस्य नित्यस्त्रीत्वात् "अभाषितपुंस्काच्च" इति उत्तरसूत्रेणैव इत्वविकल्पे सिद्धे, अत्रसूत्रे "भस्त्राग्रहणम् उपसर्जनार्थम्" इति वदति। एवमस्य उपसर्जनत्वे त्रिलिङ्गत्वात् भाषितपुंस्कत्वेन "अभाषितपुंस्काच्च" इतिसूत्रस्य अप्राप्तौ वचनम् सार्थकम्। अन्यस्य उपसर्जनभिन्नस्य भस्त्राशब्दस्य तु नित्यस्त्रीत्वात् "अभाषित-पुंस्काच्च" इति पाक्षिकम् इत्वं तु स्यादेव। ततः परमभस्त्रका—परमभस्त्रिका इति भवतः ॥ किन्तु एवम् "एषाद्वा एतयोस्तु सपूर्वयोः न इत्वम्"। कथमेतत् ज्ञायते ? इत्यत्रोत्तरमाह—"अनाप्यसुपः" इति अत्र वर्त्तते। ततः सपूर्वयोः 'एषा द्वा' इत्येतयोः पूर्वपदस्थाग्रायाः लुप्तायाः विभक्तेः प्रत्ययलक्षणेन सुप्त्वमाश्रित्य, आपः सुपः परत्वात् इत्वं न स्यात् एतदेवाह—"अन्तवर्त्तिनीं विभक्तिमाश्रित्य असुपः इति प्रतिषेधात्"। ततश्च अनेषका परमैषका, अद्वके परमद्वके—इति इत्वाभावः ॥ स्वशब्दस्य तु "स्वो ज्ञाता-त्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने" इति कोषात् ज्ञातावात्मनि पुंस्त्वम्। आत्मीये विशेष्यनिघ्नस्त्रिलिङ्गः। धने तु पुंनपुंसकलिङ्गः। यदा तु स्त्रीविशेषस्य संज्ञा तदापि स्वशब्दः स्त्रीलिङ्गः। आत्मीयवाचिनः सर्वनामता साप्यनुपसर्जनस्यैव भवति ; "संज्ञोपसर्जनीभूतास्तु न सर्वादयः" इति वचनात्। ततश्च आत्मीयायां वाच्यायां सर्वनामत्वात् अकचि टापि "प्रत्ययस्थात्कात्—" इति नित्यमित्वे स्विका इति भवति ; ननु अत्र "भस्त्रैषा—" इति इत्वविकल्पः कथं न स्यात् ? इत्यत्रोत्तर-माह—"अत्र स्वशब्दग्रहणं संज्ञोपसर्जनार्थम्"। प्रकृते तु अनुपसर्जनत्वात् स्विका इति नेत्वविकल्पः। अत्र कारणञ्च उपन्यस्यति—'इह हि आतः स्थाने इत्यनुवृत्तं स्वशब्दस्यातो विशेषणम्' इति। पूर्वसूत्रात् 'आतः स्थाने' अनुवृत्तं सत्स्वशब्दमेव विशेषयति नान्यम्। ततश्च अर्थोलभ्यते—स्वशब्दस्य आतः स्थाने अकारस्य इत्वा स्यात्। 'आतः स्थाने' इत्यनुवृत्तं कथं अन्यान्शब्दानत्र न विशेषयति ? इत्याह—"न तु द्वेषयोः असम्भवात्'। 'एषाद्वा' इति सर्वाद्यन्तर्गतत्यदाद्यादिप्रयुक्तसत्वात्व-

निर्देशेन सर्वनामत्वस्य आवश्यकत्वात्। ततश्च अत्र अकचि सति 'आतः स्थाने' अकाराभावः स्फुटः एव। भस्त्राजादिशब्दानां असर्वनामत्वात् कप्रत्यये सति "केऽणः" इति ह्रस्वे पुनः टापि च सति ( निर्भस्त्रकादौ यथा ) आतः स्थाने अकारस्य नियतसत्त्वात् आह—"नाप्यन्येषाम् अव्यभिचारात्" इति॥ अनुपसर्जनात्मीयवाची स्वशब्दस्तु सर्वनामत्वात् अकजर्हः, अस्य आतः स्थाने अकाराभावात् इत्वविकल्पः न स्यात्, किन्तु नित्येत्वम्—'स्विका, परमस्विका' इति। एवं च "हंसं तनौ संनिहितं चरन्तं मुनेर्मनोवृत्तिरिव स्विकायाम्" इति श्रीहर्षश्लोके "भस्त्रैषेति" वैकल्पिकम् इत्वम् इति व्याचक्षाणाः उपेक्ष्या इति भावः। सर्वमेतत् अभिप्रेत्याह हरदत्तः—"अत्रातः स्थाने इत्येतत् स्वशब्दस्य विशेषणम्। सम्भवव्यभिचारौ हि तत्र स्तः कावचोः, सतोः॥ इ' षयोः सम्भवो नास्ति, नान्यत्र व्यभिचारिता। सर्वनाम्नः स्वशब्दस्य तेन नायं विधिर्भवेत्"॥ प्रकृते उदाहरणान्याह—निर्भस्त्रका—निर्भस्त्रिका इत्यादि। भस्त्रायाः निष्क्रान्ता इति "निरादयः क्रान्ताद्यर्थे द्वितीयया" इति समासे, ह्रस्वत्वेच, पुनष्टापि कप्रत्यये च "केऽणः" इति ह्रस्वे निर्भस्त्रकशब्दात् पुनष्टापि निर्भस्त्रकाशब्दः। इत्वविकल्पे रूपद्वयम्॥ एवमन्यत्रापि बोध्यम्॥ "भस्त्रैतत्ज्ञाः" इति वक्तव्ये एषेति कृतषत्वनिर्देशात् श्रौजसादिषु अकचि सति षत्वाभावात् इत्वविकल्पो न स्यात्। तेन एतिके—एतिकाः इति॥ स्त्रीलिङ्गनिर्देशात् अजादयः स्त्रीलिङ्गा एव गृह्यन्ते। उदाहरणमपि तादृशम्:—अजका—अजिका इत्यादि सुगमा। निःस्वका—निःस्विका इत्यादौ प्रक्रिया तु निर्भस्त्रकादिवत् ज्ञेया॥

## ४६७। अभाषितपुंस्काच्च। ७।३।४८॥

**दी—। एतस्माद्विहितस्य आतः स्थाने अत इद्वा स्यात्। गङ्गका—गङ्गिका। बहुव्रीहेर्भाषित पुंस्कत्वात् ततो विहितस्य नित्यम्। अज्ञाता खट्वा अखट्विका। शैषिके तु विकल्पः एव।**

अकार in place of आकार of an अभाषितपुंस्क word becomes optionally इकार when fem affix टाप् ( आप् ) follows. Thus गङ्गा एव इति स्वार्थे के सति ("केऽणः" इति ) ह्रस्वे च भवति गङ्गका—गङ्गिका। A बहुव्रीहि co-

mpound is a भाषितपुंस्क, so इत्व under above conditions is नित्य after it by the rule "प्रत्ययस्थात् कात्।" Thus अविद्यामाना खट्वा यस्याः इति अखट्वा ; ततः "गोस्त्रियोरुपसर्जनस्य" इति ह्रस्वे, ततः टापि, अज्ञातार्थे के सति, "केऽणः" इति ह्रस्वे, पुनः टापि **अखट्विका।** But when there is कप् here in the बहुव्रीहि by the rule "शेषाद्विभाषा" (see under बहुव्रीहि समास) then इत्व is optional here, yeilding अखट्विका + अखट्वाका (for reassons see मितभाषिणी below.)

मित—। "उदीचामातः स्थाने—" इति वर्त्तते। यकपूर्वाया: इति तु नास्त्येव। भाषितः पुमान् अनेन इति भाषितपुंस्कः, न तादृशः ; तस्मात्। तदाह—"एतस्माद्विहितस्य आतः स्थाने" इत्यादि॥ गङ्गाशब्दात् कः। ततः "केऽणः" इति ह्रस्वे सति आतः स्थाने अकारस्य सत्वात् इत्वविकल्पः—गङ्गका—गङ्गिका इति॥ "अनेकमन्यपदार्थे" इति सूत्रात् बहुव्रीहौ शब्दस्तु त्रिलिङ्गविशेष्यविघ्नत्वात्, भाषितपुंस्क एव, ततः अस्य भाषितपुंस्कत्वात् सूत्रे अप्राप्ते "प्रत्ययस्थात् कात्—" इति नित्यमित्वम् एव। अविद्यमाना खट्वा यस्याः इति "नञोऽस्त्यर्थानाम्—" इति वार्त्तिकेन बहुव्रीहौ कबभावे अखट्वशब्दः। अखट्वशब्दे "गोस्त्रियोः—" इति ह्रस्वः। ततः स्त्रीविशेषणत्वात् टापि सति, सुपिच, "केऽणः" इति ह्रस्वः, पुनश्च टापि अखट्विका। अत्र बहुव्रीहौ अखट्वशब्दस्य भाषितपुंस्कत्वात् इत्वविकल्पो न स्यात्॥ 'शेषिके कपि" इति—अत्र बालमनोरमा एव द्रष्टव्या यथा "न स् खट्वस् इत्यवस्थायां कपि, सुवलुक्। प्रत्ययलक्षणेन भागद्वयस्य सुबन्तत्वात् 'नञोऽस्त्यर्थानाम्—" इति बहुव्रीहिसमासः। 'समासान्तः' इत्यन्वर्थसंज्ञाबलात् कबन्तस्यैव समासत्वम्। ततश्च अखट्वाकशब्दे अखट्वा इत्यंशस्य उपसर्जनस्त्रीप्रत्ययान्तसमासरूपप्रातिपदिकत्वाभावात् 'गोस्त्रियोः—' इति ह्रस्वो न भवति। नापि "केऽणः" इति ह्रस्वः, "न कपि" इति निषेधात् ; किन्तु 'आपोऽन्यतरस्याम्' इति ह्रस्वविकल्पः। तत्र खट्वाशब्दात् विहितस्य प्राग्वर्त्तिनः टापः अभाषितपुंस्कात् विहितत्वेन तत्स्थानिकह्रस्वाकारस्य अयम् इत्वविकल्पः भवत्येव। 'आपो—' इति ह्रस्वाभावपक्षे तु अखट्वाक इत्येव"; अतश्च दीक्षितः आह—"शेषिके कपि तु विकल्प एव"।

४६८। आदाचार्य्याणाम्। ७।३।४६॥

दी—। पूर्वसूत्रविषये आद्वा स्यात्। गङ्गाका। उक्तपुंस्कात्तु शुभ्रिका।

Eng.—Easy.

मित—। 'पूर्वसूत्रविषये' इत्यादि—अभाषितपुंस्कात् विहितस्य आतः स्थाने अतः आत् वा स्यात् इत्यर्थः; ततः गङ्गाका स्यात्॥ शुभ्रशब्दः भाषितपुंस्क एव ततः टापि के च सति, "केऽणः" इति ह्रस्वे च सति पुनः टापि शुभ्रिका। अत्र भाषित-पुंस्कत्वात् सूत्रे अप्राप्ते "प्रत्ययस्थात्कात्—" इति अतः नित्यमित्वमेव।

४६९। अनुपसर्जनात्। ४।१।१४॥

दी—। अधिकारोऽयम्। "यूनः तिः" इत्यभिव्याप्य (अधिकारोऽयम्)। अयमेव स्त्रीप्रत्ययेषु तदन्तविधिं ज्ञापयति।

This is an अधिकार सूत्र and its अधिकार (jurisdiction) goes up to the sutra "यूनस्तिः" (Sutra 531). This rule indeed implies तदन्तविधि in स्त्रीप्रत्यय (i.e, in the matter of feminine affixes)—thus says भाष्यकार। 'अनुपसर्जनात्' here implies that स्त्रीप्रत्यय comes after when the word is उपसर्जन also, in the prior rules; so also in the rule "वनो रच" we get तदन्तविधि। Generally however the varttika "समासप्रत्ययविधौ तदन्तविधेः प्रतिषेधः" does not allow तदन्तविधि in स्त्रीप्रत्यय।

मित—। सुगमा॥

४७०। टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः। ४।१।१५॥

दी—। अनुपसर्जनं यट्टिदादि तदन्तं यददन्तं प्रातिपदिकम्, ततः स्त्रियां ङीप् स्यात्। कुरुचरी। नदट्—नदी। उपसर्जनत्वात् नेह—बहुकुरुचरा॥ पचमाना इत्यत्र टित्वात् उगित्वाच्च ङीप् प्राप्तः। लट्टो

ङित्त्वेन 'लाश्रयमनुबन्धकार्यं नादेशानाम्' (परिभाषा) इति ज्ञापनान्न भवति। श्नः शानचः शित्त्वेन क्वदिनुबन्धकार्येपि 'अनलविधौ' इति निषेधज्ञापनद्वा। सौपर्णेयी ; ऐन्द्री ; औत्सी। ऊरुद्वयसी ऊरुदघ्नी—ऊरुमात्री, पञ्चतयी, आक्षिकी, लावणिकी, यादृशी, इत्वरी। "ताच्छीलिकेणेपि"—चौरी। "नञ्स्नञीकक्ख्युंस्तरुण तलुनानामपसंख्यानम् (वा)—स्त्रैणी, पौंस्नी, शाक्तीकी, याष्टीकी, आढ्यङ्करणी, तरुणी—तलुनी॥

An अकारान्त प्रातिपदिक (crude word) which is not an उपसर्जन (i.e., not subordinated in a बहुव्रीहि समास mainly) and which ends in the affixes having ट इत् or ढ or अण् or अञ् &c., takes ङीप् in the feminine. Thus कुरुचरी with ङीप् in the feminine for here we have ट-इत् प्रत्यय। Similarly नदट्+अच=नदी with ङीप् in the fem.

In case of the word वक्ष्यमाणा, ङीप् is due in the fem., for शानच् here coming in place of लृट् is by स्थानिवत्त्व, ट-इत् and उगित् as well. But we do not get ङीप् here for स्थानिवत्त्व cannot be counted in such cases. The reason is in the rule "यासुट् परस्मैपदेषु उदात्तो ङिच्च"; specification of ङित्व of यासुट् coming in place of लिङ् which is already ङित् implies that here स्थानिवत्व does not take place, for then further ङित्त्वविधान would have been unnecessary, thus the परिभाषा "लाश्रयम् अनुबन्धकार्यं आदेशानां न भवति"—i.e., enjoining with reference to अनुबन्ध in the matter of ल i.e., tenses, is not to come in place of their आदेशs as well—prohibits टित्व or उगित्व of शानच् coming in place of लट्। Further शित्त्वविधान of शानच् coming in place of श्ना which is already शित् by the rule "हलः श्नः शानज्झौ" implies that there is prohibition of स्थानिवत्त्व in the matter of अनुबन्धकार्य by 'अनल्विधौ' in the rule "स्थानिवदादेशोऽनल्विधौ"। So in वक्ष्यमाणा we get अजादिलक्षण टाप् and not ङीप्॥ Then सौपर्णेयी being ढक्-

प्रत्ययान्त by the rule "स्त्रीभ्यो ढक्" takes ङीप्; similarly ऐन्द्री being अणन्त, औत्सी being अञन्त and so on.

Then ङीप् comes after ण प्रत्ययान्त words which take ण in the sense of तदस्य शीलम्। Thus चुराशीलमस्याः gives चौरी for it ends in ण (by "छत्रादिभ्यो णः" where there is अनुवृत्ति of 'शीलम्')। Similarly the Varttika 'नञ् स्नञ्—" says that नञन्त, स्नञन्त ईकगन्त and ख्युन-प्रत्ययान्त words and the words तरुण and तलुन also take ङीप् in the feminine.

[N.B.—तरुण and तलुन being included in the गौरादि list is to take ङीष्, but this Varttika directs ङीप्; the difference will be in स्वर only.]

मित— । टित्, ढ, अण्, अञ्, द्वयसच्, दघ्नच्, मात्रच्, तयप्, ठक्, ठञ्, कञ्, क्वरप्, एषां समाहारः। ततः पञ्चम्येकवचनम्। प्रत्ययग्रहणपरिभाषया एतत्प्रत्ययान्तात् प्रातिपदिकात् इत्यर्थः। "अजाद्यतः—" इति सूत्रात् 'अतः' वर्त्तते एव तच्च 'प्रातिपदिकात्' इत्यस्य विशेषणम्। 'अनुपसर्जनात्' इत्यधिकारश्च अस्त्येव। स्त्र्यधिकारश्चापि-वर्त्तते। तदाह—"अनुपसर्जनं यट्टिदादि तदन्तं यददन्तं प्रातिपदिकम्" इत्यादि॥ कुरुषु चरतीति कुरुपपदात् 'चरेष्टः', टित्त्वात् स्त्रियां ङीप्; एवं नदी अपि॥ वचः +लृट्: स्थाने १)शानच् कर्मणि=वक्ष्यमाणा ; "लृटः सद्वा:" इति सूत्रेण लृटः शान-जादेशः। अत्र तु लृटः टित्त्वात् उगित्वाच्च तत्स्थानिकस्य शानजपि तादृशः एव, ततः तदन्तात् प्रातिपदिकात् ङीप् प्राप्नोति सत्यम्। किन्तु "लाश्रयम् अनुबन्धकार्य्यम् आदेशानां न भवति" इति परिभाषया लृट्लकाराश्रितं ट-इत्-अनुबन्धकार्य्यं तदादेशस्य शानचः न स्यात्। अत्र किं प्रमाणमित्युत्तरमाह—"यासुट् परस्मैपदेषूदात्तो ङिच्च" इति सूत्रे लिङाश्रितस्य यासुडागमस्य ङित्त्वेपि पुनः ङित्त्वविधानात् ज्ञायते यत् "लाश्रितमनुबन्धकार्य्यम् आदेशानां न" इति। पुनश्च "हलः श्नः शानज्झौ" इति सूत्रे च शितः 'श्ना' इत्यस्य 'शानच्' इति शित्विधानात् ज्ञायते क्वचित् अनुबन्धकार्य्ये स्थानिवत्त्वं नास्त्येव, अनल्विधौ इति निषेधात्। "तथा च वक्ष्यमाणा इत्यत्र टित् उगित् अनु-

वन्धकार्य्ये 'अनल्विधौ' इति निषेधप्रवृत्त्या स्थानिवत्त्वाभावेन टित्त्वोगित्त्वयोरभावात् न ङीप् "—( इति बालमनोरमा" )। अत्र बालमनोरमास्थम् इदमपि स्मर्त्तव्यम्— "लाश्रयमनुबन्धकार्य्यंनादेशानाम्" इत्यत्र यासुटो ङित्त्वं न ज्ञापकम्। तस्य तिप्-सिप्-मिवर्थत्वात्। न हि लिङादेशत्वेपि तिप्-सिप्-मिवां ङित्त्वं स्थानिवत्त्वलभ्यम्। "हलः श्नः शानच् ह्रौ" इति सूत्रे भाष्ये 'ङिच्च पिन्न, पिच्च ङिन्न' इति प्रपञ्चितत्वात्। तथा श्नः शानचः शित्त्वमपि न लिङ्गम्। तत्र शित्त्वस्य भाष्ये ज्ञापकत्वे "सेर्ह्यपिच्च" इति ह्रेरपित्वस्य तातङो ङित्वस्य च वैयर्थ्यमिति भाष्ये दूषणाभिधानाच्च। तस्मात् वक्ष्य-माणा इत्यत्र ङीवेवयुक्तः, टाप् त्वसाधुरेव। अजादित्वात् टाप् इति वा कथञ्चित् समा-धेयम्" ॥ सुपर्णायाः अपत्यं स्त्रीइति "स्त्रीभ्यो ढक्" इति ढकि ङीपि च प्राप्ते सौ-पर्णेयी ; एवं वैनतेयी। इन्द्रः देवतास्याः इति "सास्य देवता" इति अणि सति स्त्रियाम् ङीप्। उत्सस्य ऋषिविशेषस्य अपत्यं स्त्री इति उत्सादित्वात् अञि ङीपि च औत्सी ॥ पञ्च अवयवा अस्याः इति "सङ्ख्यायाः अवयवे तयप्" ततः ङीप् इति पञ्चतयी। अक्षैर्दीव्यति इति ठकि ङीपि च आक्षिकी। लवणं पण्यमस्याः इति ठञि च लावणिकी इत्यादि सुगमम् ॥ ताच्छीलिके णेपि ङीप्। चुरा शीलमस्य इति 'शीलम्' इत्यनुवृत्तौ "छत्रादिभ्यो णः" इति णे सति ङीपि च चौरी इति ॥ एवं नञ्-स्नञ् ईकक् प्रत्ययान्तात् ङीप् एव। तरुणतलुनशब्दयोः गौरादित्वात् ङीषि प्राप्ते अनेन वार्त्तिकेन ङीवेव विधीयते—फलं तुल्यं, किन्तु स्वरे विशेषो वर्त्तते एव ॥

## ४७१। यञश्च। ४।१।१६ ॥

### दी—। यञन्तात् स्त्रियां ङीप् स्यात्। अकारलोपे कृते—

After a यञन्त word ङीप् is attached in the feminine. Thus गर्गस्य अपत्यं स्त्री = गर्ग + यञ ( 'गर्गादिभ्यो यञ्' ) = गार्ग्य by आदि वृद्धि + ङीप् = गार्ग्य + ङीप् (the last अकार eliding by the rule "यस्येति च" ; hence our author says अकारलोपे कृते )=गार्गी with यलोप by the next rule.

मित—। 'यञ्' इति प्रत्ययस्य "टिड्ढाणञ्—" इति पूर्वसूत्रे ग्रहणे उचितेपि पृथग्ग्रहणम् उत्तरसूत्रे ( "प्राचांष्फ तद्धितः" इत्यत्र ) 'यञ्' इत्यस्य अनुवृत्त्यर्थम् ॥ गर्गस्य

अपत्यं स्त्री इति "गर्गादिभ्यो यञ्" इति यञि आदिवृद्धौ च, ततः यस्येति च गकारात् अकारस्य लोपे कृते आह—

४७२। हलस्तद्धितस्य। ६।४।१५०॥

दी—। हलः परस्य तद्धितयकारस्य उपधाभूतस्य लोपः स्यात् ईति परे। गार्गी। "अनपत्याधिकारस्थत्वात् न ङीप्" (वा)—द्वीपे भवा द्वैप्या। अधिकारग्रहणात् नेह—देवस्यापत्यं दैव्या। "देवाद् यञञौ" इति हि यञ् प्राग्दिव्यतीयः न तु अपत्याधिकारपठितः।

A तद्धित-यकार coming after a हल् letter and being an उपधा (penultimate), elides when ई follows. Thus गार्ग्य + ङीप् = गार्गी with य elided. Here first we have अकारलोप (see preceding rule) and then we have यकारलोप। A question may arise that if अकार first elides how can then यकार be an उपधा? On this the answer will be अलोप is treated as असिद्ध (as if not taken place) in the matter of यलोप by the rule "सिद्धवदत्राभात्" (६।४।२२)।

The Varttika "अनपत्याधिकारत्वात् न ङीप्" declares that ङीप् does not come after यञन्त words if that यञ् is outside the jurisdiction of अपत्यप्रत्यय। Thus द्वीपे भवा = द्वैप्या। Owing to the saying of 'अधिकार-स्थत्वात्' in the Varttika there is also no ङीप् after दैव्य got with यञ् in the sense of अपत्य, for this यञ् by the Varttika 'देवाद्यञञौ" is outside अपत्याधिकार it being a प्राग्दिव्यतीय rule (i.e., extending as far as the rule "तेन दिव्यति—" &c).

मित—। 'हलः' इति ऊह्य परशब्दयोगे पञ्चमी। पूर्वसूत्रात् यञः वर्त्तते; तच्च 'तद्धितस्य' इत्यस्य विशेषणम्। "यस्येति च" इत्यतः ईति अस्ति; "सूर्यतिष्यागस्त्य—" इति सूत्रात् उपधायाः अस्ति; तथा "ढ्रे लोपो कद्रूाः" इति सूत्रात् लोपः वर्त्तते; ततः आह—'हलः परस्य तद्धितयकारस्य' इत्यादि॥ ततः गार्ग्य+ङीप् = गार्गी। अत्र

प्रथमम् अलोपः ततः यलोपः ; अन्यथा यकारस्य ईत्परत्वं न स्यात्। ननु अलोपे कृते यकारस्य उपधात्वं कथं सिद्धम् ? इत्यत्रोत्तरमाह—अलोपस्य आभीयत्वेन असिद्ध-त्वात् यकारस्य उपधात्वं सुस्थिरमेव ॥ 'तस्यापत्यम्' इत्यपत्याधिकारभिन्नयञन्तात् ङीप् न स्यात् इति आह—"अनपत्या" इति वार्त्तिकेन ; तथा च काशिका—"अपत्यग्रहणं कर्त्तव्यम्। इह माभूत्। दीपादनुसमुद्रं यञ्—द्वैप्या"। अत्र काशिकादौ अपत्य-ग्रहणेन अपत्याधिकारपरत्वं बोध्यम् इति—मनोरमायां स्पष्टम् ॥ वार्त्तिके अधिकार-ग्रहणात् दैव्या इत्यत्र यञन्तत्वे सत्यपि अस्य यञः अपत्याधिकारवहिर्भूतत्वात् ङीप् न स्यात्, इत्याह—"देवाद्यञञौ' इति हि प्राग्दिव्यतीयः न तु अपत्याधिकारपठितः" ॥

४७३। प्राचां ष्फ तद्धितः। ४।१।१७ ॥

दी—। यञन्तात् ष्फो वा स्यात् स्त्रियाम्, स च तद्धितः।

After a यञन्त word ष्फ ( i.e., आयन ) optionally comes in the feminine and this is to be treated as a तद्धित affix.

मित—। 'यञः' इति वर्त्तते, तदाह—'यञन्तात्' इत्यादि ॥ 'ष्फ' इति सौत्रः विभक्त्यभावः।

४७४। षः प्रत्ययस्य। १। । ६ ॥

दी—। प्रत्ययस्यादिः षः इत् स्यात्।

Then ष at the beginning of a प्रत्यय elides. Thus in ष्फ only फ remains.

मित—। सुगमा।

४७५। आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्। ७।१।२।

दी—। प्रत्ययादिभूतानां फादीनां क्रमात् आयन्नादयः आदेशाः स्युः। तद्धितान्तत्वात् प्रातिपदिकत्वम्। षित्वसामर्थ्यात् ष्फेणोक्तेऽपि स्त्रीत्वे "षिद् गौरादिभ्यश्च" इति वक्ष्यमाणो ङीष्। गार्ग्यायणी ॥

आयन, एय, ईन, ईय and इय respectively come in place of फ, ढ, ख, छ and घ when these are at the beginning of a प्रत्यय। Thus:

for ष्फ we get आयन। And this being तद्धित is a प्रातिपदिक by the rule "कृत्तद्धितसमासाश्च"। And being a प्रातिपदिक and being षित्-प्रत्ययान्त takes ङीष् in the feminine by the rule "षिद्गौरादिभ्यश्च" (*infra*). Though ष्फ is made in स्त्रियाम्, still here षित्व indicates that ङीष् by the गौरादि rule is to come after this. Thus we get गार्ग्यायणी also here.

मित।— सुगमा।

४७६। सर्वत्र लोहितादिकतन्तेभ्यः। ४।१।१८॥

**दी—। लोहितादिभ्यः कत शब्दान्तेभ्यः यञन्तेभ्यः नित्यं ष्फः स्यात्। लौहित्यायनी। कात्यायनी।**

लोहितादि words extending as far as the word 'कत' ending in यञ् takes ष्फ always after these when fem. affix follows. This लोहितादि is under the गर्गादि list. Thus लौहित्यायनी and कात्यायनी।

मित—। लोहितादिः गर्गाद्यन्तर्गणः "गर्गादिभ्यो यञ्" इत्यत्र च द्रष्टव्यः। कतः अन्तः यस्य, तेभ्यः। शकन्ध्वादित्वात् पररूपम् बोध्यम्। "ष्फः तद्धितः" इति च वर्त्तते। तदाह—"लोहितादिभ्यः कतशब्दान्तेभ्यः नित्यं ष्फः" इति॥ लोहितस्यापत्यं स्त्री इति गर्गादियञिकृते, यञन्तात् ष्फः, तस्य अयन्नादेशे "यस्येति च" यकारात् अकारस्य लोपे च सति लौहित्यायनी इति। षित्वात् ङीष्। एवं कात्यायनी॥

४७७। कौरव्यमाण्डूकाभ्यां च। ४।१।१९॥

**दी—। आभ्यां ष्फः स्यात (? स्त्रियाम्)। क्रमेण टाब्ङीषोरपवादः। "कुर्वादिभ्यो ण्यः"। कौरव्यायनी। "ढक् च मण्डूकात्" इत्यण्। माण्डूकायनी। "आसुरेरुपसंख्यानम्" (ष्फस्य उपसंख्यानम् इति)। आसुरायनी।**

ष्फ comes after these words when the fem. affix follows. In कौरव्य, the affix टाप् was due in the feminine and in माण्डूक, ङीष

was due by the rule "टित्ढाणञ्—" and these are being barred here by ष्फ। Now the author shows how टाप् and ङीप् respectively after these words are barred by quoting the rules of their formation e.g. "कुर्वादिभ्योण्यः" and "ढक् च मण्डूकात्"। The word आसुरि also takes ष्फ when feminine affix follows after it. Thus we get आसुरायणी।

मित—। क्रमेणेति—"कुर्वादिभ्योण्यः" इति कौरव्य शब्दस्य स्त्रियां टापि प्राप्ते, "ढक् च मण्डूकात्" इति मण्डूकशब्दस्य "टित्ढानञ्—" इति च प्राप्ते, अनेन सूत्रेण स्त्रियाम् ष्फः विहितः। ततश्च षित्त्वात् ङीष्, "षिद्गौरादिभ्यश्च" इति॥ अन्यत् सुगमम्॥

**५७८। वयसि प्रथमे। ४।१।२०॥**

**दी—। प्रथमवयोवाचिनः अदन्तात् स्त्रियां ङीप् स्यात्। कुमारी। "वयस्यचरमे" इति वाच्यम् (वा)—वधूटी। चिरण्टी। वधूटचिरण्टशब्दौ यौवनवाचिनौ अनयोः द्वितीयवयोवाचित्वात् सूत्रेण अप्राप्तौ (वार्त्तिके 'वयसि अचरमे' इति उक्तम्)॥ अतः किम्—शिशुः। "कन्यायान"; (ङीप् न इत्यर्थः); "कन्यायाः कनीन च" (सूत्र ११९९) इति निर्देशात्। (अत्र सूत्रे सूत्रकारेण एव 'कन्यायाः' इति उक्तत्वात् कन्याशब्दस्य ङीप् न इति विज्ञायते)।**

अकारान्त words denoting first stage of life takes ङीप् in the feminine. Thus we get कुमारी with ङीप् from कुमार। The Varttika says that instead of वयसि प्रथमे we should say here वयसि अचरमे i.e., after अदन्त words not denoting last stage of life ङीप् comes in; so we get वधूटी and चिरण्टी with ङीप् in the feminine from the words वधूट and चिरण्ट denoting youth i.e., second stage of life.

[N B.—Some divides our life into three stages e.g., कौमार, यौवन and वार्द्धक, others into 4 stages e.g., कौमार, यौवन, प्रौढ़ and वार्द्धक]।

Why do we say अतः here i.e., अदन्तात् in the Vritti ?—Witness शिशुः here though it denotes first stage of life, still not being अदन्त it does not take ङीप् in the fem. The word कन्या though indicating first stage of life still does not take ङीप् in the fem. This is owing to the Sutrakara's use of the word 'कन्याया' without ङीप् in the sutra 'कन्यायाः कनीन च' ।

मित—। अत्र 'अतः' इति वर्त्तते ॥ सूत्रार्थश्च यथा—'प्रथमे वयसि वर्त्तमानं यत् प्रातिपदिकं अदन्तं ततः स्त्रियाम् ङीप् प्रत्ययो भवति—' इति ॥ अन्यत् सुगमम् ॥

**४७६ । द्विगोः । ४।१।२१ ॥**

**दी—। अदन्तात् द्विगोः ङीप् स्यात् । त्रिलोकी । अजादित्वात् त्रिफला, त्र्यनीका सेना ।**

ङीप् comes in the fem. after अकारान्त words of द्विगु समास । Thus त्रयाणां लोकानां समाहारः=त्रिलोकी with ङीप् by this rule. And the Varttika "अकारान्तोत्तरपदो द्विगुः स्त्रियाम् इष्टः "directs स्त्रीत्व of अकारान्त द्विगु words. Why then do we get त्रिफला from त्रयाणां फलानां समाहारः । This is because त्रिफला is read in the अजादि list. Similarly अजादित्वात् we get त्र्यनीका in त्र्यनीका सेना ।

मित—। अदन्तोत्तरपदस्य द्विगोः स्त्रियामिष्टत्वात् अनेन सूत्रेण ङीप् एव विधीयते । तेन त्रिलोकी, पञ्चपूली, पञ्चवटी, पञ्चाङ्गी इत्यादि सिध्यति । त्रिफला, त्र्यनीका इति तु अजादित्वात् टापि सिध्यति ; तथा च काशिका—'कथं त्रिफला ? अजादिषु दृश्यते' ॥

**४८० । अपरिमाणविस्ताचित कम्बल्येभ्यो न तद्धितलुकि ।**
**४।१।२२ ॥**

**दी—। अपरिमाणान्तात् विस्ताद्यन्ताच्च द्विगोः ङीप् न स्यात्, तद्धितलुकि । ( तद्धितलुकं दर्शयति— ) पञ्चभिरश्वैः क्रीता पञ्चाश्वा । आढ़ी-**

षण्ठक्। "अध्यर्धपूर्वात् द्विगोर्लुगसंज्ञायाम्" इति लुक्॥ द्वौ विस्तौ पचति द्विविस्ता। द्व्याचिता। द्विकम्बल्या। परिमाणान्तात्तु द्व्याढ़की॥ तद्धितलुकि किम्? समाहारे पञ्चाश्वी॥

When there is elision of a तद्धितप्रत्यय after a द्विगुसमासयुक्त अदन्त word not denoting परिमाण (measure) also ending in the words विस्त, आचित and कम्बल्य we do not get ङीप् in the fem. The author shows तद्धिलुक here thus पञ्चभिरश्वैः क्रीता इति पञ्चाश्वा। Here there is आर्हीय ठक् प्रत्यय, then this elides by the rule "अध्यर्द्धपूर्वात्—"; so we do not get ङीप् in पञ्चाश्व। Similarly द्विविस्ता &c. are formed (see mitabh); द्विगु words ending in परिमाणवाचक words take ङीप् thus we get द्व्याढ़की। Why do we say तद्धितलुकि in the sutra?—Witness पञ्चाश्वी with ङीप् here there is no तद्धितलुक् but समाहार, so ङीप् comes in.

मित—। अत्र 'द्विगोः, ङीप्' इति पूर्वसूत्रात् अनुवर्त्तते। प्रातिपदिकात् इति तु वर्त्तते एव। तदाह—अपरिमाणान्तात् विस्ताद्यन्ताच्च द्विगोः ङीव् न, तद्धितलुकि सति। तद्धितलुकम् एव दर्शयति—'पञ्चभिरश्वैः क्रीता पञ्चाश्वा' इत्यनेन। अत्र "आर्हात् अगोपुच्छसंख्यापरिमाणात् ठक्" इत्यधिकारे "तेनक्रीतम्" इति ठक् भवति। तस्य च टकः "अध्यर्धपूर्वात्"—इति लुक् च। अत्र पूर्वसूत्रेण ङीप् न, अपरिमाणान्तद्विगुत्वात्। अत्र बालमनोरमास्थमिदमपि द्रष्टव्यम्—" नन्वत्र 'द्विगोः' इति प्राप्ते ङीप्निषेधेपि "टिड्ढाणञ—" इति ठक्निमित्तको ङीप् दुर्वारः। द्वाभ्यां शताभ्यां क्रीता 'द्विशता' इत्यत्र "संख्यायाः अतिशदन्तायाः" इति कनः 'अध्यर्ध—'इति लुकि, 'अपरिमाण—' इति निषेधस्य चरितार्थत्वात् इति चेत्? सत्यम्। "टिड्ढाणञ्—" इत्यत्र प्रत्यासत्त्या टिड्ढाणञादीनां यः अकारः तदन्तमिति विवक्षितम्। पञ्चाश्वशब्दश्चायं ठगवयवाकारान्तः न भवतीति न दोषः"॥ विस्तादिशब्दानां परिमाणवाचित्वे अपरिमाण इत्यनेन अप्राप्तेः पृथग्ग्रहणम्॥ द्विविस्ता इत्यत्र "तद्धितार्थ—" इति द्विगुः। "सम्भवत्यवहरतिपचति" इति सूत्रेण ठक्। तस्य "अध्यर्ध—" इति-लुक्। ततः ङीप्निषेधे टापि द्विविस्ता॥ "आचितो दश भावाः" इत्यमरः। द्वौ

आचितौ वहतीति प्राग्वतीयः ठञ्, तस्य "अध्यर्ध—" इति लुकि ङीपनिषेधे च द्व्याचिता इति रूपसिद्धिः ॥ कम्बलस्य प्रकृतिभूतं द्रव्यं कम्बल्यम्। द्वाभ्यां कम्बल्याभ्यां क्रीता इति द्विकम्बल्या, पञ्चाश्वावत् प्रक्रिया ॥ परिमाण वाचकात्तु आढकौ पचतीति द्व्याढकी। सूत्रे तद्धितलुकि इति कथमुक्तम्? तदाह—समाहारे द्योत्ये तु ङीपि सति पञ्चाश्वी दशाश्वी इत्यादिं सिद्धत्येव।

## ४८१। काण्डान्तात् क्षेत्रे। ४।१।२३॥

**दी—। क्षेत्रे यः काण्डान्तो द्विगुः ततः न ङीप् तद्धितलुकि। द्वे काण्डे प्रमाणमस्याः द्विकाण्डा क्षेत्रभक्तिः। "प्रमाणे द्वयसच्—" इति विहितस्य मात्रचः "प्रमाणेलः द्विगोर्नित्यम्" इति लुक्। क्षेत्रे किम्?—द्विकाण्डी रज्जुः॥**

A द्विगु ending in the word काण्ड and referring to क्षेत्र ( field or portion thereof ), does not take ङीप् if there is elison of तद्धित-प्रत्यय in it. Thus we get द्विकाण्डा without ङीप् while referring to some portion of क्षेत्र। Here is लुक् of the तद्धित affix मात्रच् ( as stated by the author above ). If not implying क्षेत्र then the word takes ङीप् as in द्विकाण्डी रज्जुः, here also the तद्धित affix मात्रच् elides and then there is ङीप् by the rule "द्विगोः"।

मित—। "द्विगोः" इति "न तद्धितलुकि" इत्यपत्र वर्त्तते। तदाह—'क्षेत्रे यः काण्डान्तो द्विगुः ततः न ङीप्' इत्यादि॥ उदाहरणं यथा—द्विकाण्डा। अत्र 'क्षेत्रभक्तिः' इति वचनं 'क्षेत्रे' इति बोधनार्थम् उक्तम्। अत्र तद्धितलुकं दर्शयति—"प्रमाणेद्वयसच्—" इति विहितस्य इत्यादिना॥ यदि क्षेत्रं न द्योत्यते, तदा तु काण्डात् द्विगोः ङीप् भवत्येव, यथा द्विकाण्डीरज्जुः। अत्रापि मात्रचि सति तस्य लुकि च 'द्विगोः' इति ङीप्। ततः आह—'क्षेत्रे किम्?' इत्यादि॥

## ४८२। पुरुषात् प्रमाणेऽन्यतरस्याम्। ४।१।२४॥

**दो—। प्रमाणे यः पुरुषः तदन्तात् द्विगोः ङीप् वा स्यात् तद्धितलुकि। द्वौ पुरुषौ प्रमाणं यस्याः सा द्विपुरुषी—द्विपुरुषा वा परिखा।**

A द्विगु ending in the word पुरुष denoting some प्रमाण, takes ङीप् optionally in the fem. Thus we get द्विपुरुषी and द्विपुरुषा वा परिखा (a moat equalling the height of two person's height). Here also the प्रमाणप्रत्यय मात्रच् elides as above i.e., as in the prior rule; and the present rule applies.

मित—। अनुवृत्तिस्तु पूर्वसूत्रवद्वा वोध्या। अत्रापि प्रमाणप्रत्ययस्य मात्रचः पूर्ववत् लुक्। ततः सूत्रस्यास्य प्रवृत्तिः॥

४८३। ऊधसोऽनङ्। ५।४।१३१॥

दी—। ऊधोऽन्तस्य वहुव्रीहेरनङादेशः स्यात् स्त्रियाम्। इत्यनङि-कृते डाप्—ङीव्—निषेधेषु प्राप्तेषु—

A वहुव्रीहि compound ending in the word ऊधस् takes अनङ् in the feminine, i.e., when fem. affix follows. Now in कुण्डोधन् the optional डाप् by the rule "डावुभाभ्याम्"—and optional ङीप् by the rule "अन उपधालोपिनो—" are first barred by the rule "ऋन्नेभ्यो ङीप्"। Then this नान्तलक्षण ङीप् also is to be prohibited by the rule "अनो वहुव्रीहेः" and we look forward—

मित—। 'डाप्-ङीष्' इत्यादि। कुण्डोधन् इत्यत्र "डावुभाभ्याम्' इति वैकल्पिकस्य डापः, "अन उपधालोपिनः" इति वैकल्पिकस्य ङीपश्च वाधकभूतस्य 'ऋन्नेभ्यो' इतिसूत्रस्य प्राप्तौ, ततश्च "अनो वहुव्रीहेः" इति नान्तलक्षणङीपोपि वाधकसूत्रे प्राप्ते सति आह—

४८४। वहुव्रीहेरूधसो ङीष्। ४।१।२५॥

दी—। ऊधोन्तात् वहुव्रीहेः ङीष् स्यात् स्त्रियाम्। कुण्डोध्नी। स्त्रियाम् किम्?—कुण्डोधो धेनुकम्? इह अनङ् अपि न। तद्विधौ "स्त्रियाम्" (वा) इत्युपसंख्यानात्।

A वहुव्रीहि ending in the word ऊधस् takes ङीष् in the fem. Thus we get in कुण्डम् इव 'ऊधो यस्याः=कुण्ड+ऊधस्+अनङ्=कुण्डोधन्+ङीष्=कुण्डोध्नी by the rule "अल्लोपोऽनः" । Why do we say स्त्रियाम् in the Vritti ?—Witness कुण्डोधो धैनुकम् i.e, a herd of cows having kunda-like udders. Here as कुण्डोधस् refers to धैनुकम् in the neuter (धेनूनां समूहः इति "अचित्तहस्तिधेनोष्ठक्" इति ठक् ; ठकस्य "इसुसुक्तान्तात् कः" इति कादेशः ), no ङीष् owing to non-reference to fem. gender, no अनङ् also comes for there is no reference to fem. gender here, there being स्त्रियाम् in the above rule also, and the varttika 'स्त्रियाम्' says that this is to be taken in the अनङ् विधि after the word ऊधस् in the वहुव्रीहि ।

मित—। कुण्डमिव ऊधः यस्याः सा कुण्डधन्+ङीष्=कुण्डोध्नी, "अल्लोपोऽनः" इति सूत्रेण ॥ 'स्त्रियाम्' इति वृत्तौ किमर्थम् उक्तम् ? कुण्डोधः इति नपुंसके सति ङीष् अनङ् च यथा न स्यात् तदर्थम् । धेनूनाम् समूहः इति "अचित्तहस्तिधेनोष्ठक्" इति ठकि तस्य "इसुसुक्तान्तात् कः" इति, कै सति धैनुकम् इति । नपुंसकद्योतनाय 'धैनुकम्' इति उक्तम् । अत्र स्त्रीत्वाभावात् ङीष् न अनङ् अपि न, तत्र "अनङ्विधौ" "स्त्रियाम्" इति वार्त्तिकेन स्त्रियाम् इत्यस्यग्रहणात् ॥ वहुव्रीहेरित्येव अत्रापि ज्ञेयम्, अन्यच तत्पुरुषे पीनोधाः प्राप्तोधाः इत्यादौ ङीष् न स्यात् ॥

## ४८५ । संख्याव्ययादे ङीप् । ४।१।२६ ॥

दी—। ङीषोपवादः । द्व्यूध्नी । अत्यूध्नी । वहुव्रीहेरित्येव—ऊधोऽतिक्रान्ता अत्यूधाः ( अत्र वहुव्रीहिसमासाभावात् अनङ् ङीषौ न भवतः ) ।

In a वहुव्रीहि समास if a numeral or an अव्यय precedes the word ऊधस् then it takes ङीप् । This bars ङीष् । So we get द्व्यूध्नी &c. All this applies to वहुव्रीहिसमास only. Witness अत्यूधाः without ङीष् &c. in तत्पुरुष ।

मित—। सुगमम् ॥

४८६ । दामहायनान्ताच्च । ४।१।२७ ॥

दी—। संख्यादेर्बहुव्रीहेर्दामान्तात् हायनान्तात् च ङीप् स्यात्। दामान्ते डाप्—प्रतिषेधयोः ('डाबुभाभ्यां—' इति डापः, "अनोबहु—" इति ङीप प्रतिषेधस्य च ) प्राप्तयोः, हायनान्ते ( अदन्तत्वात् ) टापि प्राप्ते वचनम्। द्विदाम्नी। अव्ययग्रहणाननुवृत्तेः 'उद्दामा वड़वा' इत्यत्र डाब्निषेधावपि पक्षे स्तः॥ द्विहायनी बाला॥ "त्रिचतुर्भ्यां हायनस्य णत्वं वाच्यम्' ( वा ) । "वयोवाचकस्यैव हायनस्य ङीब्णत्वं चेष्यते:' ( वा )— त्रिहायणी।चतुर्हायणी। वयसोऽन्यत्र—द्विहायना त्रिहायना, चतुर्हायना शाला।

A बहुव्रीहि preceded by some संख्यावाचक words and ending in the word दामन् or हायन takes ङीप् inthe fem.; बहुव्रीहि words ending in दामन् is to take optional डाप् by the rule "डाबुभाभ्याम्—" and optional ङीप् by "अनः उपधालोपिनः" and ङीप् प्रतिषेध by the rule "अनो बहुव्रीहिः", all these are barred by ङीप् in the present rule; and बहुव्रीहि words ending in हायन was to take अदन्तलक्षणटाप् and that is barred by ङीप् here. So we get द्विदाम्नी with ङीप् for the बहुव्रीहि द्विदामन् ends in दामन्; here the word अव्यय not coming down in this rule from the previous one we get उद्दामा वड़वा with optional डाप् and ङीप् निषेध by "अनो बहुव्रीहेः", for this rule does not apply here in उद्दामा वड़वा। In the matter हायन the instance is द्विहायनी बाला॥ The word हायन preceded by the words त्रि and चतुर् takes the cerebral ण; and in the matter of ङीप् and णत्व the word हायन meaning year ( वयस् ) is to be taken. Thus त्रिहायणी &c,, with cerebral, for हायन here refers to वयस्। But witness त्रिहायना without ङीप् and णत्व, for here हायन does not mean वयस्।

मित—। सुगमा।

४८७। नित्यं संज्ञाछन्दसोः । ४।१।२९ ॥

दी—। अन्नन्तात् बहुब्रीहेः उपधालोपिनः ङीप्स्यात् संज्ञाछन्दसोः। सुराज्ञी नाम नगरी। अन्यत्र पूर्वेण ("अन उपधालोपिनः—" इति पूर्व सूत्रेण) विकल्प एव। वेदे तु शतमूर्ध्नी।

Eng.—Easy.

मित—। "अन उपधालोपिनः" (४।१।२८) इत्येतावत् पूर्वसूत्रात् अनुवर्त्तते। तदाह—'अन्नन्तात् बहुब्रीहेः उपधालोपिनः" इत्यादि। "अन्यत्र" संज्ञायामद्योत्यायाम् 'पूर्वेण' "अन उपधा—" इतिपूर्वसूत्रेण विकल्पः एव॥

४८८। केवल-मामक-भागधेय-पापापरसमानार्य्यकृत-सुमङ्गल-भेषजाच्च ।४।१।३० ॥

दी—। एभ्यो नवभ्यो नित्यं ङीप् स्यात् संज्ञाछन्दसोः। 'अथोत इन्द्रः केवली विंशः। मामकी तनू। भागधेयी। पापी। अपरी। समानी। आर्य्यकृती। सुमङ्गली। भेषजी। अन्यत्र (लोके असंज्ञायां) केवला इत्यादि। मामकग्रहणं नियमार्थम् (नियमो यथा—लोके असंज्ञायाञ्च ङीप्-निवृत्त्यर्थम् इत्यर्थः)। अन्नन्तादेव सिद्धेः। तेन लोकेऽसंज्ञायाम् मामिका।

The nine words केवल, मामक, भागधेय, पाप, अपर, आर्य्यकृत, समान, सुमङ्गल and भेषज take ङीप् in the fem. while denoting संज्ञा (designation) and while used in Vedas. Thus केवली, मामकी, &c. In other place i.e., in classical usages and not denoting designation the forms are केवला &c. with टाप्। The inclusion of the word मामक (and so भेषज also) in the Sutra implies this rule e.g., in classical usages and in असंज्ञा, ङीप् will not come after मामक; and ङीप् is due after मामक by the rule "टिड्ढाणञ्—" for it is अणन्त।

So the form of मामक in the fem. ( in लोके and in असंज्ञा ) is मामिका with टाप्—and इत्व for अकार is by the rule "प्रत्ययस्थात् कात्—" ।

मित— । सुगमा ।

४८८ । अन्तर्वत्पतिवतोर्नुक । ४।१।३२ ॥

दी— । एतयोः स्त्रियां नुक् स्यात् । "ऋन्नेभ्यो ङीप्" ( ? इति ङीप् ) । "गर्भिण्यां जीवद्भर्तृकायां च प्रकृतिभागौ निपात्येते" ( वा ) । तत्र अन्तरस्त्यस्यां गर्भ इति विग्रहे अन्तःशब्दस्य अधिकरणशक्तिप्रधानतया अस्तिसामानाधिकरण्याभावात् अप्राप्तो मतुप् निपात्यते । 'पतिवत्नी' इत्यत्र तु वत्वं निपात्यते । अन्तर्वत्नी । पतिवत्नी ॥ प्रत्युदाहरणं तु अन्तरस्त्यस्यां शालायां घटः । पतिमती पृथिवी ॥

नुक् in the augment of these words (e.g., of अन्तर्वत् and पतिवत् ) when fem. affix follows. Then by the rule "ऋन्नेभ्यो ङीप्", ङीप् is added after these in the fem. These two words are irregularly formed in the senses of an enciente and of one whose husband is living. And the irregularity is now being shown in the formation of these words :—In the exposition अन्तरस्त्यस्याम्, the word अन्तर् is अधिकरणप्रधान and is thus not the कर्त्ता of अस्ति here, so मतुप् which cannot come here after अन्तर् is here irregularly ordered. And in पतिवत्नी, the वत्व in मतुप् is irregularly formed here. Thus we get अन्तर्वत्+नुक् ( न् )+ङीप्=अन्तर्वत्नी, so पतिवत्नी । These are formed in these above senses only, so in the counter instances अन्तरस्त्यस्यां शालायाम् &c. मतुप् cannot come, so also in पतिमती पृथिवी, वत्व is not ordered for here it refers to पृथिवी and not to 'one having husband living.'

मित— । अन्तर्वत्—पतिवत्शब्दयोः स्त्रियाम् नुगागमः स्यात् । कित्त्वात् अन्त्या-

देशः "आद्यन्तौ टकितौ" इति। ततः "ऋन्नेभ्यो ङीप्" इति नान्तलक्षणो ङीप् प्रवर्त्तते। तत्र विशेषमाह वार्त्तिककारः 'गर्भिण्यां जीवत्भर्त्तृकायां च यथाक्रमम् अन्तर्वत् पतिवत् इति प्रकृतिभागौ निपात्येते'। निपातप्रकारमाह—प्रथमे, अन्तरस्ति अस्याः इति विग्रहे अन्तःशब्दः अधिकरणप्रधान एव ततः 'अस्ति' इत्यस्य अकर्त्तृकारकत्वात् तेन सामानाधिकरण्याभावात् अन्तः शब्दे मतुप् न प्राप्तः, यतः अस्ति समानाधिकरणात् कर्त्तृकारकादेव मतुप् विधीयते। अनेन सूत्रेण च मतुवेव अन्तःशब्दे निपात्यते। द्वितीये पतिवत्शब्दे मतुपिसति वत्वं निपात्यते। ततः अन्तर्वत्नी इति॥ प्रथमे गर्भिण्यामेव मतुप् अन्यत्र न प्राप्नोत्येव। एवं पतिमतीपृथिवी इत्यत्र वत्वं न स्यात् यतः पतिमती इतिशब्दः जीवत्भर्त्तृकत्वं न द्योतयति॥

## ४६०। पत्युर्नो यज्ञसंयोगे। ४।१।३३॥

**दी—। पतिशब्दस्य नकारादेशः स्यात् यज्ञेन सम्बन्धे सति। वसिष्ठस्य पत्नी। तत्कर्त्तृकस्य यज्ञस्य फलभोक्त्री इत्यर्थः; दम्पत्योः सहाधिकारात्।**

न is ordered in the word पति in the fem. when there is connection (relation) with sacrifices. Then there is नान्तलक्षण ङीप्। Thus वसिष्ठस्य पत्नी means his wife having enjoyment along with him in sacrifices performed by Vasistha. And conjoined participation of the pair is enjoined in Mimansa Sastras.

मित—। सुगमा।

## ४६१। विभाषा सपूर्वस्य। ४।१।३४॥

**दी—। पतिशब्दान्तस्य सपूर्वस्य प्रातिपदिकस्य नो वा स्यात्। गृहस्य पतिः गृहपतिः—गृहपत्नी। 'अनुपसर्जनस्य' इति इहोत्तरार्थम् अनुवृत्तमपि न पत्युर्विशेषणं किन्तु तदन्तस्य। तेन बहुव्रीहौ अपि—दृढपत्नी—दृढपतिः। वृषलपत्नी—वृषलपतिः। अथ 'वृषलस्य पत्नी' इति व्यस्ते कथमिति चेत् ?**

न। पत्नीव पत्नी इत्युपचारात्। यद्वा—आचारक्विबन्तात् कर्त्तरि क्विप्; अस्मिंश्च पक्षे—पत्नियौ, पत्नियः इतीयङ् विषये विशेषः॥ सपूर्वस्य किम्?—गवां पतिः स्त्री।

न is optionally ordered after a crude word ending in the word पति—the base पति being preceded by some other word. Thus गृहपतिः without नकारादेश, and गृहपत्नी with नादेशः। Though 'अनुपसर्जनात्' comes down here also for its अनुवृत्ति at least in the following sutra, still it does not qualify the base पति, but qualifies the whole word ending in the word पति; then the whole पत्यन्त word must not be अनुपसर्जन to get नादेश by this rule. So in the बहुव्रीहि—दृढः पतिः यस्याः we get both दृढपतिः and दृढपत्नी; for here the whole 'दृढपति' is not उपसर्जन; so also वृषलपति and वृषलपत्नी are got. In the phrase वृषलस्य पत्नी, how can पत्नी be formed with नादेश, for a वृषल has no यज्ञसंयोग and how again can this rule apply for here पति is not सपूर्व i e. preceded by some other word? On this the answer is here पत्नी means पत्नीव by transference (उपचार)—a वृषल s पत्नी also being as alike द्विजस्य पत्नी owing to similarity of पाणिग्रहण—धर्म। Or—in such instances पत्नी is derived as पत्नीव आचरति इति पत्नी+आचारक्विबन्तात् क्विप्=पत्नी; but in this case the declension will be पत्नियौ—पत्नियः &c. with इयङ्। Why do we say सपूर्वस्य in the Sutra? Witness the example गवां पतिः स्त्री here पति not being पूर्वावयवयुक्त does not take नादेश at all.

मित—। 'पत्युः नः' इति पूर्वसूत्रात् अत्रैव। प्रातिपदिकग्रहणमपास्ति। तदाह—'पतिशब्दान्तस्य सपूर्वस्य प्रातिपदिकस्य'॥ 'अनुपसर्जनात्' इति यदत्रसूत्रे उत्तरार्थम् अनुवृत्तम्, तत् 'पत्युः' इत्यस्य न विशेषणं किन्तु 'तदन्तस्य' विशेषणम् तेन समन्तस्य पतिशब्दान्तस्य शब्दस्य अत अनुपसर्जनत्वेहि अत्रोक्तः विधिः प्रवर्त्तते, तेन दृढः पतिः

यस्याः इति बहुव्रीहौ नादेशविकल्पेन दृढपतिः—दृढपत्नी इति भवति ; अत्र पतिशब्दान्तस्य समस्तस्य नोपसर्जनत्वं तेन सूत्रं प्रवर्त्तत एव ॥ ननु वृषलस्य पत्नी इति व्यस्तप्रयोगे वृषलस्य यज्ञसंयोगाभावात् 'पत्नी'—शब्दस्य साधुत्वं पूर्वसूत्रेण न सम्भवति, सपूर्वत्वाभावात् सूत्रमिदमपि न प्रवर्त्तते । समाधानमाह—अत्र पत्नीशब्दः उपचारात् गौण्या वृत्त्या इत्यर्थः 'पत्नीव' पाणिग्रहणधर्मपुरस्कारेण द्विजभार्य्यावत् इत्यर्थे पर्य्यवस्यन् साधुः स्यात् ॥ यद्वा—आचारक्विबन्तात् कर्त्तरि क्विप् इत्यादि ॥ सूत्रे सपूर्वस्य कथमुक्तम्, प्रातिपदिकविशेषणतया पतिशब्दान्तत्वलाभात् ? गवां पतिः स्त्री अत्र पतिशब्दस्य पूर्वावयवत्वाभावे यथा न स्यात् ॥

### ४६२ । नित्यं सपत्न्यादिषु । ४।१।३५ ॥

**दी— । पूर्वविकल्पापवादः । समानस्य सभावोपि निपात्यते । समानः पतिर्यस्याः सा सपत्नी । एकपत्नी । वीरपत्नी ।**

Eng.—Easy.

मित— । सपत्न्यादिषु नित्यं पत्युर्नकारादेशो भवति, ङीप् तु लभ्यते एव । पूर्वेण विकल्पे प्राप्ते वचनम् इति इदं सूत्रं पूर्वस्य अपवादभूतम् एव ॥ आरम्भसामर्थ्यादेव सिद्धे 'नित्यं' ग्रहणमपि विस्पष्टार्थम् । समानादिषु इति वक्तव्ये समानस्य सभावार्थं वचनम् । इहगणे समानः एक, वीर, पिण्ड श्व भ्रातृ, पुत्र भद्र इति पठिताः ॥

### ४६३ । पूतक्रोतोरै च । ४।१।३६ ॥

**दी— । अस्यस्त्रियाम् ऐ ( ऐकारः ) आदेशो ङीप् च । "इयं त्रिसूत्री पुंयोगे एवेष्यते" ( वा ) पूतक्रतोः स्त्री पूतक्रतायी । यया तु क्रतवः पूताः स्यात् पूतक्रतुरेव सा'** ( अत्र पुंयोगाभावात् 'ऐ' ङीप् च न ) ॥

The word पूतक्रतु takes ऐकार and ङीप् in the fem. The three sutras beginning with this takes ङीप् &c. in connection with the male only i.e., in the sense of the wife of a male. Thus पूतक्रतायी in पुंयोगे ; but without पुंयोगे we get पूतक्रतुः । [As already said this पुंयोग is to be taken in the following two sutras also.]

मित—। इतः आरभ्य त्रयः योगाः पुंयोगप्रकरणे द्रष्टव्याः तेन पुंयोगे एवात्र ङीबादयः भवन्ति। अन्यथा यया क्रतवः पूताः सा पुंयोगाभावात् ङीबाद्यभावे पूतक्रतुरेव॥

४६५। वृषाकप्यग्निकुसित कुसिदानामुदात्तः। ४।१।३७॥

दी—। एषामुदात्तः 'ऐ' आदेशः स्यात् ङीप् च। वृषाकपेः स्त्री वृषाकपायी। "हरिविष्णू वृषाकपी" इत्यमरः। "वृषाकपायी श्रीगौर्य्योः" इति च। अग्नायी। कुसितायी। कुसिदायी। कुसिदशब्दो ह्रस्व-मध्यो न तु दीर्घमध्यः।

The bases वृषाकपि, अग्नि, कसित and कुसिद takes ऐकारादेश when fem. ङीप् follows—and this 'ऐ' आदेश is उदात्त here. Thus we get वृषाकपायी &c, in पुंयोगे। The word कुसिद here is to be spelt as with ह्रस्वइकार in the middle and not with दीर्घईकार॥

मित—। सुगमा।

४६५। मनोरौ वा। ४।१।३८॥

दी—। मनुशब्दस्य औकारादेशः स्यात् उदात्त—ऐकारश्च वा। ताभ्यां सन्नियोगशिष्टो ङीप् च। मनोः स्त्री मनावी—मनायी—मनुः।

The word मनु takes औकारादेश and उदात्त ऐकारादेश also when ङीप् follows (and in पुंयोगे)। The word 'वा' here indicates विकल्प of these. So in the absence of these आदेश, ङीप् also does not come in by the परिभाषा "सन्नियोगशिष्टानां सह वा प्रवृत्तिः सहवा निवृत्तिः"—i.e., all the enjoinings made at a time either come together or disperse together. So if औकाराद्यादेश &c., disappear then ङीप् too. Hence in the third form without आदेश, ङीप् does not come giving the form मनुः only.

मित—। ऐ उदात्तः इति वर्त्तते। तदाह—'मनुशब्दस्य औकारादेशः इत्यादि॥ वा ग्रहणेन द्वावपि विकल्प्येते। ततश्च तदुभयाभावपक्षे ङीबपि न भवति "सन्नियोग-शिष्टानां सहवा प्रवृत्तिः सहवा निवृत्तिः" इति परिभाषावलात्॥ ततः मनावी—मनायी—मनुः—इति पदत्रयं सिध्यति॥

## ४६६। वर्णादनुदात्तात्तोपधात्तो नः। ४।१।३९॥

वृ—। वर्णवाची योऽनुदात्तान्तः तोपधः तदन्तात् अनुपर्जनात् प्रातिपदिकात् वा ङीप् स्यात्, तकारस्य नकारादेशश्च। एनी—एता। रोहिणी—रोहिता। वर्णानां त-ण-ति-णि-तान्तानाम्' इति फिट् सूत्रेण आद्युदात्तः। 'त्र्येण्या शलल्या' इति गृह्यसूत्रम्, त्रीणयेतानि यस्याः इति बहुव्रीहिः॥ अनुदात्तात् किम्—श्वेता; "घृतादीनां च" इति अन्तोदात्तोऽयम्। अत इत्येव—शितिः स्त्री। 'पिशङ्गादुपसंख्यानम्' (वा)—पिशङ्गी, पिशङ्गा। "असितपलितयोर्न" (वा)—असिता पलिता। 'छन्दसि क्नमेके' (वा)—असिक्नी, पलिक्नी। अवदातशब्दस्तु न वर्णवाची, किन्तु विशुद्धवाची, तेन अवदाता इत्येव॥

After an अनुपसर्जन crude word having तकार as its penultimate letter and ending in अनुदात्त pronunciation and denoting some colour, ङीप् optionally comes and in case of ङीप् its त is changed to नकार। Thus 'एत' meaning 'white' gives एनी and एता in the fem. Similarly रोहिणी and रोहिता in the fem. (when ङीप् does not come then तकार does not change into नकार)। And by the फिटसूत्र "वर्णानां त-ण ति-णि तान्तानाम्" here the first vowel is उदात्त and so the last one अनुदात्त। Here the अनुवृत्त word अनुपसर्जनात् qualifies the whole word वर्णान्त and not वर्ण merely, so the use "त्रेण्या शलल्या" in the Grihya Sutra is justified where एत is उपसर्जन but the whole एतान्त is not उपसर्जन, so the rule applies. 'त्रीणि एतानि

श्वेतानि यस्याः इति बहुव्रीहौ वेतशब्दः। अस्य स्त्रियाम् ङीप्-नादेशौ, तेन वेत्रणी। Here णत्व is आर्षप्रयोग। And शलली means अङ्गरुहा सूची of a variety of deer known as शल्यक। Why do we say अनुदात्तात् in the sutra?—Witness श्वेता without ङीप् and नत्व, for here श्वेत is अन्तोदात्त। Here अतः also comes down, so in शितिः we do not get ङीप् and नत्व for it is not अदन्त॥ The base पिशङ्ग is neither तोपध nor अनुदात्तान्त still ङीप् after it is enjoined by the Varttika here. Thus in thiscase ङीष् by the following rule is barred. In the case of असित and पलित, the usual ङीप् and नत्व are prohibited. In Veda these take ङीप् with क्नादेश as well yielding असिक्नी and पलिक्नी। The word अवदात is not वर्णवाची so to say but implies purity only cp. "अवदातः सिते शुद्धे"। So it is अनुदात्तान्त and तोपध still not being वर्णवाटी, ङीप् and नत्व do not come here.

मित—। 'वा' इति 'ङीप्' इति च वर्त्तेते। 'अनुदात्तात्' इति 'वर्णात्' इत्यस्य विशेषणम्; तदन्तविधिः। अनुदात्तान्तात् वर्णान्तात् प्रातिपदिकात् इत्यर्थः॥ अनुपसर्जनात् इत्यस्तेव, तच्च 'वर्णान्तात्'इति समुदायस्य विशेषणम् न तु केवलस्य 'वर्णवाचिनः' तेन बहुव्रीहौ अपि सूत्रस्य प्रवृत्तिरस्ति यथा "विभाषा सपूर्वस्य" इति सूत्रे। सर्वमेतत् अनुपदमेव 'वेत्रण्या शलल्या' इत्यत्र बहुव्रीहौ स्फुटी कृतम्॥ तः उपधा यस्य, तस्मात्; 'वर्णात्' इत्यस्य विशेषणम्। तदाह—'वर्णवाची योऽनुदात्तान्तः तोपधः इत्यादि॥ ङीपि सति तकारस्य नादेशः, ङीवभावे तु नकारादेशो न स्यात् इति सन्नियोगशिष्टपरिभाषया ज्ञेयम्॥ ततश्च श्वेतवचनात् एतशब्दात् स्त्रियाम् एनी-एता इति। 'अनुपसर्जनात्' इत्यस्य वर्णान्तविशेषणत्वमेव युक्तम् इत्यभिप्रेत्योदाहरति—"वेत्रण्या शलल्या' इति गह्यम्। अत्र बहुव्रीहौ एतशब्दस्य उपसर्जनत्वेऽपि समुदायस्य वेतशब्दस्य न उपसर्जनत्वम्। अतः सूत्रमेतत् प्रवर्त्तते। शल्यकाख्यमृगविशेष्य अङ्गरुहा सूची—शलली इति। 'वेत्रण्या' इत्यत्र णत्वमार्षम्॥ 'अनुदात्तात्' इति सूत्रे उक्तत्वात् श्वेत इति अन्तोदात्तत्वे न स्यात्। 'अतः' अदन्तात् इत्यर्थः अत्रापयस्ति ततः शितिः इत्यत्र

अदन्तत्वाभावात् ङीवन्नादेशौ न भवतः ॥ पिशङ्ग शब्दस्य अनुदात्तान्तत्वेपि तोपधत्वाभावाच्च अप्राप्ते सूत्रे, परसूत्रेण ङीषि च प्राप्ते, ङीवर्थं वार्त्तिकम् ॥ असितपलितशब्दे ङीप् नादेशे प्राप्ते, स वार्य्यते। एतयोः छन्दसि ङीप् क्नादेशश्च भवतः ॥ अवदातशब्दस्य गौरवाचित्वेपि वस्तुतः अयं विशुद्धवाची एव. दैपशोधने इत्यस्मात्धातोः तप्रत्ययेन साधनात् ॥ ततश्च अन्तोदात्तान्तात् तोपधत्वाच्च नात्र ङीप्—नादेशौ इति भाष्ये "पुंयोगादाख्यायाम्" इति सूत्रे द्रष्टव्यम् ॥

## ४८७। अन्यतो ङीष्। ४।१।४०

दी—। तोपधभिन्नात् वर्णवाचिनोऽनुदात्तान्तात् प्रातिपदिकात् स्त्रियां ङीष् स्यात्। कल्माषी। सारङ्गी। 'लघावन्ते द्वयोश्च बह्वषो गुरुः' इति फिट् सूत्रेण मध्योदात्तौ (शिष्टस्वरेण अनुदात्तान्तौ) एतौ ॥ अनुदात्तात् किम् ?—कृष्णा, कपिला; (फिटस्वरेण अन्तोदात्तौ एतौ)॥

Eng.—Easy.

मित—। सुगमा।

## ४८८। षिद्गौरादिभ्यश्च। ।१।४५३॥

दी—। षिद्भ्यो गौरादिभ्यश्च ङीष् स्यात्। नर्त्तकी (नृत+ष्वुन्=नर्त्तकः। षित्वात् ङीष् ततः नर्त्तकी); गौरी। "अनडुहः स्त्रियाम् आम् वा" (वा)—अनडुही, अनड्वाही। "पिप्पल्यादयश्च" (गणसूत्र)। आकृतिगणोयं (गौरादिः)॥

Eng.—Easy.

मित—। नर्त्तकी इति षित्वे उदाहरणम्। अत्र शिल्पिनि ष्वुन्। एवं रजकी। गौरादिर्यथाः—गौर; मत्स्य (अस्य उत्तरसूत्रे ङीषि विशेषः वक्ष्यते), मनुष्य, शृङ्ग, हय, गवय, मुकय, ऋष्य, पट, द्रुण, द्रोण, हरिण, काकन, पटर, उणक, आमलक, कुवल बदर, विम्ब, तर्कार, शर्कार, पुष्कर, शिखण्ड, सुषम, अलिनन्द, गुडुल, आनन्द, सुपाठ, सृगेठ, आढक, शष्कुल, भूर्म, सुर, सूर्य्य (ङीषि विशेषः उत्तरसूत्रे द्रष्टव्यः), पूष, सूष,

घातक, सर्कसूक, सल्लक, मालक, भालत, सालूक, वेतस, अतस, पृस, मह, मठ, छेद, श्वन् ( अत्र नान्तलक्षणे ङीपि प्राप्ते ङीषर्थम् वचनम् ). तक्षन्, अनडुही, अनड्वाही ( गौरादिगणे ङीषि आम्विकल्प निपातनात्, "अनडुहः स्त्रियाम्" इत्यादि वार्त्तिकम् न युक्तम् ), एषण, देह, काकादन, गवादन, तेज, रजन, लवण, पान, मेध, गौतम, आप, स्थूण, भौरि, भौलिकि, भौलिङ्गि, औदगाहमानि, आलिङ्गि, आपिच्छिक, आरट, टोट, नट, नाट, मूलाट, शतन, पातन, पावन, आस्तरण, अधिकरण, एत, अधिकार, आग्रहायनी, प्रत्यवरोहिणी, सेवन, सुमङ्गलात् संज्ञायाम्, सुन्दर, मण्डल, पट, पिसु, विटक, कूर्द, गूर्द, पाण्ठ, लोपाण्ठ, कन्दर, कन्दल, तरुण, तलुन, बृहत्, महत्, सौधर्म, रोहिणी ( नक्षत्रे ), रेवती ( नक्षत्रे ),, विकल, निष्कल, पुष्कल "कटात् श्रोणिवचने", "पिप्पल्यादयश्च" ( पिप्पलशब्दस्य जातिवाचित्वे नियतस्त्रीत्वात् ङीषोप्राप्ते रिहवचनम् ), पिप्पली, हरितकी, कोशातकी, शमी, वरीशरी, पृथिवी, क्रोष्ट्री, मातामही, पितामही, ( मातृमाता पितृमाता इति विग्रहे डामहचः षित्वे "मातरि षिच्च" इत्यनेन विहितम् । षित्वादेव ङीषि सिद्धे ज्ञापनार्थं वचनम् । अनित्यः षिल्लक्षणो ङीष् इति, तेन दंष्ट्रा इति अङीषि उपपन्नं भवति । सर्वमेतत् उत्तरसूत्रे उक्तम् ) ।

## ४८८ । सूर्य्यतिष्यागस्त्य मत्स्यानां य उपधायाः । ६।४।१४९ ॥

**दी— । अङ्गस्योपधायाः यस्य लोपः स्यात् स चेत् यः सूर्य्याद्यवयवः । "मत्स्यस्य ङ्याम्" ( वा ) । "सूर्य्यागस्त्ययोश्छे च ङ्यां च" ( वा ) । "तिष्यपुष्ययोर्नक्षत्राणि यलोप इति वाच्यम्" ( वा ) । मत्सी । ( एवं सौरीयः सौरी, आगस्तीयः, आगस्ती, तैषी, पौषी वा रात्रिः ) ॥ "मातरि षिच्च" ( वा ) इति षित्वादेव सिद्धे गौरादिषु मातामहीशब्द—पाठात् अनित्यः षितो ङीष् । ( तेन दंष्ट्रा ।**

The penultimate यकार of a base ( अङ्ग ) elides if that यकार be a part of the words सूर्य्य तिष्य अगस्त्य and मत्स्य । The word मत्स्यस्य elides its य when ङी follows, words सूर्य्य and अगस्त्य elide their य when छप्रत्यय and ङी follow. And य of तिष्य and पुष्य elides when there is अण

after these by the rule 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्'। Thus मत्सी, सूरी, अगस्ती &c. are formed. The डामहच् प्रत्यय after the word मातृ in the sense मातुः माता is rendered षित् by the Varttika "मातरि षिच्च" and then षित्व should give ङीष after it, but still it is included in the गौरादि list. This shows that षित्निमित्त ङीष् is not obligatory; so दंष्ट्रा though ending in the षित् प्रत्यय— takes टाप् and not ङीष्।

मित—। सूर्यादीनामङ्गानामुपधया यस्य लोपः इति अत्र न व्याख्यातव्यम्। तथा सति सौरी बलाका इति न सिध्यति। अत्र सूर्येणैकदिक् इत्यर्थे "तेनैकदिक्" इति अणि ततश्च ङीपि अणन्तमङ्गम्, न तु सूर्यशब्दः अङ्गम्। ततः अस्य उपधायस्य लोपो न स्यात्, ततश्च दीक्षितस्यवृत्तिः—" अङ्गस्य उपधायाः यस्य लोपः इत्यादि॥ तिष्यपुष्ययोः इत्यादिः—"सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्" इति विहिते नक्षत्रसम्बन्धिणि अणि परतः तिष्यपुष्ययोर्यलोपः स्यात् इत्यर्थः॥ 'मातरिषिच्च' इत्यस्य व्याख्या पूर्वसूत्रस्य मितभाषिण्यां द्रष्टव्या॥

५०० । **जानपद-कुण्ड-गोण-स्थल-भाज-नाग-काल-नील-कुश-कामुक-कबरात् वृत्ति-अमत्र-आवपन-अकृत्रिमा-श्राणा-स्थौल्य वर्ण-अनाच्छादन-अयोविकार-मैथुनेच्छा-केश-वेशेषु । ४।१।४२ ॥**

दी—। एभ्यः एकादशभ्यः प्रातिपदिकेभ्यः क्रमात् वृत्त्यादिषु अर्थेषु ङीष् स्यात्। जानपदी वृत्तिश्चेत्। अन्या तु जानपदी; उत्सादित्वात् अञन्तत्वे "टिड्ढा—" इति ङीपि आद्युदात्तः (ङीषि ङीपि सति स्वरे एव विशेषः)। कुण्डी अमत्रं (पात्रं) चेत्; कुण्डा अन्या; कुडि दाहे, 'गुरोश्चहलः' इति अप्रत्ययः; यस्तु 'अमृते जारजः कुण्डः' इति मनुष्यजातिवचनः (कुण्डशब्दः)। ततो जातिलक्षणो ङीष् भवत्येव; अमत्रे हि स्त्रीविषयत्वात् (नित्यस्त्रीत्वात्) अप्राप्तो ङीष् विधीयते, न तु नियम्यते।

गोणी आवपनं चेत्; गोणा अन्या। स्थली अकृत्रिमा चेत्, स्थला अन्या। भाजी श्राणा चेत् ("यावागूश्राणिका श्राणा"); भाजान्या। नागी स्थूला चेत्, नागा अन्या; (नागशब्दस्य स्थौल्ये अप्रसिद्धिः वदति—) गजवाची नागशब्दः स्थौल्यगुणयोगात् अन्यत्र प्रयुक्त उदाहरणम्; सर्पवाची तु नागशब्दः दैर्घ्यगुणयोगात् अन्यत्र प्रयुक्तः प्रत्युदाहरणम् (ततश्च नागी इत्यत्र गजवाचिनः, नागा इत्यत्र सर्पवाचिनः एव ग्रहणम्)। काली वर्णश्चेत्, काला अन्या। नीली अनाच्छादनं चेत्; नीला अन्या—नील्या रक्ता शाटीत्यर्थः, "नील्याः अन् वक्तव्यः" (वा) इत्यन्। अनाच्छादनेपि न सर्वत्र, किन्तु "नीलादौषधौ" (वा) नीली; "प्राणिनि च" नीली गौः। "संज्ञायां वा"—नीली—नीला। कुशी अयोविकारश्चेत्। कुशा अन्या। कामुकी मैथुनेच्छाचेत्, कामुकान्या। कबरी केशानां सन्निवेशश्चेत्। कबरा अन्या—चित्रा इत्यर्थः।

Eng—Easy.

मित— सुगमा॥

## ५०१। शोणात् प्राचाम्। ४।१।४३॥

दी—। शोणी—शोणा (शोणशब्दः वर्णवाची अनुदात्तान्तः; "अन्यतो ङीष्" इति नित्यं ङीषि प्राप्ते विकल्पार्थं वचनम्)।

Eng—Easy.

## ५०२। वोतो गुणवचनात्। ४।१।४४॥

दी—। उदन्तात् गुणवाचिनो वा ङीष् स्यात्। मृद्वी—मृदुः। उतः किम्?—शुचिः। 'गुणः—' इति किम्?—आखुः; (मूषिकवाची अयं अतः न ङीष्)। "खरुसंयोगोपधान्न" (वा) 'खरुः पतिंवरा कन्या'; पाण्डुः (संयोगोपधत्वात् न ङीष्)।

After गुणवाचिन् words ending in उकार, ङीष् optionally comes. Thus मृदु being a गुणवाची word ङीष् is optional here yielding

मृद्वी + मृदुः। Why do we say उतः in the sutra ?—Witness शुचिः without ङीष् for it does not end in उ। Why do we say 'गुणवचनात्' in the sutra ?—Witness आखुः (a mouse) without ङीष्, for it is not a गुणवचन word. The word खरु and संयोगोपध words though ending in उ does not take ङीप् in the fem. Witness खरु and पाण्डुः &c. without ङीष्।

मित—। वा उतः गुणवचनात् इति छेदः। उदन्तात् गुणवाचिनः प्रातिपदिकात् ङीष् वा स्यात् इत्यर्थः॥ अन्यत् सुगमम्॥

५०३। **बह्वादिभ्यश्च। ४।१।४५॥**

**दी—। एभ्यो वा ङीष् स्यात्। (बहुशब्दस्य संख्यावाचित्वात् गुणावचनात्वाभावात् ङीषि अप्राप्ते वचनम्)। बह्वी—बहुः॥ "कृदिकारात् अक्तिनः—(राधातु+त्रिप्=रात्रि) रात्रिः, रात्री (गुणवचनत्वाभावात् उदन्तत्वाभावाच्च अप्राप्ते वार्त्तिकम्)॥ सर्वतोऽक्तिन्नर्थात् इत्येके— शकटिः—शकटी। अक्तिन्नर्थात् किम् ?—अजननिः** (तथा बालमनोरमा "स्त्रियां क्तिन्' इत्यधिकारे 'आक्रोशे नञ्यनिः' इति नञि उपपदे जनेरनिप्रत्ययः अक्तिन इत्युक्तौ अत्र निषेधो न स्यात्। अतः अक्तिन्नर्थात् इत्युक्तिः)॥ (हन + क्तिन् = हति। पादाभ्यम् हतिः = पद्धतिः इति) **क्तिन्—अन्तत्वात् अप्राप्ते विध्यर्थं पद्धतिशब्दो गणेपठ्यते। "हिमकाषिहतिषु च"** (सूत्र ११२ इति पद्भावः) **पद्धतिः— पद्धती।**

Eng.—Easy.

मित—। सुगमा॥ बह्वादिगणोयथा—बहु, पद्धति, अङ्कति, अञ्चति, अंहति, शकटि, शक्तिः शस्त्रे, शारि, वारि, राति, राधि, शाधि, अहि, कपि, यष्टि, मुनि, इतः प्राण्यङ्गात्, "कृदिकारादक्तिनः" सर्वतोक्तिन्नर्थात् इत्येके। चण्ड, अराल, कृपण, कमल विकट, विशाल, विशङ्कट, भरुज, ध्वज, चन्द्रभागा नद्याम्, कल्याण, उदार, नूपुराणा, अह॥

५०४। **पुंयोगादाख्याम्।** ४।१।४८॥

**दी—। या पुमाख्या पुंयोगात् स्त्रियां वर्त्तते ततो ङीष् स्यात्। गोपस्य स्त्री गोपी। "पालकान्तात् न"** ( पुंयोगि ङीष् न )। **गोपालिका, अश्वपालिका। "सूर्य्यात् देवतायां टाप् वाच्यः ( वा )—सूर्य्यस्य स्त्री देवता सूर्य्या। देवतायां किम्?—सूरी कुन्ती, मानुषीयम्।** ( अत्र 'सूरी' इत्यस्य मानुषवाचित्वात्, ङीषि "सूर्य्यतिष्य—" इति यलोपे 'सूरी' इति )।

The word that signifies a male i.e., the designation of a male takes ङीष् in the fem. (in connection with the male). Thus गोपस्य स्त्री = गोपी।

Rest Easy.

मित—। सुगमा।

५०५। **इन्द्र-वरुण-भव-शर्व-रुद्र-मृड-हिमारण्य यव-यवन-मातुलाचार्य्याणामानुक्।** ४।१।४९॥

**दी—। एषामानुगागमः स्यात् ङीष् च। इन्द्रादीनां षण्णां मातुलाचार्य्ययोश्च पुंयोगे एव इष्यते। तत्र** ( "पुंयोगादाख्यायाम्" इत्यनेन ) **ङीषि सिद्धे आनुगागममात्रं विधीयते। इतरेषां चतुर्णां** ( हिमारण्य यवयवनानाम् आनुक् ङीष् च इति ) **उभयम्** ( विधीयते ; अत्र पुंयोगस्य असम्भवत्वात् )। **इन्द्राणी॥ "हिमारण्ययोर्महत्त्वे" ( वा )—महद्धिमं हिमानी। अरण्यानी। "यवाद्दोषे" ( वा )—दुष्टो यवः यवानी। "यवनात् लिप्याम्" ( वा )—यवनानां लिपिः** ( अक्षर-विन्यासः ) **यवनानी** ( एषां हिमादिशब्दानां स्त्रीत्वाभावात् अर्थविशेषे आनुग् ङीषविधानार्थं वार्त्तिकम् )॥ **"मातुलोपाध्याययोरानुक् वा" ( वा ) मातुलानी, मातुली। उपाध्यायानी-उपाध्यायी** ( पुंयोगि मातुलस्य विकल्पार्थम्, उपध्यायस्य अप्राप्तस्य पुंयोगि एव विधानार्थं वार्त्तिकम् )॥ **"या तु स्वयमेव अध्यापिका तत्र वा ङीष् वाच्य" ( वा )—उपाध्यायी, उपाध्याया। "आचार्य्यादणत्वं च" ( वा )—आ-**

21

चार्य्यस्य स्त्री आचार्य्यानी पुंयोगे ; इत्येव । [ वार्त्तिकेनात्र णत्वं वार्य्यते ) ॥ आचार्य्या स्वयं व्याख्यात्री ॥ "अर्य्यक्षत्रियाभ्यां वा स्वार्थे" ( वां ) तेनात्र पुंयोगे न वर्त्तते )—अर्य्याणी, अर्य्या । स्वामिनी वैश्या वा इत्यर्थः । क्षत्रियाणी क्षत्रिया ; ( अपुंयोगार्थमिदं वार्त्तिकम् ततः आह )—पुंयोगे तु—अर्य्यी, क्षत्रियी ॥ ( अत्र सूत्रे ब्रह्मणशब्दस्य अपाठात्— ) कथं ब्रह्माणीति ? ब्रह्माणमानयति जीवयतीति कर्मण्यण् ( ततः स्त्रियाम् "टिड्ढाणञ्—" इति ङीप् ) ॥

Eng.—Easy.

मित—। सुगमा ।

५०६ । क्रीतात् करणपूर्वात् । ४।१।५० ॥

दी—। क्रीतान्तात् अदन्तात् करणादेः स्त्रियां ङीष् स्यात् । वस्त्रक्रीती । क्वचित् न—धनक्रीता ।

After an अदन्त प्रातिपदिक ending in the word क्रीत and preceded by some करणयुक्त word (i.e., word in the instrumental case) ङीष comes in the fem. Thus वस्त्रेण क्रीता=वस्त्रक्रीत+ङीष्=वस्त्रक्रीती ॥ This rule does not apply in some instances e.g., धनक्रीता, सुक्रीता &c.

मित—। 'अतः' 'प्रातिपदिकात्' इतिद्वयमत्र वर्त्तते । तदाह—'क्रीतान्तात् अदन्तात्' इत्यादि ॥ ननु वस्त्रेणक्रीता इत्यत्र क्रीता इत्यादन्तं प्रातिपदिकं न तु अदन्तम् तत्कथमस्य सूत्रस्य प्राप्तिरिति चेत् । तदा अत्र अलौकिकविग्रहवाक्यमेव प्रक्रियास्तु । ततः वस्त्र टा क्रीत इति जाते गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः इति सुबुत्पत्तेः प्रागेव क्रीतशब्देन समासे अत्र अदन्तत्वम् सुस्थितमेव इत्यास्तां तावत् ॥

५०७ । क्तादल्पाख्यायाम् । ४।१।५१ ॥

दी—। करणादेः क्तान्तात् अदन्तात् स्त्रियां ङीष् स्यात् अल्पत्वे द्योत्ये । अभ्रलिप्ती द्यौः । अल्पाख्यायाम् किम् ?—चन्दनलिप्ता अङ्गना ।

After a क्तान्तप्रातिपदिक ending in अकार and having a word in the instrumental case preceding ङीष् comes in the fem. if अल्पत्व (with reference to the करण or क्रिया is implied). Thus अभ्रैर्लिप्ता = अभ्रलिप्ती द्यौः the sky lightly covered by clouds. Why do we say अल्पाख्यायाम् in the sutra? Witness चन्दनलिप्ता अङ्गना where all-over anointment (besmearing) is implied.

मित—। पूर्वसूत्रवत् ज्ञेया ॥

५०८। बहुव्रीहेश्चान्तोदात्तात्। ४।१।५२॥

दी—। बहुव्रीहेः क्तान्तात् अन्तोदात्तात् अदन्तात् स्त्रियां ङीष् स्यात्। "जातिपूर्वात् इति वक्तव्यम्" (वा)—तेन 'बहु-नञ्-सुकालसुखादिपूर्वात् न (अत्र अन्तोदात्तेऽपि जातिपूर्वत्वाभावात् निषेधः)। ऊरुभिन्नी। नेह—बहुक्रीता। "जातान्तात् न" (वा) दन्तजाता। "पाणिगृहीती भार्यायाम्" (वा); पाणिगृहीता अन्या।

A बहुव्रीहि which is अन्तोदात्त and ending in an अकारान्त but क्तान्त प्रातिपदिक takes ङीष् in the fem. The Varttika here says that in this the prior word should be जातिवाचक। So a बहुव्रीहि preceded by बहु, नञ्, सुकाल, सुख &c. though अन्तोदात्त and may be क्तान्त, still will not take ङीष् being not preceded by a जातिवाचक word. Thus ऊरुभिन्नी with ङीष् and बहुक्रीता without ङीष्। A बहुव्रीहि ending in the word जात however does not take ङीष्। And पाणिगृहीती is formed in the sense of भार्या (wife); otherwise the form is पाणिगृहीता (caught in the hands).

मित—। पूर्ववत् अत्रानुवृत्तिर्ज्ञेया। ऊरू भिन्नौ असंयुक्तौ यस्याः इति बहुव्रीहिः। 'निष्ठा' इत्यनेन भिन्नशब्दस्य पूर्वनिपातत्वं न "जातिकालसुखादिभ्यः परानिष्ठा वाच्या" इति तन्निषेधात्। जातिलक्षणं तु दीक्षितः स्वयमेव "जातेरस्त्रीविषयात्—"

इति सूत्रे कथयिष्यति ॥ बहुक्रीता इत्यत्र प्रक्रिया तु ऊरुभिन्नीवत्। एवं अकृता मासजाता, सुखजाता, दुःखजाता इत्यादीनि प्रत्युदाहरणानि ॥ अन्यत्सुगमम् ॥

५०९। अस्वाङ्गपूर्वपदाद्वा । ४।१।५३ ॥

दी—। पूर्वेण नित्ये प्राप्ते विकल्पोऽयम्। सुरापीती—सुरापीता। अन्तोदात्तात् किम् ?—वस्त्रच्छन्ना ( प्रक्रियातु ऊरुभिन्नीवत् ॥ अत्र अन्तोदात्तत्वं नास्ति, तदाह— ) 'अनाच्छादनात्' इत्यत्रोदात्तनिषेधः। अत एव पूर्वेणापि न ङीष्।

Eng.—Easy.

मित—। "अस्वाङ्गं यत्पूर्वपदं तस्मात्परं यत् क्तान्त तदन्तात् बहुव्रीहेः ङीष् वा स्यात्" इति सूत्रार्थः। स्वाङ्गलक्षणं तु उत्तरसूत्रे द्रष्टव्यम् ॥ अन्यत्सुगमम् ॥

५१०। स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्। ४।१।५४ ॥

दी—असंयोगोपधम् उपसर्जनं यत् स्वाङ्गं तदन्तात् अदन्तात् प्रातिपदिकात् वा ङीष्। केशानतिक्रान्ता अतिकेशी अतिकेशा। चन्द्रमुखी—चन्द्रमुखा। संयोगोपधात् तु—सुगुल्फा। उपसर्जनात् किम् ?—शिखा ॥ स्वाङ्गं त्रिधा—( प्रथमं यथा )—अद्रवंमूर्त्तिमत् स्वाङ्गं प्राणिस्थमविकारजम्। सुस्वेदा, द्रवत्वात्; सुज्ञाना, अमूर्त्तत्वात्। सुमुखा शाला, अप्राणिस्थत्वात्। सुशोफा विकारजत्वात् ॥ ( द्वितीयं यथा ) अतत्स्थं तत्र दृष्टं च—सुकेशी सुकेशा वा रथ्या। प्राणिस्थस्यापि प्राणिनि दृष्टत्वात् ॥ (तृतीयं यथा) तेन चेत् तत् तथायुतम्। सुस्तनी सुस्तना वा प्रतिमा ; प्राणिवत् प्राणिसदृशे स्थितत्वात् ॥

An अकारान्त प्रातिपदिक ending in a स्वाङ्गवाचक word (i.e., word denoting some bodied limbs) which has not a conjunct penultimate and which is उपसर्जन i.e., subordinate in a समास, takes ङीष् optionally in the fem. Thus केशानतिक्रान्ता gives अतिकेशी (with ङीष्) and अतिकेशा (without ङीष्)। Similarly चन्द्रमुखी and चन्द्र-

सुखा। In the case of संयोगोपध स्वाङ्ग word, ङीष् does not come in, e.g., सुगुल्फा (here the penultimate is a conjunct consonant, so no ङीष् here). Why do we say उपसर्जनात् in the sutra? Witness the independent word शिखा without ङीष् (for it is not उपसर्जन here). The word स्वाङ्ग is explained in three ways—(i) first: A स्वाङ्ग is non-liquid, having shape, existing in an animate one, and not due to deformity or disease. So we get सुस्वेदा without ङीष्, for it is liquid and cannot be a स्वाङ्ग। सुज्ञाना without ङीष्, for it has no shape; सुमुखा शाला also without ङीष्, for here 'मुख' is not of an animate one; सुशोफा also without ङीष्, for शोफ (swelling) is due to deformity and disease. (ii) Secondly a स्वाङ्ग is one which though not in an animate being for the time, should still be seen in the animate one. Thus we get सुकेशी and सुकेशा वा रथ्या, for here though केश is not of an animate one, is still seen there, so optional ङीष् here. (iii) Thirdly, a स्वाङ्ग is one by which an inanimate one is endowed like an animate by some limb seen in animate ones. Thus सुस्तनी—सुस्तना वा प्रतिमा। Here ङीष् optionally comes, for प्रतिमा is like an animate one and the limb is like that seen in animate ones.

मित—। 'उपसर्जनात्' 'असंयोगोपधात्' इति इयं 'स्वाङ्गात्' इत्यस्य विशेषणम्। अविद्यमानः संयोगः यस्या बहुव्रीहिः। तादृशी उपधा यस्य, तस्मात्। 'अतः प्रातिपदिकात्' च वर्त्तते। पूर्वसूत्रात् 'वा' अप्यस्ति। तदाह—'असंयोगोपधमुपसर्जनं यत्स्वाङ्गम्' इत्यादि। ततः केशानतिक्रान्ता इति विग्रहे ङीष्-विकल्पे सति अतिकेशी—अतिकेशा इति॥ सूत्रेऽसंयोगोपधात् इति उक्तत्वात् संयोगोपधे सति सुगुल्फा इति ङीषभावः एव॥ सूत्रे उपसर्जनात् इति कथमुक्तम्?—स्वाङ्गान्तात् केवल शिखा-शब्दात् ङीष्निवृत्तिः यथा स्यात् तदर्थम्। अतिव्याप्ति अव्याप्ति वारणाय स्वाङ्गं विधा

व्याख्यायते। एतच्च भाष्यात् गृहीतम्। तत्र आद्यं यथा—अद्रवमित्यादि सुगमम्॥ सुमुखा शाला इति ङीषभावः अप्राणिस्थत्वात्। ततश्च "फलमुखी कारणमुखी चानवस्था इत्यादि प्रयोगाः प्रामादिकाः" इति मनोरमायां स्पष्टम्; विषमुखी, सर्वतोमुखी इत्यादयः अभियुक्तप्रयोगात् साधवः॥ द्वितीयं व्याख्यानं यथा:—अतस्थमित्यादि। अत्र तत्शब्देन प्राणिन् एव परामृश्यते। ततः अप्राणिस्थमपि प्राणिनि दृष्टं स्वाङ्गमिति भावः। ततः सुकेशा—सुकेशी वा रथ्या सिध्यति॥ तृतीयं स्वाङ्गलक्षणं यथा—तेन चेत् इत्यादि। 'तेन' प्राणिस्थेन अङ्गावयवविशेषेण 'तत्' अप्राणिद्रव्यं प्रतिमादि 'तथा' प्राणिद्रव्यवत् 'युतं' सम्बद्धं 'चेत्' यदि भवति। तेन सुस्तनी—सुस्तना वा प्रतिमा इति ङीष्विकल्पेन सिध्यति॥

## ७११। नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च। ४।१।५५॥

**दी—। एभ्यो वा ङीष् स्यात्। आद्ययोः बह्वच्लक्षणोनिषेधो बाध्यते, पुरस्तादपवाद न्यायात्। ओष्ठादीनां पञ्चानां तु 'असंयोगोपधात्' इति पर्य्युदासे प्राप्ते वचनं, मध्ये अपवादन्यायात्। सहनञलक्षणस्तु प्रतिषेधः परत्वादस्य बाधकः। तुङ्गनासिकी—तुङ्गनासिका इत्यादि। नेह—सहनासिका, अनासिका। अत्र वृत्तिः "अंगगात्रकण्ठेभ्यो वक्तव्यम्" (वा ङीष् इति शेषः)—स्वङ्गी, स्वङ्गा इत्यादि। एतच्च अनुक्तसमुच्चयार्थेन चकारेण संग्राह्यमिति केचित्। 'भाष्याद्यनुक्तत्वात् अप्रमाणम्' इति प्रमाणिकाः॥**

ङीष् is optional after these seven स्वाङ्ग words e.g., नासिका, उदर, ओष्ठ &c. As regards the first two words, here, the prohibition of ङीष् brought forward by the next rule "न क्रोडादिबह्वचः" is nullified. This is owing to the maxim "पुरस्तादपवादाः अनन्तरान् विधीन् बाधन्ते नोत्तरान्"। Thus this present अपवाद सूत्र of the previous सामान्यसूत्र स्वाङ्गात्", bars its immediate next rule and nt eother further rules e.g., "सहनञ्विद्यमानपूर्वाच्च" here. So we get तुङ्गनासिकी—तुङ्गनासिका

with optional ङीष् but सहनासिका, अनासिका without ङीष्। As regards the other five words ओष्ठ &c. the prohibition of ङीष् implied in the wording of the prior sutra 'असंयोगोपधात्' being due, the present rule nullifies that prohibition ; this is owing to the maxim "मध्ये अपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्"। Thus the prohibitory rule "सहनञ्विद्यमानपूर्वाच्च" being पर bars this present rule totally. The Kasika Vritti here adds optional ङीष् after the words अङ्ग, गात्र and कण्ठ। This being collected owing to चकार in the sutra, which चकार gathers all that are not mentioned. But authorities declare this as unauthoritative being not mentioned in the महाभाष्य।

मित—। 'वा' इति 'ङीष्' इति द्वयं वर्त्तते। पूर्वसूत्रात् 'स्वाङ्गात्' 'उपसर्जनात्' इत्यप्यस्ति। एवं चेत् तदा पूर्वसूत्रेणैव सिद्धे किमर्थं पृथग्वचनम्? इत्यत्राह —आद्ययोरिति। नासिकोदर शब्दयोः "न क्रोड़ादिबह्वचः" इति उत्तरसूत्रेण बह्वच-लक्षणनिषेधे सति ङीषर्थं तन्निषेधो वार्य्यते ; यतः अयं 'स्वाङ्गात्—' इत्यस्य अपवाद-सूत्रम्सत् अनन्तरं निषेधसूत्रं "न क्रोड़ादिबह्वचः" इत्येतत् बाधते, न तु ततः उत्तर-सूत्रं "सहनञ्—" इत्येतत् अपि। कथमेतत् ज्ञायते, तदाह—'पुरस्तादपवादन्यायात्' इति। ततश्च तुङ्गनासिकी—तुङ्गनासिका इति विकल्पङीषा सिध्यति, किन्तु सह-नासिका अनासिका इत्यादौ तु ङीषभावो भवत्येव। एवं ओष्ठादिपञ्चशब्दानां संयोगो-पधत्वात् पूर्वसूत्रे 'असंयोगोपधात्' इति ङीष् निषेधे सति अनेन सूत्रेण ङीष्विकल्पो विधीयते। कथमेतत्—मध्येपवादन्यायात् ("मध्ये अपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्" इति)। ततश्च "सहनञ्विद्यमानपूर्वाच्च" इति सूत्रं परत्वात् सूत्रमेतत् बाधते एव॥ अत्र काशिकाग्रन्थे "अङ्गगात्रकण्ठेभ्यश्च" इति दृश्यते। सूत्रे चकारस्य अनुक्त समुच्चयार्थत्वात् तत् गृह्यते। किन्तु सर्वमेतत् भाष्ये अनुक्तत्वात् हेयम्॥

**दी—। अत्र वार्त्तिकानि—'पुच्छाच्च'** (वा ङीष् इति)। **सुपुच्छी सुपुच्छा। 'कबरमणिविषशरेभ्यो नित्यम्'** (कबरादिपूर्वात् पुच्छशब्दात् नित्य

ङीष् इत्यर्थः )—कवरं चित्रं पुच्छं यस्याः सा कवरपुच्छी मयूरी इत्यादि। "उपामानात्पक्षाच्च पुच्छाच्च"। नित्यमित्येव। उलूकपक्षी शाला। उलूकपुच्छीसेना।

Eng.—Easy.

मित—। सुगमा ॥

५१२। न क्रोड़ादिवह्वचः। ४।१।५६॥

दी—। क्रोड़ादेः वह्वचश्च स्वाङ्गात् न ङीष्। कल्याणक्रोड़ा। अश्वानामुरः क्रोड़ा। आकृतिगणोयम्। सुजघना॥

After a उपसर्जन स्वाङ्गवाचक word which is under the क्रोड़ादि list or which has more than two vowels in it does not take ङीष् in the fem. Thus कल्याणी क्रोड़ा यस्याः=कल्याणक्रोड़ा without ङीष् (here "स्त्रियां पुंवत्—" gives पुंवद्भाव in कल्याणी)। क्रोड़ा means the breast of horses. The क्रोड़ादि list is an open one. So also सुजघना where जघन has more than two vowels does not take ङीष् in the feminine.

मित—। क्रोड़ा आदिर्यस्य स क्रोड़ादिगणः। स च गणो यथा :—क्रोड़, नख, खुर, गोखा, उखा, शिखा, वाल, शफ, शुक्र; आकृतिगणोयम्; तेन—भग, गल, घोण, नाल, भुज, गुद, कर इत्यादि॥ कल्याणी क्रोड़ा अस्याः इति वहुव्रीहौ पुंवद्भावे कल्याणक्रोड़ा इत्यत्र क्रोड़ाशब्दस्य क्रोड़ादिगणत्वात् ङीषनिषेधः॥ वहु अच् यस्य॥ क्रोड़ादिश्च वह्वच् च इति समाहारद्वन्द्वः॥ वह्वचलक्षणनिषेधो यथा—सुजघना॥ हरदत्तादिमते क्रोड़ा इति नित्यस्त्रीलिङ्गः शब्दः एव गणे पठ्यते। ततः आह—"अश्वानाम् उरः क्रोड़ा"। अस्य उपसर्जनत्वे सति क्रोड़ इति जाते 'स्वाङ्गाच्चोप—' इति ङीषि प्राप्ते तन्निषिध्यते॥ कल्याणक्रोड़ी इति तु क्रोड़शब्दादेव विहितःइति रक्षितः॥

५१ । सहनञ्विद्यमानपूर्वाच्च। ४।१।५७॥

दी—। 'सह' इत्यादि त्रिकपूर्वात् न ङीष्। सकेशा। अकेशा। विद्यमाननासिका।

A स्वाङ्ग उपसर्जन word preceded by the three words सह, नञ् and विद्यमान does not take ङीष् in the fem. So सकेशा &c.

मित—। "सहनञ्विद्यमानानि" इति द्वन्द्वः। तानि पूर्वाणि यस्य स्वाङ्गस्य। तस्मात् इत्यर्थः। अतः "सहनञ्विद्यमानपूर्वात्" इति एतत् 'स्वाङ्गात्' इत्यस्य विशेषणम् ॥

**५१४। नखमुखात् संज्ञायाम् ४।१।५८ ॥**

**दी—। ङीष् न स्यात्। शूर्पणखा ("पूर्वपदात् संज्ञायामगः" इति अत्र णत्वम्)। गौरमुखा। संज्ञायाम् किम्?—ताम्रमुखी कन्या (संज्ञात्वाभावे सति ङीष् तु स्यात् एव)।**

ङीष् after these two words नख and मुख does not come if a उपसर्जन word ending in these denote a designation. Thus शूर्पणखा without ङीष् for it implies the name of Ravana's sister. Here णत्व is by the rule "पूर्वपदात् संज्ञायाम् अगः"। Why do we say संज्ञायाम् in the rule? Witness ताम्रमुखी with ङीष् for the word does not denote a designation here.

मित—। सुगमा ॥

**५१५। दिक्पूर्वपदात् ङीप्। ४।१।६० ॥**

**दी—। दिक्पूर्वपदात् स्वाङ्गान्तात् प्रातिपदिकात् ङीषः ङीवादेशो स्यात्। प्राङ्मुखी। (ङीष्ङीपोः तु स्वरे विशेषः, ततः आह—) आद्युदात्तं पदम्।**

A प्रातिपदिक ending in some स्वाङ्गवाचक word and preceded by a दिग्वाचक word takes ङीप् in place of ङीष् in the fem. The result is the difference of pronunciation. Thus we get प्राङ्मुखी with ङीप् which yields आद्युदात्त।

मित—। अनुवृत्तिस्तु पूर्ववत् ॥ सुगमा ॥

५१६ । वाहः । ४।१।६२ ॥

दी—। वाहन्तात् प्रातिपदिकात् ङीष् स्यात्। ङषेवानुवर्त्तते न ङीप्। दित्यवाट् च मे दित्यौही च मे ॥

A प्रातिपदिक ending in the word वाह् takes ङीष् in the fem. Here ङीष् is ordered and not ङीप् as we find in the just preceding rule. For the ङीप् of the prior rule is not a स्वरित and अधिकार goes with स्वरित pronunciation of a word, thus the rule is "स्वरितेनाधिकारः"। दित्यं वहतीति दित्य+वह+ण्वि=दित्यवाह्। ङीषि सम्प्रसारणे "वाहः ऊठ्" ततः "एत्येधत्यूठ्सु" इति वृद्धिः 'दित्यौही' इति ॥ (गवां षण्मासात्मके वयसि सति तृतीयं वयः दित्यशब्देन बोध्यते इति) ॥

मित—। सुगमा ॥

५१७ । सख्यशिश्वीति भाषायाम् । ४।१।६२ ॥

दी—। इति शब्दः प्रकारे; 'भाषायाम्' इत्यस्यानन्तरं द्रष्टव्यः। तेन छन्दस्यपि। सखी (सखि+ङीष्)। अशिश्वी (अविद्यमानः शिशुः यस्याः इति ङीषि सति अशिश्वी; "अशिश्वी शिशुना विना" इत्यमरः। (छन्दसि उदाहरणं यथा—) आधेनवो धुनयान्तामशिश्वीः।

The word इति in this sutra denotes 'प्रकार' and is to be construed after the word 'भाषायाम्' here. Thus सखी, अशिश्वी भाषायाम् इति। And then the result is that these are sometimes used in Vedas also.

मित—। सुगमा ॥

५१८ । जातेरस्त्रीविषयात् अयोपधात् । ४।१।६३ ॥

दी—। जातिवाचि यन्न च स्त्रियां नियतम्, अयोपधं ततः नित्यं ङीष् स्यात्।

A जातिवाचक word (i.e., a word denoting a class) and which is not always feminine and has not य as its penultimate takes always ङीष् in the fem. So we get वृषभ+ङीष्=वृषभी &c. Now the question arises what is जाति ? And we look forward.

मित—। 'जातेः' इत्यनेन जातिवाचि गृह्यते यतः शब्दे एव न तु अर्थे कार्यं दृश्यते। 'स्त्री विषयः यस्य न स्यात्' इत्यर्थे 'अस्त्रीविषयात्' इति उक्तम्। 'अनित्य-स्त्रीलिङ्गात्' इत्यर्थः। यः उपधा यस्य तस्मात्। तादृशात् जातिवाचकशब्दात् इत्यर्थः ङीष् नित्यं स्यात्। अधुना अव्याप्ति—अतिव्याप्ति—वारणाय वैयाकरणसम्मतं जातिशब्दं लक्षणेन प्रतिष्ठापयति—

**दी—। आकृतिग्रहणा जातिः**—( इति प्रथमजातिलक्षणम् —**अनुगत-संस्थानव्यङ्ग्या इत्यर्थः। तटी ॥** ( एकरूपाकारव्यङ्ग्या इत्यर्थः ) ॥

**लिङ्गानाञ्च न सर्वभाक्।**

**सकृदाख्यातनिर्ग्राह्या—**

**असर्वलिंगत्वे सति एकस्यां व्यक्तौ कथनात् व्यक्त्यन्तरे कथनं विनापि सुग्रहा जातिरिति लक्षणान्तरम्। वृषली। सत्यन्तं किम् ?—( असर्व लिङ्गत्वे, सति इति किमर्थमुक्तम् )—शुक्ला। सकृत् इत्यादि किम् ?—देवदत्ता (संज्ञात्वात् न सकृत् आख्यानसुगमा ) ॥—गोत्रं च चरणैः सह ॥**

**अपत्यप्रत्ययान्तः शाखाध्येतृवाची शब्दो जातिकार्यं लभते इत्यर्थः। औपगवी। कठी। बह्वृची ॥ ब्राह्मणी इत्यत्र तु शार्ङ्गरवादि पाठात् ङीना ङीष् बाध्यते ॥ जातेः किम् ?—मुण्डा ॥ अस्त्रीविषयात् किम् ?—बलाका। अयोपधात् किम् ?—क्षत्रिया ॥ 'योपधप्रतिषेधे हयगवयमुकय मनुष्यमत्स्यानाम् अप्रतिषेधः' ( वा )—हयी, गवयी, मुकयी। हलस्तद्धितस्य इति यलोपः, ( ततः ) मानुषी ॥ मत्स्यस्य ङ्याम् ( वा )—मत्सी ॥**

A जाति word is one which goes to all other similar (एकरूप) objects, e.g., तटी with ङीष् after जाति word तट; (तट going to all other of similar appearance). This is the first

teristic of a जाति word. And second characteristics is that it should not admit of all the genders and at the same time being stated of one object go to other (similar) objects without further explanation. Thus वृषली with ङीष् after जातिवाचक वृषल। Here वृषल is a जाति in as much as it is not getting all genders after it and it applies to all वृषल if stated with reference to one. Why do we say असर्वलिङ्गत्वेसति in the Vritti here? Witness शुक्ली which is fem. of शुक्ल which शुक्ल being विशेष्यनिघ्न takes all genders and is hence not a जाति word, so does not takes ङीष् in the fem. Why do we say सकृदाख्यातनिर्ग्राह्या for जाति in our explanation? Witness देवदत्ता which being a name cannot be known without उपदेश and neither does it go to other similar objects; so not being a जाति word it does not take ङीष् but टाप् in the fem. A further characteristic of जाति in grammar is that words ending in अपत्यप्रत्यय and words denoting reciters of some Vedic branch of study are to be treated as जाति word. So we get औपगवी, कठी &c. with जातिलक्षण ङीष् in the fem. The word ब्राह्मणी however being included in the शार्ङ्गरवादि list takes ङीन् and not ङीष् after it yielding ब्राह्मणी॥ Why do we say जातेः in the sutra? witness मुण्डा with टाप् and not ङीष् for it is not a जाति word. Why do we say say अस्त्रीविषयात् in the sutra?—Witness बलाका without ङीष् for it is नित्यस्त्रीलिङ्ग। Why do we say अयोपधात् in the sutra?—Witness क्षत्रिया without ङीष् though a जाति word, for it is योपध॥ With regard to prohibition of जातिलक्षण ङीष् in योपध words, do not count the words—हय, गवय, मुकय, मनुष्य and मत्स्य; in other words, these will take जातिलक्षण ङीष् though योपध। So we get हयी, &c. मनुष्य +

ङीष् = मानुषी with यलोप by the rule "हलस्तद्धितस्य"। मत्स्य + ङीष् = मत्सी with यलोप by the Varttika "मत्स्यस्य ङ्याम्" (see ante.)

मित—। सुगमा ॥

## ५१९। पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च । ४।१।६४ ॥

दी—। पाकाद्युत्तरपदात् जातिवाचिनः स्त्रीविषयात् अपि ङीष् स्यात्। ओदनपाकी। शङ्कुकर्णी, शालपर्णी, शङ्खपुष्पी, दासीफली, दर्भमूली, गोवाली,— ओषधिविशेषे रूढ़ा एते।

After जातिवाचक प्रातिपदिक having the word पाक &c., as उत्तरपद and even if these are always fem. take ङीष् in the feminine. The necessity of this sutra apart from the previous one is that it directs ङीष् even after नियतस्त्रीलिङ्ग words denoting जाति and having पाक &c. as final. Thus we get ओदनपाकी &c. The six words शङ्कुकर्णी &c. are names of herbs and are non-derivatives so to say.

मित—। इदं सूत्र 'स्त्रीविषयात्' नियतस्त्रीलिङ्गशब्दात् अपि ङीष' विदधाति इति पूर्वसूत्रे सत्यपि अस्य सूत्रस्य आवश्यकमस्तीव ॥

## ५२०। इतो मनुष्यजातेः । ४।१।६५ ॥

दी—। ङीष् स्यात् ; दाक्षी। योपधादपि—उदमेयस्यापत्यं स्त्री औदमेयी। 'मनुष्य' इति किम्—तित्तिरिः।

इकारान्त words denoting मनुष्यजाति takes ङीष् in the fem. दक्षस्य अपत्यं स्त्री = दक्ष + इञ् + ङीष् = दाक्षी। In spite of अनुवृत्ति of जाति from the sutra "जातेरस्त्रीविषयात्—" जाति is again taken here, so it suggests that here there is cessation of अनुवृत्ति of अयोपध from that very sutra. So ङीष् comes after योपध as well. Thus उदमेयस्यापत्य

स्त्री = औदमेयी (as in दाक्षी)। Why do we say मनुष्यजातेः in the sutra? Witness तित्तिरिः without ङीष् for it signifies पक्षिजाति।

मित—। अत्र जातेः इत्यनुवृत्तौ सत्यामपि 'मनुष्यजातेः' इति ग्रहणं अयोपधनिवृत्त्यर्थम् ततश्चात्र योपधादपि इतः ङीष् स्यादेव॥ 'गोत्रं च चरणैः सह' इति दाक्षि इत्यस्य जातित्वम्॥

२१। ऊङुतः। ४।१।६६॥

दी—। उकारान्तात् अयोपधात् मनुष्यजातिवाचिनः स्त्रियाम् ऊङ् स्यात्। कुरूः। "कुर्वादिभ्यो ण्यः" (इति ण्यप्रत्ययः)। तस्य स्त्रियाम् "अवन्ति कुन्तिकुरुभ्यश्च—" (सूत्र ११९५) इत्यादिना लुक्। अयोपधात् किम्?—अध्वर्युः॥ "अप्राणिजातेश्चारज्ज्वादीनाम् उपसंख्यानम्" (वा)। रज्ज्वादिपर्युदासात् उवर्णान्तेभ्य एव। अलाब्वा, कर्कन्ध्वा। अनयोर्दीर्घान्तत्वेऽपि नोङ्धात्वोरिति विभक्त्युदात्तत्वप्रतिषेधः ऊङः फलम्। प्राणिजातेस्तु कृकवाकुः। रज्ज्वादेस्तु—रज्जुः। हनुः॥

After उकारान्त प्रातिपदिक having no यकार as its penultimate and denoting मनुष्यजाति, ऊङ् comes in the feminine. Thus कुरूणां राजा कुरुः, तस्यापत्यं स्त्री इति कुरु+ण्य=कुरु with elision of the ण्य due by the rule "कुर्वादिभ्यो ण्यः" by a further rule "स्त्रियाम् अवन्ति कुन्ति कुरुभ्यश्च" = कुरु + ऊङ् = कुरूः। Why do we say अयोपधात् in the Vritti here?—Witness अध्वर्यु without ऊङ् for it in योपध। Words that are not प्राणिजातिवाचक and that are not classed under the रज्ज्वादि list take ऊङ् in the fem. Owing to prohibition of रज्ज्वादि list here this applies to उवर्णान्त words and not to उतः only. Thus we get अलाब्वा, कर्कन्ध्वा with ऊङ् after अलाबू etc. The necessity of ऊङ् here after ऊदन्त word अलाबू &c. is for स्वरविशेष only. Thus by the rule "नोङ्धात्वोः" here उदात्तत्व of विभक्ति is barred; so the instance are in third case

singular. As regards प्राणिजाति words ऊङ् does not come and we get कृकवाकुः &c. Words of the रज्ज्वादि list do not take ऊङ् at all and we get रज्जुः, हनुः &c.

मित—। 'अयोपधात्' इति 'मनुष्यजातेः' इति च वर्त्तते। तदाह—'उकारान्तात् अयोपधात् मनुष्यजातिवाचिनः' इत्यादि। कुरूणां राजा = कुरुः, तस्य अपत्य' स्त्री इति कुरु + ऊङ् = कुरूः। अत्र प्रक्रियां दर्शयति—"कुर्वादिभ्यो ण्यः" इति ण्यप्रत्ययः ततः अस्य प्रत्ययस्य "स्त्रियाम् अवन्ति—" इति सूत्रेण लोपः॥ 'अयोपधात्' इति उक्तत्वात् 'अध्वर्यु' इत्यादि योपधत्वेसति ऊङ् न स्यात्॥ रज्ज्वादिव्यतीतानाम् अप्राणिजातिवाचकानाम् अपि ऊङ् स्यात्। अत्र 'उतः' इति न वर्त्तते, यतः भाष्ये-अलाबू इति दीर्घान्तादेव ऊङ् विहितः, किन्तु रज्ज्वादिग्रहणात् 'उकारान्तात्' इति एव वर्त्तते। तदाह—'रज्ज्वादिपर्य्युदासात् उवर्णान्तेभ्यः एव'। ततः अलाबू+ऊङ्, कर्कन्धू + ऊङ् = अलाबू, कर्कन्धू। ऊङन्तात् ऊङ् पुनः किमर्थम् विहितम्? इति दर्शयितुं स्वरे विशेषं वक्ष्यति "नोङ्धात्वोः" इत्यदि सूत्रोदाहरणेन। एवं च विभक्तौ स्वरविशेषं दर्शयितुं तदर्थं च ऊङन्तादपि ऊङः आवश्यकत्वं दर्शयितुं 'अलाब्वा' इत्यादि तृतीयैकवचने उदाहरणम्॥ रज्ज्वादीनाम् ऊङ् न, अतः रज्जुः इत्यादि॥ प्राणिजातेरपि उतः ऊङ् न, अतः कृकवाकुः इति॥ हे सुभ्रु इत्यादिकस्तु 'अरज्ज्वादीनाम्' इति प्रतिषेधात् ऊकारान्तात् शब्दात् ऊङिसति ततः बहुव्रीहौ सम्बुद्धौनदी-लक्षणोह्रस्व॥

## ५२ । बाह्वन्तात् संज्ञायाम् । ४।१।६७ ॥

दी—। स्त्रियामूङ् स्यात्। भद्रबाहूः। संज्ञायाम् किम्:—वृत्त-बाहुः। (असंज्ञात्वात् न ऊङ्)।

Eng.—Easy.

## ५३ । पङ्गोश्च । ४।१।६८ ॥

दी—। पङ्गूः॥ "श्वशुरस्य उकाराकार लोपश्च" (वा)। चादूङ्। पुंयोगलक्षणस्य ङीषोऽपवादः; लिङ्गविशिष्ठ परिभाषया स्वादयः॥ श्वश्रूः।

The word पङ्गु takes ऊङ् in the fem. The word श्वशुर also takes ऊङ् in the fem. and then its उकार and अकार elide. This ऊङ् bars पुंयोगलक्षण ङीष् here due by the rule "पुंयोगादाख्यायाम्". The अधिकारसूत्र—ङ्याप् प्रातिपदिकात् apparently does not cognise ऊङन्त word, so how can स्वादि &c. come after ऊङन्त words. The answer on this point is that the maxim "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्" suggests that like श्वशुर, श्वश्रू its fem. is also to take स्वादि ( विभक्तिप्रत्यय ) after it.

मित— । लिङ्गविशिष्ट इति—"ङ्याप्प्रातिपदिकात्" इत्यधिकारसूत्रे ऊङन्तग्रहणाभावात् ऊङन्तस्य श्वश्रू शब्दस्य कथं प्रातिपदिकत्वं कथं वा अस्मात् शब्दात् स्वादयः भवन्ति । अत्रोत्तरमाह—"प्रातिपदिकग्रहणे लिङ्गविशिष्टस्य अपि ग्रहणम्" इति परिभाषाबलात् श्वशुर शब्दात् स्वादौ सति श्वश्रूशब्दादपि तत् भवति ।

## ५२४ । ऊरूत्तरपदात् औपम्ये । ४।१।६९ ॥

**दी— । उपमानवाचि पूर्वपदम् ऊरूत्तरपदं यत् प्रातिपदिकम् तस्मादूङ् स्यात् । करभोरूः ।**

A प्रातिपदिक having its first word signifying comparison (उपमान ) and having its final word ऊरु takes ऊङ् in fem. Thus करभाविव ऊरू यस्याः = करभोरु+ऊङ्=करभोरू ॥ "मणिबन्धादाकनिष्ठं करस्य करभो बहिः" इत्यमरः ॥

मित— । ऊरुः ऊरुशब्दः उत्तरपदं यस्य तस्मात् । तादृशात् प्रातिपदिकात् इत्यादि सुगमा ॥ कथं तर्हि "पीवरोरु पिबतीव बर्हिणः" इति कुमारः ? यतः अत्र औपम्याभावात् ऊङः प्रवृत्तिर्नयुक्ता । उच्यते—संज्ञापूर्वको विधिरनित्यः इति 'पीवरोरु' शब्दे गुणाभावात् साधुः । अथवा—"अप्राणिजातेः चारज्ज्वादीनाम्—" इति ऊरुशब्दात् ऊङि सति बहुव्रीहिः च ततः संबु । नदीलक्षणो ह्रस्वः ॥

५२५। संहितशफलक्षणवामादेश्च। ४।१।७० ॥

दी—। अनौपम्यार्थं सूत्रम्। संहितोरूः। सैव शफोरूः। शफौ-खुरौ, ताविव संश्लिष्ठत्वात (युक्तत्वात् इत्यर्थः) उपचारात् (न तु अत्र उपमानत्वं बोध्यम्)। लक्षणशब्दात् 'अर्शआद्यच्; लक्षणोरूः। वामोरूः (वामौ सुन्दरौ उरू यस्याः इति)। "सहितसहाभ्यां चेति वक्तव्यम्" (वा) (ऊङ् इति शेषः)। (सहितग्रहणेन संहितग्रहणं मास्तु अतः अर्थभिन्नत्वं दर्शयन् आह—) हितेन सह सहितौ ऊरूः यस्याः सा सहितोरूः। सहेते इति सहौ ऊरू यस्याः सा सोहोरूः। यद्वा—विद्यमानवचनस्य इति सहशब्दस्य उर्वतिशय-प्रातिपादनाय प्रयोगः।

The word ऊरु preceded by the words संहित, शफ, लक्षण and वाम but not implying औपम्य, takes ऊङ् in the fem. Thus the sutra is for अनौपम्यार्थ। Thus संहितोरूः, शफोरूः &c, with ऊङ्। शफ here means by transference शफौ इव युक्त and not उपमान at all- The word लक्षण is a noun so to make it an adjective Bhattoji says लक्षण + अर्श आदि अच=लक्षण having good signs तादृशौ ऊरू=लक्षणोरू with ऊङ्। Similarly वामोरू—(वाम meaning beautiful). The Varttika here says that ऊरु also preceded by सहित and सह। Here don't think that सहित includes संहित also. To remove this doubt the author shows by pointing out the difference of meaning here between संहित and सहित, so the reading is 'हितेन सहसहितौ ऊरू यस्याः" &c. In सहोरू सह implies विद्यमानता and then सहोरू means विद्यमानातिशयः in ऊरु this the author says by 'यद्वा—विद्यमानवचस्य'।

मित—सुगमा—।

५२६। संज्ञायाम्। ४।१।७२ ॥

दी—। कद्रुकमण्डल्वोः संज्ञायाम् स्त्रियामूङ् स्यात्। कद्रूः।

कमण्डलूः ॥ संज्ञायाम् किम् ?—कद्रुः । कमण्डलुः ( असंज्ञात्वात् न ऊङ् ) अच्छन्दोर्थं वचनम् ॥

Eng—do denote संज्ञा the words कद्रु and कमण्डलु take ऊङ् in the fem. The rule is for non-vedic purpose.

मित—। "कद्रु कमण्डल्वोश्छन्दसि" ( ४।१।७१ ) इति पूर्वसूत्रम् अत्र वर्त्तते । तदाह—"कद्रुकमण्डल्वोः संज्ञायाम् स्त्रियाम् ऊङ् स्यात्" । कद्रु इति नागमातुः संज्ञा, कमण्डलूः इति कस्यचित्म् गस्य संज्ञा ॥ असंज्ञात्वात् ऊङ् तु न स्यादेव इत्ये-तदाह— 'संज्ञायां किम्, इत्यादिना प्रत्युदाहरणेन ॥ पूर्वसूत्रे 'छन्दसि' इति उक्तत्वात् लौके संज्ञायाम् च अप्राप्तौ पृथक् सूत्रारम्भः तदाह "अच्छन्दोर्थं वचनम्" ।

## ५२७ । शार्ङ्गरवाद्यञो ङीन् । ४।१।७३ ॥

दी—। शार्ङ्गरवादेः अञो योऽकारस्तदन्ताच्च जातिवाचिनो ङीन् स्यात् । शार्ङ्गरवी । बैदी । 'जातेः' इत्यनुवृत्तेः पुंयोगे ङीषेव । "नृनरयोर्वृद्धिश्च" इति गणसूत्रम् । नारी ।

ङीन् in the fem. is attached to जातिवाचक अकारान्त words which अकार is of अञ् of the शार्ङ्गरवादि list. Thus शृङ्गरोरपत्यं स्त्री = शार्ङ्गरवी । बैदस्यापत्यं स्त्री = बैदी । As the word 'जातेः' comes down here so in पुंयोग the words of the शार्ङ्गरवादि list will take ङीष् । The गणसूत्र in this list is that the words नृ and नर takes वृद्धि when ङीन् follows yielding नारी ।

मित—। 'शार्ङ्गरवादि' इति लुप्तपञ्चमीकं पदम् । 'अतः' इति 'जातेः' इति च वर्त्तते, तदाह—'शार्ङ्गरवादेरञो योकारः तदन्ताच्च जातिवाचिनः इत्यादि । शृङ्गरोरपत्यं स्त्री इति शृङ्गरु + अण् = शार्ङ्गरवः 'गोत्रं च चरणैः सह', इत्यस्य जातित्वम् । जातित्वात् ङीषि प्राप्ते अनेन ङीनेव विधीयते ॥ "अञोऽकारात्" ङीन् विहितः न । ?। व [illegible] । 'इ सैनी' इत्यत्र ङीषेव न तु ङीन् ।

[illegible] [illegible] ।' 'अतम' इति तु । ततक्ष

अत्रोलुप्तत्वेन अत्र अकारस्य अत्रवयवत्वाभावात् ङीनपि न ॥ शार्ङ्गरवादिसूत्रे 'जातेः' इत्यनुवर्त्तनात् जातेरन्यत्र पुंयोगे तु ङीषेव। इत्याह—'जातेः इत्यनुवृत्तेः" इत्यादि ॥ शार्ङ्गरवादि गणोयथा—शार्ङ्गरव, कापटव' गौग्गुलव, ब्राह्मण, गौतम, कामण्डलेय, ब्राह्मणकृतेय, आनिचेय, आनिधेय, आशोकेय, वात्स्यायन, मौञ्जायन, कैकसेय, काव्य, शैव्य, एहि, पर्य्येहि, आश्मरथ्य, औदपान, अराल, चण्डाल, वतण्ड, भोगवद्गौरिमतोः संज्ञायां घादिषु नित्यं ह्रस्वार्थम्। "नृ नरयोर्वृद्धिश्च" इति शार्ङ्गरवादि। पुत्र-शब्दोऽप्यत्र पठ्यते, तेन पुत्री शैलपुत्री इत्यादि सिद्धम् ॥

५२७। यङश्चाप्। ४।१।७४ ॥

दी—। **यङन्तात् स्त्रियां चाप् स्यात्। यङ इति ष्यङ्ष्यङोः सामान्य-ग्रहणम्। आम्बष्ठ्या** ( अम्बष्ठस्यापत्यं स्त्री इति "वृद्धेत्कोसलाजादात्" इति ञ्यङ् गोत्रत्वेन जातित्वात् ङीषि सति वचनम् ; ततश्चाप् ); **कारीषगन्ध्या** ( करीषगन्धेः अपत्यं स्त्री इति "अणिञोरनार्षयोः—इति ष्यङ् )। "**षाच्च यञश्चाप् वाच्यः**" ( वा ) [ षकारात् परः यो यञ् तदन्तादपि चाप् ] ; **पौतिमाष्या** ( पूतिमाषस्यापत्यं स्त्री इति गर्गादियञ् )।

चाप् comes in the fem. after यङन्त जातिवाचक words. By यङ् both ञ्यङ् and ष्यङ् are taken into account. Thus आम्बष्ठ्या and कारीषगन्ध्या are formed with चाप् and not with ङीष्। Similarly the यञ् after षकार takes चाप् also and we get पौतिमाष्या।

मित—सुगमा।

५२८। आवट्याच्च। ४।१।७५ ॥

दी—। **अस्मात् चाप् स्यात्। यञश्चेति ङीपोपवादः। अवटशब्दो गर्गादिः। आवट्या।**

चाप् also comes after the गर्गादि word अवट। Thus we get आवट्या in the fem. and not आवटी with ङीप् by the rule "यञश्च" (ante).

मित—। सुगमा।

५३० । तद्धिताः । ४।१।७६ ॥

दी—। आपञ्चमसमाप्तेः अधिकारोऽयम् ।

This is an अधिकार सूत्र and goes up to the end of the fifth chapter of Panini's Astadhyayi.

मित—। सुगमा ।

५३१ । यूनस्तिः । ४।१।७७ ॥

दी—। युवन्शब्दात् तिप्रत्ययः स्यात् स च तद्धितः । लिंगविशिष्ट परिभाषया सिद्धे तद्धिताधिकार उत्तरार्थः । युवतिः । अनुपसर्जनादित्येव —बहवो युवानो यस्यां सा, बहुयुवा । युवतीति तु यौतेः शत्रन्ताद् ङीपि बोध्यम् ॥

॥ इति स्त्रीप्रत्ययाः ॥

The word युवन् takes the affix ति in the fem. and this is a तद्धित । The rule "ङ्याप्प्रातिपदिकात्" no doubt directs प्रातिपदिकत्व of ङी and आबन्त words in fem. but, then तिप्रत्ययान्त युवतिशब्द cannot be a प्रातिपदिक, so it is read here under the अधिकार "तद्धिताः" । But Bhattoji says that प्रातिपदिकत्व of युवति is established by लिङ्गविशिष्टपरिभाषा, i. e., युवन् being प्रातिपदिक its fem. is also so. So तद्धिताधिकार here is for further rules. Thus युवतिः । This ति bars the usual नान्त लक्षण ङीप् here. Remembre that 'अनुपसर्जनात्' comes here. So in बहुयुवन्, ति does not come in. But the rules "अनो बहुव्रीहेः" and "डाबुभाभ्यामन्यतरस्याम्" will apply here. Now the question arises how are we to defend the दीर्घ ईकारान्त word युवती ? This is formed with यु+शतृ+उगित्वात् ङीप्=युवती ॥

**Here end fem. affixes.**

मित—। युवनशब्दात् स्त्रियां तिप्रत्ययः स च तद्धितः। अत्र तद्धितानुवृत्ति-रुत्तरार्था बोध्या। यतः अत्र सूत्रे तिप्रत्ययान्तस्य प्रातिपदिकत्वार्थं लिङ्गविशिष्ट-परिभाषा एव आश्रयणीयम्। न च तिप्रत्ययस्य तद्धितत्वेन अस्य प्रातिपदिकार्थम् तद्धितग्रहणमत्र आवश्यकमेव, यतः प्रातिपदिकात्वाभावेऽपि उक्तपरिभाषया एव तिप्र-त्ययान्तात् सुबाद्युत्पत्तिः स्यादेव। अतः आह—'तद्धिताधिकारः उत्तरार्थः' इत्यादि। केचित्तु लिङ्गविशिष्टपरिभाषायाः अनित्यत्वमाश्रित्य तिप्रत्ययान्तयुवतिशब्दस्य प्रातिप-दिकत्वविधानाय तिप्रत्ययस्य तद्धितत्वं विधातुम् अत्र तद्धितग्रहणमावश्यकं न तु उत्तरार्थम् इत्याहुः इति शब्दरत्ने द्रष्टव्यम्॥ ततः युवतिः। अत्र 'अनुपसर्जनात्' इत्यस्त्येव। ततः बहुयुवा इत्यत्र तिप्रत्ययो न भवति, किन्तु "अनोबहुव्रीहेः" "डाबुभाभ्याम्—" इति सूत्रयोः अवकाशः स्यादेव। ननु युवती इति दीर्घान्तपाठे तु युधातोः शत्रन्तात् उगित्वात् ङीपि ज्ञेयम्। "अन्ये युधातोः औणादिके बाहुलकात् तिप्रत्यये कित्वात् गुणाभावे उवङि च सति, उगित्वात् ङीपि युवती इति सिध्यति इत्याहुः" इति बाल-मनोरमायां स्पष्टम्॥

इत्यविरतविद्यावितरणनिपुणस्य नानाशास्त्रदीक्षस्य मसूयावासव्यस्य कायस्थस्य प्रथितयशसः सुगृहीतनाम्नः स्वर्गतस्य श्रीसारदारञ्जनविद्याविनोदस्य सूनुना श्रीकुमुद-रञ्जनेन कृतायाः वैयाकरणसिद्धान्तकौमुद्याः प्रथमभागस्य द्वितीयः खण्डः॥

॥ इति सम्पूर्णोऽयं खण्डः॥

**यदनुक्तं दुरुक्तं वा मतिमोहसमुद्भवम्।**
**सन्तः सन्ततकारुण्यास्तत्सर्वं मर्षयन्तुमे॥**

---

PRINTED BY L. M. RAY. Lalit Press, 116, Manicktolla St. Cal.

## ..atriculation Sanskrit 1928 &c.,

# এস, রায়ের

# প্রবেশিকা ব্যাখ্যা

# সিন্ধুভাষিণী


শ্রীকুমুদরঞ্জন রায়, এম, এ,

কর্ত্তৃক পরিবর্দ্ধিত।



পঞ্চাংশ নূতন সংস্করণ

PUBLISHED BY

MANORANJAN RAY

FOR

**S. RAY & CO,**

*11/1, Esplanade, and 90/4A Harrison Road,*

*CALCUTTA.*

দুই টাকা মাত্র।

# সূচীপত্র

## পঞ্চতন্ত্র



## হিতোপদেশ



## হিতোপদেশ



## বিষ্ণুপুরাণ